# भामतीदृष्ट्या चतुःसूत्रीशांकरभाष्यसमीक्षा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधि (पी-एच.डी.) रित्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः





निर्देशकः

प्रो. पारसनाथद्विवेदी
आचार्यः, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी (उ.प्र.)

अनुसन्धाता

पूर्णानन्दो ब्रह्मचारी
वेदान्ताचार्यः, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी (उ.प्र.)



पं.सं.-२७११/४११२ दि.-२७/१/२००१

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२

संवत् २०६१ कार्तिकपूर्णिमा सन् २००४




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधि (पी-एच.डी.) रित्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः

# भामतीदृष्ट्या चतुःसूत्रीशांकरभाष्यसमीक्षा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधि (पी-एच.डी.) रित्युपाधये
प्रस्तुतोऽयं शोधप्रबन्धः




निर्देशकः

प्रो.पारसनाथद्विवेदी
आचार्यः, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी (उ.प्र.)

अनुसन्धाता

पूर्णानन्दो ब्रह्मचारी
वेदान्ताचार्यः,वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी (उ.प्र.)

पं.सं.-२७११/४११२ दि.-२७/१/२००१

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२

संवत् २०६१ कार्तिकपूर्णिमा सन् २००४

# निर्देशकस्य संस्तुतिः

श्रीमता विदुषा श्रीपूर्णानन्दब्रह्मचारिणा सम्प्रति सम्पूर्णानन्दस्वामिना महताश्रमेण यत्नेन च कृतोऽयं शोधप्रबन्धः मया निपुणं निरीक्षितः। 'भामतीदृष्ट्या चतुःसूत्रीशांकरभाष्यसमीक्षा' नामकः शोधप्रबन्धः पूर्णानन्देन निष्पादितः परिपूर्णोऽतीवोपयोगी छात्राणां तत्त्वजिज्ञासूनाञ्च। अत्रानेन विदुषां भामतीव्याख्यायाः सटीकायाः भाष्योपयुक्तानां तत्त्वानां सूक्ष्मेक्षिया समीक्षा कृतास्ति। स्थाने स्थाने च तत् सम्बद्धानां प्रकृतोपयागिनामन्येषामपि प्रमेयाणां संग्रहः कृतोऽस्ति। नूतनानि तत्त्वानि शास्त्रालोडनं कृत्वा प्रकाशितानि। अतः शोधप्रबन्धमिमं विद्यावारिध्युपाधिप्रदानक्षमं मत्वाऽहं परीक्षणार्थं संस्तौमि।

संस्तुतिपूर्वकं परीक्षणार्थं अग्रसारयामि

[signature]

3-12-04

आचार्य एवं अध्यक्ष
वेदान्त विभाग
सं०सं०वि०वि०, वाराणसी

पारसनाथद्विवेदी (signature)

पारसनाथद्विवेदी
आचार्यः, वेदान्तविभागे
सं.सं.वि.वि.वाराणसी।

# विषयानुक्रमणिका

## निर्देशकस्य संस्तुतिः

## मङ्गलाचरणम्

## कृतज्ञताज्ञापनम्

## भूमिका

## प्रथमोऽध्यायः


| | | |
|---|---|---|
| १. | **अनिर्वाच्याविद्यानिरूपणम्** | १-२५ |
| | ☆ भूतभौतिकानां विवर्तत्वोपपादनम् | १ |
| | ☆ अविद्याद्वयोपपत्तिः | २ |
| | ☆ भावरूपाविद्यायां प्रमाणं प्रयोजनञ्च | ७ |
| | ☆ चित्सुखीयाज्ञानसाधकानुमानविमर्शः | ८ |
| | ☆ सुखादिवृत्त्यभ्युपगमविमर्शः | १२ |
| | ☆ अनिर्वचनीयाज्ञानसाधकं विवरणोक्तमनुमानम् | १५ |
| | ☆ कार्यकारणयो र्भेदाभेदविमर्शः | १७ |
| | ☆ अद्वैतसिद्धौ अज्ञानेऽनुमानविमर्शः | २२ |
| २. | **वेदान्तमीमांसाशास्त्रारम्भकर्तव्यताविचारः** | २५-३९ |
| | ☆ अत्रापेक्षसमाधानम् | २६ |
| | ☆ पृथक्शास्त्रत्वोपपत्तिः | ३३ |
| ३. | **दर्शनश्रवणादीनां विधित्वविमर्शः** | ४०-४९ |
| ४. | **अध्यासस्वरूपम्** | ५०-५५ |
| ५. | **अध्यासेऽनुपपत्तिप्रदर्शनं तत्परिहारश्च** | ५५-६१ |

## द्वितीयोऽध्यायः


१. अध्यासस्य मिथ्यात्वम् ६२

२. जगन्मिथ्यात्वम् ६२-७०

☆ त्रिविधसत्यत्वविमर्शः ६३

☆ सृष्टिप्रयोजनविमर्शः ६९

३. अनिर्वचनीयत्वस्वरूपम् ७०-७३

४. ख्यातिविमर्शः ७३-८१

☆ असत्ख्यातिखण्डनम् ७५

☆ अन्यथाख्याति निरासः ७७

☆ दृष्टिसृष्टिवादः ७९


## तृतीयोऽध्यायः


१. अथशब्दार्थविचारः ८२-१६०

☆ मङ्गलार्थत्व विचारः ९०

☆ अथ शब्दस्य पूर्वप्रकृतापेक्षत्वार्थविमर्शः ९३

☆ अत्र भामतीकाराणामभिप्रायः ९३

☆ स्वाध्यायानन्तर्यविचारः ९५

☆ वाक्यार्थज्ञाने कर्मानुपयोगः १००

☆ तत्त्वज्ञाने कर्मान्वयः १०१

☆ मनसः ब्रह्मसाक्षात्कारहेतुत्वम् ११०

☆ शब्दापरोक्षवादखण्डनम् १११

☆ ब्रह्मणो वृत्तिविषयत्वविचारः ११५

☆ उभयमतसमीक्षा १२७

☆ सन्न्यासस्यात्मज्ञानाङ्गत्वसाधनम् १३२

☆ कर्मावबोधब्रह्मजिज्ञासयोः पौर्वापर्यनिरासः १३९

☆ चोदना प्रवृत्तिभेदाच्चेति भाष्यम् १५२

☆ साधनचतुष्टयानन्तर्योपपत्तिः १५३

☆ साधनचतुष्टयविमर्शः १५५

☆ साधनचतुष्टयस्य शास्त्रीयत्वम् १५६

| | | |
|---|---|---|
| ३. | अतः शब्दार्थ विचारः | १६०-१६४ |
| ४. | जिज्ञासापदार्थविचारः | १६४-१६६ |
| ५. | ब्रह्मजिज्ञासापदस्य समासविचारः | १६६-१७१ |


## चतुर्थोऽध्यायः


| | | |
|---|---|---|
| १. | ब्रह्मणो जिज्ञास्यत्वविचारः | १७२-१९९ |
| | ✪ त्वं पदार्थप्रसिद्धिः | १८२ |
| | ✪ आत्माब्रह्मेतिप्रसिद्धिः | १८२ |
| | ✪ आत्मनि विप्रतिपत्तयः | १८५ |
| | ✪ शरीरस्य पार्थिवमात्रत्वनिरासः | १९१ |
| | ✪ इन्द्रियस्वरूपनिरूपणम् | १९३ |
| | ✪ इन्द्रियाणां भौतिकत्वमागमादेव | १९४ |
| | ✪ तेषां सर्वगतत्वनिरासः | १९५ |
| | ✪ मनसो निरूपणम् | १९५ |
| | ✪ विवरणे आत्मस्वरूपविमर्शः | १९६ |
| | ✪ ईश्वरे प्रमाणप्रदर्शनम् | १९७ |
| | ✪ प्रत्यगात्मनो जिज्ञास्यत्वोपपादनम् | १९८ |
| २. | ब्रह्मस्वरूपविमर्शः | १९९-२३९ |
| | ✪ पूर्वाधिकरणसंगतिः | १९९ |
| | ✪ ब्रह्मणोऽभिन्ननिमित्तोपादानत्वसिद्धिः | २०९ |
| | ✪ जिज्ञास्य ब्रह्मणो लक्षणमिदम् | २१६ |
| | ✪ वाक्यशेषविमर्शः | २१७ |
| | ✪ जन्मस्थितिभङ्गग्रहणे प्रयोजनम् | २१९ |
| | ✪ मूलकारणं जगद्विवर्ताधिष्ठानम् | २२० |
| | ✪ ब्रह्मसत्तायां श्रुतिर्मानम् | २२६ |
| | ✪ ब्रह्मणः निरूपाधित्वसिद्धिः | २३० |
| | ✪ निर्गुणत्वप्रतिक्षेपनिरासः | २३१ |
| | ✪ निर्विशेषत्वाक्षेपनिरासः | २३१ |
| | ✪ ब्रह्मणः वेदादिकर्तृत्वेन सर्वज्ञत्वादिसिद्धिः | २३३ |

★ वेदापौरुषेयत्वविचार: २३४

★ वेदपौरुषेयत्वे कर्मफलसम्बन्धत्वानुपपत्ति: २३७

**पञ्चमोऽध्याय:**

१. **वेदान्तानां ब्रह्मणि समन्वय:** २४०-२६०

★ शास्त्रप्रमाणत्वे पूर्वपक्ष: २४०

★ वेदान्तवाक्यानामेकरसाखण्डब्रह्मप्रतिपादकत्वम् २४५

★ तत्त्वमसीति वाक्यार्थबोध: २४५

★ वेदान्तानां सिद्धार्थबोधकत्वेऽपि प्रामाण्यम् २४७

★ देवतादिप्रतिपादनपरत्वनिरास: २५०

★ प्रतिपत्तिविधिशेषतया ब्रह्मबोधकत्वनिरास: २५१

★ परिणामिनित्यता कूटस्थनित्यताविमर्श: २५८

२. **मोक्षस्वरूपम्** २६०-२८२

★ ब्रह्मविज्ञानस्य सम्पदादिरूपत्वखण्डनम् २६३

★ तत्त्वमसीत्यादिवाक्यानां ब्रह्मात्मैकत्वबोधनम् २६७

★ तात्पर्यलिङ्गानि २६९

★ वाक्याद् अखण्डैकवस्तुविषयकप्रमोत्पत्ति: २६९

★ तत्त्वमसीत्यादौ लक्षणोपपत्ति: २७०

★ तत्त्वमसीत्यत्र लक्षणां विना अभिधयाऽखण्डार्थानुपपत्ति: २७४

★ विज्ञानशब्दस्य भावसाधनत्वोपपत्ति: २७६

★ ब्रह्मणिलक्ष्यतावच्छेदकाभावेऽपि लक्षणोपपत्ति: २७७

★ शब्दादपरोक्षज्ञानत्वोपपत्ति: २७८

★ तत्त्वमसीत्यत्रासिपदसार्थक्यम् २८०

३. **सिद्धार्थे वेदान्तानां प्रामाण्यम्** २८२-२८८

**उपसंहार:**

१. **भामतीविवरणप्रस्थानयो: संक्षिप्तो भेद:** २८९-२९०

**सहायकग्रन्थानां सूची**

# मङ्गलाचरणम्

वन्दे गणपतिं देवं सर्वविघ्नहरं परम् ।
शिवप्रियसुतं पूज्यं गिरीन्द्रतनयाङ्कगम् ॥

काशीश्वरं साम्बशिवं नमामि ।
श्रीविश्वनाथं करुणैकमूर्त्तिम् ।
यद् भक्तिभावाद् सकलोऽपिजन्तुः ।
संसारबन्धात् परिमुच्यतेऽत्र ।
सुरादिसेव्यं प्रियमात्मरूपम्
परात्परं दिव्यमनेकरूपम् ॥
भक्त्या नतः पूर्णममोघशक्तिम् ।
राधामुकुन्दं शरणं नमामि ॥

# कृतज्ञताज्ञापनम्

अस्य शोधप्रबन्धस्य पदार्थावबोधनादिना मम च दानमानोपदेशादिना भृशमुपकुर्वता श्रीमतां मान्यानां श्रीगुरूणां महानुभावानामन्येषाञ्च कृतज्ञताज्ञापनविधौ किञ्चिदभिदधामि ।

सर्वप्रथमं गुरूणां परमपुज्यानां मध्ये सम्पूर्णानन्दसंस्कृनविश्वविद्यालये वेदान्तविभागेऽलंकृतविभागाध्यक्षादिपदानामाचार्याणां स्वगुरूणां व्याकरणवेदान्तादिसमस्तशास्त्रपारंगतानां श्रीकाश्यां निवसतां तत्रान्यत्र च विदुषां मध्ये लब्धविमलयशस्कानां पण्डितमण्डलीशिरोभूषणानां श्रद्धया चरणकमलेषु प्रणतिशतपुष्पमाल्यं समर्पयामि । महता स्नेहेन वेदान्तशास्त्रमन्यच्च शास्त्रमेभिरहं प्रतिबोधितः ।

**यस्य रामपदेप्रीतिरद्वैतादपि सुन्दरी ।**

**वन्दे पारसनाथाख्यं गुरूमद्वैतदर्शिनम् ।।**

तदनु सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदान्तविभागे विभागाध्यक्षपदमलं कुर्वतां व्याकरणवेदान्तादिशास्त्रतलप्रविष्टानां स्ववैदुष्येण तोषितगुरुणां पूज्यानां लब्धयशस्कानां श्रीकाश्यां निवसतां विद्वन्मण्डलीषु भास्कराणामिवोदयगिरिमारूढानां **श्रीरामकिशोरत्रिपाठिनां** गुरूणां चरणकमलेषु नमामि । एतैःरहं बहूपकृतः ।

**वेदान्तविद्यागगने, प्रभाकरमिवोदितम् ।**

**वन्दे रामकिशोराख्यं गुरुभक्तं यशस्विनम् ।।**

तदनन्तरं सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सम्प्रति कुलपतिपदमलंकुर्वतां साहित्यादिशास्त्राब्धिपारंगतानां विदुषां महाकवीनां कृतबहुविधकाव्यानां लब्धख्यातीनां **श्रीमतामभिराजराजेन्द्रमिश्राणां** चरणकमलेषु प्रणमामि कृतज्ञताञ्च निवेदयामि येषां कौलपत्ये शोधप्रबन्धं प्रस्तौमि ।

**काव्यशास्त्रमहाम्भाधौ सुधाविर्भावतत्परः ।**

**नारायणमहाधारो वन्द्यते मन्दराचलः ।।**

तदनन्तरं गुरूणां महासिद्धानां तपस्विशिरोमणीनामद्वैतनिष्ठानां ब्रह्मलीनानां **श्रीमलयालस्वामि**चरणानां चरणाम्भोरुहेषु पद्यपुष्पाञ्जलिमर्पयामि प्रणमामि च ।

**वन्दे श्रीमलयालपावनपदाम्भोजं विशुद्धं परम् ।**

**विख्यातं परमं गुरुं करुणयापूर्णं महासागरम् ।**

**लीनं ब्रह्मणि साधनैः समुचितैर्जीवन् विमुक्तोऽप्यसौ,**

**त्यक्त्वाऽशेषपरिग्रहं परसुखाद्वैतामृते स्वात्मनि ।**

तदनु स्वदीक्षागुरूणां चरणसरसीरूहेषु पद्यपुष्पाञ्जलिमर्पयामि प्रणमामि च । एभिः मह्यं संन्यासदीक्षामन्त्रान् विधिपूर्वकमतिस्नेहेन करुणया दत्त्वा मम संसारसागरात् समुद्धारः कृतः—

**विद्यानन्दगिरिं स्वभावसरलं संन्यासदीक्षागुरुम् ।**

**वेदान्तादि समस्तशास्त्रजलधिं पारं परं संगतम्**

**वन्दे नित्यमहं जगत्सुविततश्रीमद्यशःसञ्चयम्**

**यत् पुण्यप्रभवान्ममाल्पधिषणस्यात्मावबोधोऽभवत् ।**

तत्पश्चात् सर्वप्रथमगुरूणामक्षरग्रहणकारिणां विद्यायां मां प्रवेशयतां महाकारुण्यपूर्णानाममवबोधकर्मणि विचक्षणानां मयिस्नेहवतां श्रीमतां **श्रीशेखरगिरीणां** पूज्यानां चरणकमलेषु प्रणमन्निदमुपहरामि—

**चन्द्रशेखररक्तानां शेखराणां तपस्विनां ।**

**वन्दे विधाब्धिपराणां गुरूणां चरणाम्बुजम् ।**

तदनु संन्यासी सन्नपि तयोरूपकारं संस्मन् पितरौ पूज्यौ वन्दे—

**मातरं बुच्चिरत्नाख्यां पतिदेवां यशस्विनीम्**

**कारुण्यमूर्त्तिं वन्देऽहं पुण्यकर्मरतां सतीम् ।**

**श्रीसत्यं पितरं वन्दे कर्मनिष्ठं दयापरम् ।**

**विद्यावन्तं महादेवपूजनैकपरायणम् ।**

एवमन्येषामपि ममोपकारं कुर्वतां सतां विदुषामविदुषां सर्वेषां प्रीत्या नमनं कृत्वा नारायणं सर्वत्रपश्यन् प्रणमश्च तम् शोधप्रबन्धस्यास्य कम्प्युटरद्वारा मुद्रणकारिणं आयुष्मन्तं श्रीराजेश्वरद्विवेदिनं शतशः आशीर्वचोभि र्योजयन् विरमामि नमामि च सर्वम् ।

पूर्णानन्द ब्रह्मचारी

**पूर्णानन्दो ब्रह्मचारी**
(स्वामी सम्पूर्णानन्दः गिरिः)

# भूमिका

अथ शोधप्रबन्धस्य स्वल्पाभूमिका लिख्यते । शोधविषयाविस्तरेण यथाध्यायं विवेचिताः । चतुःसूत्रीभाष्यभामत्याः यथामति कतिपयस्थलानां विमर्शः कृतः । विवरणादिग्रन्थानामपि तत्र तत्र स्थलमुपन्यस्य विचारो विहितः । अत्र भूमिकायां केचन विषयाः सूत्रभाष्यभामतीकाराणाञ्च देशकालकृतिवैशिष्ट्यञ्च किञ्चित् प्रकाश्यते ।

## समन्वयाधिकरणे मोक्षस्वरूपविमर्शः

निरतिशयसुखावाप्तिः शोकनिवृत्तिश्च मोक्षः । सुखं च द्विविधं सातिशयं निरतिशयं च । सातिशयं सुखं स्रकचन्दनादि विषयसम्बन्धजनितान्तःकरणवृत्तितारतम्यकृतः आनन्दलेशस्य आविर्भावविशेषः, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रमुपजीवन्ति' इति श्रुतेः ।

निरतिशय सुखं च ब्रह्मैव 'आनन्दो ब्रह्मेतिव्याजानात्' 'विज्ञानमानन्दं ब्रह्म' 'यद्येष आकाश आनन्दे न स्यात्' इत्यादि श्रुतेः । एतन्निरतिशयानन्दात्मकब्रह्मावाप्तिः ब्रह्मात्मत्वस्फुरणं वा मोक्षः । ब्रह्मात्मकोऽपि जीवः स्वाविद्ययाऽऽवृत्तः स्वरूपं ब्रह्मात्मकं न जानाति यदा त्वस्य तत्वज्ञानोदयः तदा अज्ञाननिवृतौ, स्वरूपस्य ब्रह्मात्मैक्यस्य प्रकाशो भवति । सोऽयं प्रकाशो ब्रह्मावाप्तिः इति गीयते । स एव च मोक्षः ब्रह्मस्वरूपश्च ।

ननु आनन्दात्मकब्रह्मप्राप्तिः न मोक्षः तस्याः नित्यत्वेन तद्रूपस्य मोक्षस्य तत्त्वज्ञानसाध्यत्वाप्रसंगात् । सर्वैः तीर्थकरैः मोक्षस्य तत्त्वाज्ञानसाध्यत्वाभ्युपगमात्, अविद्यानिवृत्तेश्च मोक्षत्वाभ्युपगमात् 'अविद्यास्तमयोमोक्षः सा च बन्ध उदाहृतः' इत्युक्तेरिति चेत् । उच्यते—शोकनिवृत्तिश्च मोक्षः । अविद्याजनितशोकस्य निवृत्ति अपि मोक्षः इत्यर्थः । तथा च अविद्या निवृत्त्युपलक्षित नित्यानन्दब्रह्मस्वरूपप्रकाशस्य मोक्षत्वं न केवलस्य

ब्रह्मण: । एवं च नित्यानन्दब्रह्मप्रकाशस्य नित्यतया असाध्यत्वेऽपि तादृशोपलक्षित ब्रह्मात्मकमोक्षस्य नासाध्यता, उपलक्षणसाध्यतयैव तत्साध्यत्वोपपत्ते: ।

मोक्षस्य आनन्दात्मकब्रह्मरूपत्वे च 'ब्रह्मविद् ब्रह्मैव भवति' इत्यादि श्रुति र्मानम् । दु:खनिवृत्तिरूपत्वे च 'तरतिशोकमात्मवित्' 'तत्र को मोह: क: शोक: एकत्वमनुपश्यत:' इत्यादि श्रुतिर्मानम् ।

**न चायं मोक्ष: लोकान्तरावाप्ति: ।**

**''सालोक्यमथ सारूप्यं सार्ष्टि: सामीप्यमेव च ।**

**सायुज्यं चेति मुनयो मुक्तिं पञ्चविधां विदु: ।।''**

इति पञ्चविधमोक्षाणां मध्ये सालोक्यादि चतुष्टयानां न मोक्षत्वम् । सुखदु:खाभाव-रूपत्वाभावात् । सायुज्यस्य तु निर्वाणाख्यस्य मुख्यं मोक्षत्वम् । 'ब्रह्मवेद ब्रह्मैव भवति' इत्यादि श्रुते: । सालोक्यादि चतुष्टयानां तु ब्राह्मदु:खाभावमात्रसाम्यात् गौणत्वेनैव मोक्षत्वव्यपदेश: ।

नन्वानन्दावाप्ते: अनर्थनिवृत्तेर्वा सादित्वे वा तस्या: कृतकत्वेनानित्यतया क्षये मुक्तानां पुनरावृत्त्यापत्ति: । अनादित्वे नित्यत्वे वा तस्या: असाध्यतया मोक्षमुद्दिश्य तत्साधनश्रवणादौ प्रवृत्त्यनुपपत्तिरिति चेत्, न सिद्धस्यैव ब्रह्मरूपस्य मोक्षस्य असिद्धत्व-भ्रमेणोपपत्ते: । तथा च नाद्यपक्षोक्तदोष:, साधनप्रवृत्तौ प्रतिबन्धकस्य सिद्धत्वज्ञानस्याभावात् । एवं च मोक्षसाधने प्रवृत्तिरुपपद्यते । प्रवृत्तौ हि कारणमिष्टसाधनताज्ञानम् । तच्च नाहं ब्रह्मेति भ्रमवत: पुरुषस्यापि सम्भवति श्रवणं ममेष्टसाधनमिति । अतो न तस्य प्रवृत्तिरनुपपत्तिरिति भाव: ।

नन्वाकृतश्रवणानां पुंसां तादृशभ्रमसम्भवेऽपि कृतश्रवणानां तादृशभ्रमो नैव स्यात् । तेषां सिद्धत्वज्ञानसद्भावात् । तथा च न तेषां श्रवणादौ प्रवृत्त्युपपत्तिरिति चेत् न 'नाहं ब्रह्म' इति प्रत्यक्षविरोधेन तादृशसिद्धत्व ज्ञानस्य प्रामाण्यनिश्चयात्, तादृश भ्रमसम्भवात्,

अविद्योच्छेदोपलक्षितस्य पूर्णानन्दरूपस्यात्मनो मोक्षत्वात् तस्य स्वरूपतः असाध्यत्वेऽपि उपलक्षणसाध्यतयैव साध्यत्व सम्भवात् तत्साधने प्रवृत्त्यनुपपत्तेः । अत एव "प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य स्वरूपतः असाध्यत्वेऽपि तद्विरोधाधायकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्ते" इत्यद्वैतसिद्धिकाराः । "आनन्दप्रकाशस्य फलत्वं न जन्यत्वं किन्तु व्यङ्गत्वम् । तच्च जन्यस्यावरणनाशस्याश्रयत्वम् तत्र नाशो यदि उक्तात्मस्वरूपः तदोपलक्षणस्य जन्यत्वात् जन्यत्वम् । अथ वृत्तिरेव तदा सा जन्यैवेति" इति च लघुचन्द्रिकाकाराः ।

नन्वस्तु ब्रह्मरूपायाः मुक्तेः नित्यत्वात् सिद्धत्वम् । शोकनिवृत्तिरूपायाः मुक्तेस्तु न सिद्धत्वम् तस्याः जन्यत्वात् तथा च तस्याः जन्यत्वेन क्षयावश्यम्भावात् मुक्तेः निवृत्तौ मुक्तस्य पुनरावृत्तिप्रसङ्गः इति चेत् । उच्यते—अविद्यारूपानर्थनिवृत्तिरपि अधिष्ठानभूत-ब्रह्मरूपतया सिद्धैव । यथा लोके सकारणस्य रजतविभ्रमस्य निवृत्तिः ज्ञाता शुक्तिरेव, तथाऽविद्यानिवृत्तिरप्यधिष्ठानभूतं ज्ञातं ब्रह्मैव ध्वंसस्याधिकरणरूपत्वात् अधिकरणातिरिक्ताभावा-नभ्युपगमात् । एवं सति "यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः" इति "यत्रत्वस्य सर्वमात्मैवाभूदित्याद्याः श्रुतयः सर्वस्य द्वैतजातस्यात्ममात्रतया प्रविलयमुपपादयन्त्यः मुख्यार्थाः भवेयुः । तथा चाज्ञान निवृत्तेस्वरूपेण साध्यत्वेऽपि ज्ञातत्वोपलक्षितात्मस्वरूपेण सिद्धत्वात् न तदुच्छेदः ।

लोकेप्यनर्थनिवृत्त्यादेसिद्धत्वं दृश्यते इति प्राप्तप्राप्ति परिहृत परिहारयोः प्रयोजनत्वं दृष्टमेव । यथा स्वहस्तगत विस्मृत सुवर्णादौ 'तव हस्ते सुवर्णम्' इत्याप्तोपदेशादप्राप्तमिव प्राप्नोति जनः ।

यथा वा वलयितचरणायां स्राजि सर्पत्वभ्रमवतः पुंसः 'नायं सर्पः' इत्याप्तवाक्यात् परिहृतस्यैव सर्पस्य परिहारः प्रसिद्धः । एवं प्राप्तास्यापि आनन्दस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिः मोक्ष इति नानुपपत्तिः

मोक्षविषये अन्येषा मतावलम्बिनं मतानि प्रदर्श्यन्ते तद्यथा—स्वातन्त्र्यं मृत्युर्वा मोक्ष इति चार्वाकाः ।

उत्तराधरभावेन निरन्तरोत्पादकक्लेशादिदोषदूषितबोधसन्ततिविच्छेदः इति माध्यमिकाः पुनर्भावना प्रकर्ष परिलब्ध परिशुद्धचित्तसन्तान इति योगाचाराः । प्रलीन निखिलोपाधेः क्षेत्रस्य सततोर्ध्वगतिरिति जैनाः । आनन्दमयपरमात्मनि जीवात्मलय इति त्रिदाण्डनः ।

जीवस्य लिङ्गशरीरापगम इति भास्करीयाः । अक्षयशरीरादिलाभः विष्णुभक्तिधर्माचरणात् विष्णुलोकगमनं वा इति वैष्णवाः । सर्वकर्तृत्वमेकविहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्वे सति भगवद्याथात्मयानुभव इति रामानुजीयाः । जगत् कर्तृत्व लक्ष्मीपतित्व श्रीवत्सवर्जं भगवत् ज्ञानायत्त निर्दुःख पूर्णसुखमिति मध्वाः ।

द्विभुजकृष्णेन सह स्वांश भूतानां जीवानां गोलोके लीलानुभव इति वल्लभीयाः ।

पारमैश्वर्यप्राप्तिरिति माहेश्वराः ।

चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनमिति कापालिकाः पूर्णात्मलाभ इत्यभिनवगुप्ताचार्याः । पाशुपति धर्माचरणात्पशुपति समीपगमनमेवपुनरावृत्तिरहितमिति पाशुपताः ।

पञ्चाग्निविद्याद्युपासनैरर्चिरादिर्मोण हिरण्यगर्भप्राप्तिरिति हैरण्यगर्भाः ।

पारदसपानेन देहस्थैर्यमिति रसेश्वरवादिनः । आत्यन्तिकैक विंशति दुःखध्वंस--- --------स्वसमानाधिकरणदुःखप्राग्भावासमानकालीनदुःखध्वंसः । संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं दुःखविशेषणम् । अस्मदीय दुःखसमानकालीन शुकमोक्षेऽव्याप्तिवारणाय स्वसमानाधिकरणेति दुःखविशेषणमिति तार्किकाः । स्वर्गादिकमिति नित्यसुखसाक्षात्कार इति भाट्टाः ।

आत्यन्तिकदुःखप्रागभावपरिपालनमिति प्राभाकराः । परापश्यन्ती मध्यमावैखरीति वाणीचतुष्टये प्रथमायाः पराख्याया वाण्या दर्शनमितिपाणिनीयाः । प्रकृतिपुरुषविवेकदर्शनात् तदविवेकनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानमिति सांख्या योगिनश्च ।

## ब्रह्मणः स्वरूपविचारः

वेदो हि काण्डत्रयात्मकः, तृतीयभागेन स्वप्रकाशात्मक सच्चिदानन्दब्रह्म बोधयति ।

तच्च ब्रह्म विचारयितुं ''**अथातो ब्रह्मजिज्ञासा**''(ब्र.सू.१/१/१) इति सूत्रं प्रवर्तते। तच्च ब्रह्म किं लक्षणमिति जिज्ञाससमानाय '**जन्माद्यस्य यतः**'(ब्र.सू.१/१/२) इति लक्षणसूत्रं प्रवर्तते। तत्र च जगज्जन्मस्थितिलयकारणत्वं ब्रह्म लक्षणम्। प्रस्तुततल्लक्षणे ''यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति र्यत् प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व तत् ब्रह्म'' इत्यादि श्रुतिप्रमाणम्।

अत्र कौमुदीकार मतं—जगज्जन्मस्थितिलयेषु एकैककारणत्वं निर्देष्टुं लक्षणमस्तु तथाच जगज्जन्मकारणत्वं वा जगत् स्थिति कारणत्वं वा जगल्लयकारणत्वं वा इति। अत एव ''अत्ता चराचरग्रहणात्'' इत्याद्यधिकरणेषु सर्वसंग्रहकर्तृत्वादिकं ब्रह्मलिङ्गतया उपन्यस्तमिति। अन्येतु जगज्जन्म स्थितिलय कारणत्वमेव ब्रह्मणो लक्षणमाहुः। एकैकलक्षणत्वे प्रत्येकं लक्षणत्वे नहि लक्षणं सुसम्पन्नं भवति। यतः कारणपदस्य निमित्तकारणसाधारणतया नैयायिकादिसम्मतेश्वरादौऽपि अतिव्याप्तिः स्यात्। अतः अभिन्ननिमित्तोपादानत्वसम्प्रदायानुसारं प्रपञ्चस्य ब्रह्मणि लयो दर्शितः।

यास्क पठितानान्तु जायतेऽस्तीत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले सम्भाव्यमानत्वात् मूलकारणात् उत्पत्तिस्थिति नाशाः जगतो नागृहीताः स्युरित्याशंकेत।

तन्माशंकीति या उत्पत्तिः ब्रह्मणः तत्रैव स्थितिः प्रलयश्च। अतः उक्त फलसिद्धये सम्बलितस्यैव लक्षणत्वं तदेतत् कारिकयोक्तम्।

''उपादानत्वविज्ञत्ववस्त्वन्तरनिराक्रिया: व्युत्क्रमाल्लब्धुमाचख्युरन्ये सम्बलित-त्रयम्॥''(सि.संग्रहः)

अस्तु ब्रह्म जगदुपादानं किन्तु घटोत्पत्तौ मृत्तिकोपादानभिन्नं निमित्तकारणं कुलालादि भवतु। तथैव जगदुत्पत्तौ अन्यदपि निमित्तकारणं स्यात्। यथा पालनरूप राज्यस्थितिरतायां पाल्यप्रजाद्युपादान भिन्न राजादिनिमित्तकारणं भवति तद्वत् जगत् स्थितौ पालने च उपादानादि भिन्नं किमपि निमित्तं स्यादिति शंकानिराकरणाय एकस्मिन्नेव ब्रह्मणि ''यतो वा इमानि

भूतानि'' इत्यादि श्रुतयः जगज्जनन नियामकतामाहुः—एतदेव जगदभिन्न निमित्तोपादानत्वं ब्रह्मणि लक्षणं सिद्धं भवति। अद्वितीयकूटस्थ चैतन्ये ब्रह्मणि यदिदमुपादानकारणत्वं तच्च न परमाणूनामिव आरम्भकत्वरूपं न वा प्रकृतिरिव परिणामित्व रूपं किन्तु अविद्यया वियदादि प्रपञ्चरूपेण विवर्तमानत्वलक्षणम्। वस्तुनः समसत्ताकाऽन्यथाप्रथा परिणामः। तदसमसत्ताकान्यथाप्रथाविवर्तः। उपादानत्वं शुद्धस्य ब्रह्मणः ईश्वरस्य वा जीवस्य इति मतभेदोऽस्ति।

**शुद्धस्योपादानत्वमुपहितस्य वा–**

अत्र संक्षेप शारीरकानुसारिणः शुद्धमेवोपादानमिति वर्णयन्ति। जन्मादिसूत्रतद्भाष्ययो-रुपादानत्वस्य ज्ञेयब्रह्मलक्षणस्योक्तेः विवरणानुसारिणस्तु यः सर्वज्ञः सर्ववित्'' ''यस्य ज्ञानमयं तपः'' इत्यादि श्रुतिः सर्वज्ञत्वादि विशिष्टं मायाशबलेश्वररूपमेव ब्रह्ममेवोपादानम् इति अनेकानि मतानि अत्र सम्प्लवन्ति इति संक्षेपः।

## श्रीवेदव्यासः तद्देशकालश्च

**वेदव्यासा व्यतीता ये ह्यष्टाविंशतिसत्तमम्।**

**चतुर्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः॥** (वि.पु.३/३/१०)

(१) पञ्चपादिकायाः मङ्गलाचरणे पद्मपादेन कथितः श्लोकः—

**नमः श्रुतिशिरः पद्मवण्डमार्तान्तमूर्तये।**

**वादरायण संज्ञाया मुनये शमवेश्मने॥**

खण्डने—'भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि' (प्रारम्भ एव)।

भामती मङ्गलश्लोके—

**ब्रह्मसूत्रकृते तस्मै वेधव्यासाय वेधसे।**

**ज्ञानशक्त्यवताराय नमो भगवतो हरेः॥**इति लिखितम्।

जैमिनिबादरायणयो: परस्परसूत्रेषु उल्लेखो भवति । अत: द्वौ समसामयिकौ स्त: । जैमिने: समय: ई. पूर्वद्वितीयशताब्दी मन्यते ।

श्रीदासगुप्तानुसारेण ईसा-पूर्वद्वितीयशताब्द्यां बादरायणस्य समय: मन्यते ।

शाण्डिल्यसूत्रेषु बादरायणं प्रति वर्णनम्—

**''आत्मैकपरां बादरायण:''** । इति शा.सू.-३० ।

जैमिनिसूत्रे निंदिष्ट: आचार्य: 'बादरायण:' (१/१/१५) 'बादरि:' (३/१/३)-(६/१/२७) ।

व्यास: एक: नास्ति अपितु अष्टाविंशति व्यासा: सन्तीति । एतेषु मध्येषु कृष्ण द्वैपायन इति नामोल्लेखो भवति । बादरायणस्य नाम नास्ति । अत: कृष्णद्वैपायनात् बादरायणोऽभिन्न: मन्यते ।

**अष्टाविंशतिनामानि–**

१. स्वयम्भू: (ब्रह्मा)

२. प्रजापति:

३. शुक्राचार्य:

४. वृहस्पति:

५. सविता

६. मृत्यु: (यम)

७. इन्द्र:

८. वशिष्ठ:

९. सारस्वत:

१०. त्रिधामा

११. त्रिशिखी

१२. भारद्वाज:

१३. अन्तरिक्ष:

१४. वर्ण:

१५. त्र्य्यारुण:

१६. धनञ्जय:

१७. जय:

१९. भरद्वाज:

२०. गौतम:

२१. हर्यात्मा

२२. वाजश्रवामुनि

२३. तृणबिन्दु:

२४. ऋक्ष:

२५. शक्ति:

२६. पराशर:

२७. जातुकर्ण:

२८. कृष्णद्वैपायन:

बादरायणो व्यास: वेदव्यासकर्ता महाभारतकृदेव ब्रह्मसूत्राणां कर्ता स च द्वापरान्ते कलोरादौ पराशरात् सत्यवत्यां नारायणावतारभूत इति भारती या मन्यन्ते ।

स एव पुराणानामष्टादशानां कर्ता महाभारतस्य भागवतस्य ब्रह्मसूत्रस्य योगभाष्यस्य च कर्ता स्मर्यते ।

## श्रीशङ्कराचार्यः तत्कृति वैशिष्ट्यम्

भगवान् श्रीशंकराचार्यः अलौकिक प्रतिभासम्पन्नः महापुरुष आसीत् । अस्यासाधारणं वैदुष्यं, तर्कपटुत्वं, दार्शनिकसूक्ष्मदृष्टिः रहस्यवादित्वं आध्यात्मिकशक्तिः धार्मिकपवित्रता-कर्तव्यनिष्ठा तथा सर्वातिशायिविवेक एवं वैराग्यं इमे धर्माः एतेषु निहिताः आसन् ।

एतेषां जन्मसमयः ७८८ ई. निश्चयो भवति । एतेषां जन्म समये विदुषां नैकमत्यमस्ति । केचित् पुनः अस्य प्रादुर्भावकालः ईशापूर्वं ५०९ वर्षेऽस्तीति वदन्ति ।

एतेषां जन्मसमयः द्वादशशताब्दीपूर्वं पञ्चविंशतिशताब्दीपूर्वमिति भारतीयेषु विद्वतसु वैमत्यमस्ति । तैश्च स्वस्वमतपोषकयुक्तयः प्रदर्श्यन्ते ।

लोकातिशायि-महापुरुष-सुवो भारतभुवो दक्षिणप्रान्तीय कालटी-ग्रामम् अधिवसतो विशिष्टविदुषः चन्द्रशेखरसमर्चनसंसक्तचेतसो भक्तिभागीरथो भरितस्य श्रीशिवगुरोः श्री शिवगुरोर्निकेतनं साक्षाच्छिवावतारेण लोकशंकरेण शङ्करेण समलङ्कृतम् ।

असमय एव श्रीशिवगुरौ स्वर्गमुपगते तदिच्छां परिपूरयन्त्या जनन्या पञ्चवर्षे बालकस्य शंकरस्य यज्ञोपवीतो विहितः । तदनु वेदविद्यां सकलामेव विभ्रता अष्टवर्षीयेनानेन पराप्रसिद्धिः समवाप्ता । द्वादशे वर्षे च सकलशास्त्रपारावारीणतामुपगतेनानेन बहुधा संप्रर्थितापि ममतामयी जननी निजैकमात्रं सन्ततिरूपमिमं लोचनतारकमिव रक्षन्ती तद्विरहम् असहन्ती सन्यासाश्रयणाय न स्वीयां स्वीकृतिम् अस्मै ददौ ।

एकदा पूर्णानदी सरितामध्ये ग्राहग्रहस्तस्यास्य परित्राणं सन्यासं गगनगिरा समुपश्रुत्य प्राणपरित्राणं वाञ्छती सन्यासाज्ञां दत्तवती । स्वीकृतसन्यासोऽसौ नर्मदातीरवासिनं यशोभरविकासनं योगशास्त्रप्रभाभासिनं पतञ्जलिरूपं श्रीशुकदेवशिष्यं श्रीभगवद्गोविन्दपदाचार्य गुरुं विधाय श्रुतिशासितं अद्वैतमतं वर्षत्रयं तस्माद् यावदधीवान् ।

ततश्च गुरोराशिषं तदाज्ञया सह स्वीकृत्य बौद्धादि-मत-पाखण्डविलुप्तप्रचारं परमपावनं श्रुति नवनीतमद्वैतमतं समुपदिशन् विद्याधिनाथस्य श्रीविश्वेश्वरनाथस्य पुरीं वाराणसीं समधिगत्य

पुनर्वैदिकधर्मस्य प्रचारार्थं तदीयोपदेशं कर्तुमारेभे । अनन्तरं बदरिकाश्रमे मुर्तिप्रतिष्ठां कृत्वा तदुत्तरभागस्थां व्यासगुहामधिगतवान् । तत्रैव निवसतानेन ब्रह्मसूत्र भगवद्गीतोपनिषत्सु प्रामाणिकीं व्याख्यां विधाय सनन्दनादिशिष्याः तदध्यापनेन कृतार्थाः कृताः ।

उत्तरकाश्यां शास्त्रार्थोपायनप्रीताद् भगवतो व्यासात् पुनः षोडश वर्षात्मकं कालं सम्प्राप्य तत्प्रचारार्थं भूयोऽपि तुहिनाद्रेरवततार । प्रयागे दार्शनिकदिवाकरेण मीमांसामताचार्येण वैदिकधर्मरक्षणतत्परेण श्रीकुमारिलेन तदन्तिमावस्थायां मिलित्वा तदनुरोधेन भाहष्मतीमधिवसतो विश्रुत वैदुष्यस्य मीमांसामण्डनस्य मण्डनमिश्रस्य गेहमधिकृत्य विराजमानां साक्षादेवशारदां ताम्मध्यस्थां विधाय परस्परशिष्यत्व पणे शास्त्रार्थे श्रीमण्डनमिश्रं विजितवान् । तदनु तदर्धाङ्गिरूपया तद्धर्मपत्न्या पृष्टेषु कामशास्त्रीयप्रश्नेषु ब्रह्मचर्यवशान् मौनमालम्ब्य षाण्मासिकमवधिं गृहीत्वा योगबलेन दिवङ्गतस्य श्रीमदमरुक भूपतेः शरीरे प्रविष्य कामकलाकौशलं कलयाञ्चक्रे । एतदवस्थेन श्रीशंकरेण विरचितममरुशतकं सर्वानिवशृङ्गार-शास्त्रीय मुक्तान् अतिशेतेति विन्दत्येवविज्ञाः अनन्तरं शास्त्रार्थे तां विजित्य मण्डनमिश्रं शिष्यत्वेन स्वीकृत्य सुरेश्वरायेति तदभिधानं विधाय तेन सह वैदिकमतं प्रचारार्थं भारतभुवि भ्रमणं चकार ।

क्रमेण च बहवो जनास्तच्छिष्यतया जीवनफलं लेभिरे । भगवतः शङ्कराचार्यस्य शिष्येषु श्रीसुरेश्वर, पद्मपाद, हस्तामलक, तोटकाचार्या अतीवप्रसिद्धा सिद्धाः श्रवणातिथितां धारयन्ति । समस्तमेव भारतं वैदिकेतरमतकलङ्कपङ्कदूषितं शोधयितुं स्वीयामार्चापदवीं कृतार्थयता अनेन सकलेव भारतवसुन्धरा दिग्विजयं यात्रया चमत्कृता ।

भारतवर्षस्यैकता धर्मसूत्रेणैव शक्यसम्भवेति विचार्य पूर्वपश्चिमोत्तरदक्षिणदिग्भागेषु पुरीद्वारकाबदरिकाश्रमशृङ्गेरिक्षेत्रेषु गोवर्धनशारदाज्योतिशृङ्गेरीसमभिधानानां मठानां रचनां विधाय श्रीपद्मपाद-हस्तमलकत्रोटकसुरेश्वराचार्यान् शिष्यान् तदाधिपत्ये नियुक्तवान् ।

श्रीशंकराचार्येण न केवलं वेदान्तग्रन्थानामपितु साधारणजनत्राणार्थमनेक

स्तोत्रग्रन्थानामपि प्रणयनं व्याधायि। एवं भारतसमुद्धारार्थं विधाय काश्मीरक्षेत्रे शारदामन्दिरे सर्वज्ञपीठमधिरुह्यद्वत्रिंशतिवर्षे कैलासवासता समधिगता। एतत् पवित्रसंग्रहात्मकमिदं पद्यं प्रसिद्धमेव।

**अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।**

**षोडशे कृतवान् भाष्यं द्वात्रिंशेमुनिरभ्यगात्॥**

श्रीमच्छकराचार्याणां कृतयः—

उपनिषद्भाष्यं, ब्रह्मसूत्रभाष्यं, गीताभाष्यं माण्डूक्यकारिकाभाष्यं श्रीविष्णुसहस्रनाम-भाष्यसतत्सुजातीयभाष्यमित्यादि भाष्यग्रन्थाः। अपि च गणेशपञ्चरत्न, गणेशाष्टक, कालभैरवाष्टक, द्वादशलिंग, सौन्दर्यलहरी, आनन्दलहरी, शिवानन्दलहरी, ललितापञ्चरत्न, कृष्णाष्टकमित्यादिस्तोत्रानि बहूनि सन्ति।

अपिच प्रकरणग्रन्थाः अद्वैतपञ्चरत्नम्, आत्मबोधः, उपदेशसाहस्री, चर्पटपञ्जरिका, पञ्चीकरणप्रकरणम्, योगतारावली सर्ववेदान्तसिद्धान्तसारसंग्रहः, विवेकचूडामणिः तत्त्वबोधः, निर्माणमञ्जरी निर्गुणमानसपूजेत्यादि प्रकरणग्रन्थाः बहवो विरचिता विलसन्ति।

अद्वैतसिद्धान्तानुसारं केवलब्रह्म हि एक मात्रसत्ताऽस्ति नामरूपात्मकजगतः स्वप्नवत् किमपि सत्ता अथवा परमार्थता नास्ति।

## भामतीकारस्तत्कृति परिचयश्च

अनिर्वाच्याविद्याद्वितय सचिवस्य प्रभवतो विवर्ता

**यस्यैते वियदनिल तेजोऽबवनयः।**

**यतश्चाभूद्विश्वं चराचरमुच्चावचमिदं**

**नमामस्तद्ब्रह्मापरिमित सुखज्ञानममृतम्॥**

सर्वतन्त्रस्वतन्त्र श्रीवाचस्पतिमिश्रः न्यायसूचीनिबन्धे स्वस्य समयस्योलेखनं कृतवान्। तस्यानुसारः (९) विसंवत्सर अथवा ८९८-अथवा-८४१-८४१ (अष्टानवत्यधिकअष्टशतं

वा एकचत्वारिंशत्यधिकाष्टशतं वा) भामती कृते स्वयं लिखितवान् ।

**''यन्न्यायकणिका तत्त्वसमीक्षा तत्वबिन्दुभिः ।**

**यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ।।**

इति अन्ते लिखितवान् (भामती कृतयः) श्रीवाचस्पतिमिश्रकृतयः

१. ब्रह्मतत्वसमीक्षा- श्रीसुरेश्वराचार्य कृत 'ब्रह्मसिद्धयोपरि'

२. सां.तत्त्वकौमुदी- श्रीईश्वरकृष्णप्रणीत 'सांख्यकारिकोपरि

३. तत्ववैशारदी- ''श्रीपातञ्जलयोगदर्शनो''परि

४. न्यायवार्तिकतात्पर्यटीका- न्यायदर्शनो'परि

५. न्यायसूचीनिबन्धः- पूर्वमीमांसोपरि

६. तत्वबिन्दुः- व्याकरणविषये

७. न्यायकणिकानामटीका- श्रीपू.मी.आ.मण्डनमिश्र ''विधिविवेको'परि

८. भामती टीका - श्रीशांकरभाष्योपरि इत्यादि कृतवान्

'भामती'नाम विषये केचन तस्य पत्न्याः नामेति, केचन तस्य कन्यायाः नामेति, केचन सः 'भामेति'नाम नगर्यां निवसनकारणेन भामतीति वदन्ति ।

भामतीव्याख्या ब्रह्मसूत्रशांकरभाष्यमवलम्य अतिप्रौढा तत्त्वार्थदीपिका वेदान्तसिद्धान्त-प्रकाशिका परिमार्जितशैल्या निबद्धा विदुषां मनांसि सम्पूर्णं ब्रह्मसूत्रशांकरभाष्यस्योपरि निबद्धा प्रमाणिकी । अस्याः प्रामाण्यादेव भामती प्रस्थानत्रयेऽन्यतमोच्यते ।

विदुषांवशंवदः

पूर्णानन्दब्रह्मचारी

**पूर्णानन्दो ब्रह्मचारी**

वेदान्ताचार्यः

सं.सं.वि.वि.वाराणसी ।

# प्रथमोऽध्यायः

## अनिर्वाच्याविद्यानिरूपणम्

तत्र भवान् सर्वतन्त्रस्वतन्त्रो वाचस्पतिमिश्रः स्वापूर्वकृतिभामतीव्याख्यायां आदौ सकलविघ्नविनाशपूर्वकग्रन्थपरिसमाप्त्यर्थं श्रुतानुमिताविगीतशिष्टाचारपरम्पराप्राप्तागर्हिताभीष्टसिद्धिलक्षणं सर्वजगदुपादानशुद्धबुद्धमुक्तस्वरूपसर्वात्मानन्दरूपपरब्रह्म नमस्कारात्मकं मङ्गलमाचरन् शिष्यशिक्षायै अध्यापकाध्येतृपरम्पराभ्युदयार्थं ग्रन्थतो निबध्नाति—

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतः । विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ।
यतश्चाभूद् विश्वं चरमचरमुच्चावचमिदम् । नमामस्तद् ब्रह्म परिमितसुखज्ञानममृतम् ।

**भूतभौतिकानां विवर्तत्वोपपादनम्–**

वेदान्तशास्त्रप्रतिपाद्यां तत्परमतात्पर्यविषयीभूता परब्रह्मरूपदेवतां नमस्कुर्वन् ग्रन्थकारोऽनुबन्धचतुष्टयमपि प्रदर्शयति । तथाहि सर्वेषां भूतानां भौतिकानाञ्च विवर्तोपादानभूतं ब्रह्मैव । अतत्त्वतोऽन्यथाप्रथाविवर्तः । भूतानां भौतिकानाञ्च आरम्भणाधिकरणे विवर्तरूपत्वं उपपादितम् । साधनादिदृश्यानां ब्रह्मव्यतिरेकेणाभावरूपानन्यत्वमुक्तमतएव तेषामनृतत्वं विवर्तत्वञ्च प्रतिपाद्य ब्रह्मैव सद् अधिगन्तव्यमिति प्रतिपादितम् । भूतानामिव भौतिकानामपि हिरण्यगर्भ द्वारा ब्रह्मैव कर्तृ । अज्ञानाद्यनादिपदार्थानां कार्यत्वं नास्ति अनादित्वादेव तथापि ब्रह्मव्यतिरेकेणानुपलभ्यमानत्वात् ब्रह्मणोऽनन्यत्वमनृतत्वञ्चसिद्धमत एव तेऽपि विवर्ता एव । प्रातिभासिकानाञ्च स्फुटमेव विवर्तरूपत्वम् ।

जीवानामपि चराचरशरीरोपाधिकानां तत्प्रतिबिम्बितत्वेन तद्विर्तत्वम् । चैतन्यस्वरूपेण तु ब्रह्मरूपत्वमेव तेषाम् ।

तदेवं सर्वजडप्रपञ्चाधिष्ठानभूतं ब्रह्मैव जीवस्वरूपाभिन्नं शास्त्रविषयः । अपरिमितसुखेत्यनेन तादृशब्रह्मात्मैक्यविज्ञानप्रयोजनमुच्यते । अपरिमितसुखं मोक्षः तत् प्रयोजनकब्रह्मात्मैक्यजिज्ञासुरधिकारी । प्रतिपाद्यप्रतिपादकभावश्च शास्त्रविषययोः सम्बन्धः । ब्रह्मणश्च तटस्थलक्षणं स्वरूपलक्षणञ्चोक्तम् । विवर्ता यस्यैव इत्यादिना पादेन तटस्थलक्षणं मुक्त्वा अन्तिमेन पादेन स्वरूपमुक्तम् । यावल्लक्ष्यानन्तर्गतत्वे सति व्यावर्तकं तटस्थलक्षणं स्वरूपमेव स्वरूपलक्षणं ब्रह्मणः इति वेदान्तपरिभाषायां विषयपरिच्छेदे उक्तम् ।

**अविद्याद्वयोपपत्तिः–**

प्रथमेन च पादेन प्रपञ्चं सृजतो ब्रह्मणः साचिव्यं कुर्वदज्ञानद्वयमुक्तम् । तादृशाविद्याद्वयस्य अनिर्वाच्यत्वमप्युक्तम् ।

तत्र न विद्या अविद्या । विद्यते ज्ञायते तत्त्वमनया उच्छिद्यतेऽविद्या वाऽनयेति विद्या । **'संज्ञायां समजनिषदनिपतमनविदषुञ् शीङ् भृञिणः'**[1] इत्यनेन सूत्रेण समजादिभ्यो धातुभ्यो स्त्रियां क्यप् प्रत्ययो भवति क्तिनोऽपवादः । अयं क्तिन् प्रत्ययः अकर्तरिकारके भावे च विहितः । **'भावे'**[2] । **'अकर्तरि च कारके संज्ञायां'**[3] इत्येताभ्यां सूत्राभ्यां भावे अकर्तरिकारके च द्वयमनुवर्तते । एवञ्च वेदनं विद्या विद्यते या सा विद्या । विद्यतेऽनेनेति वा विद्या । तद्विरोधिनी अविद्या । नञ् विरोधार्थकः । अविद्यासचिवस्य प्रभवत इत्यनेन तस्य अनादित्वं ब्रह्मविवर्ते च सहकारित्वमुक्तम् सत्त्वेनासत्त्वेनोभयत्वेन च निर्वक्तुभयोग्यमनिर्वचनीयत्वञ्चोक्तम् । विवर्ते सहकारित्वादेवभावरूपत्वमपि कथितं भवति न ह्यभावेन किञ्चिद् साहाय्यं सम्भवति । एवञ्च भावरूपानिवार्च्यानादिविद्याविरोधिनी सेति स्वरूपमुक्तं भवति ।

---

१. पा.सू. ३-३-९९ ।

२. पा.सू.३-३-१८ ।

३. पा.सू. ३-३-१९ ।

तत्र एका अविद्या पूर्वोक्तरूपा देवताधिकरणे (ब्र.सू. १-३-२६-३३) प्रतिपादितम्। अन्या च पूर्वपूर्वविभ्रमसंस्कारः। तदविद्याद्वितयमित्युक्तम्।

तथाहि देवताधिकरणे उक्तम्—स्पष्टार्थं भाष्यभामतीग्रन्थ उदाह्रियते—अत एव चामित्यत्वम् (१-३-२९) स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवात्' इति परिहृत्येदानीं तदेव वेदनित्यत्वं स्थितं द्रढयति—अत एव च नित्यत्वमिति। अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे नित्यत्वमपि प्रत्येतव्यम्। तथाच मन्त्रवर्णः—**'यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृणिषु प्रविष्टाम्'**[१] इति स्थितामेव वाचमनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति—'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयं भुवा' इति।

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ।।**

अथापि स्यात्—अपि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि संतत्यैवोत्पद्येरन्निरुध्येरंश्च, ततो भिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्संबन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चामिनवमिति श्रुतिस्मृतिवादा वदन्ति, तदा कथमविरोध इति ? तत्रेदमभिधीयते—समाननामरूपत्वादिति। तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम्। प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम्—**'उपपद्यते चाप्युपलभ्यते च'**[२] इति अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम्। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते—'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः

---

१. ऋ.सं. १०/७१/३।

२. ब्र. २/१/३६।

शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. ३/३) इति । स्यादेतत्—स्वापेपुरुषान्तरव्यवहाराविच्छेदात्स्वयं य सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम् । महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंघातुमशक्यत्वाद्वैषम्यमिति; नैषः, सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोंपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति; तथापि न प्राकृतवदीश्वराणां भवितव्यम् । तथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान्भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नासतीति वदितुम् । ततश्चातीतकल्पानुत्तिप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धत्वकल्पान्तरव्यवहारानुसंधानोपपत्तिः । तथाच श्रुतिः— **'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'**[१] इति । स्मरन्ति च 'शौनकादयः मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः' इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति बाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते' इत्युपक्रम्य 'तस्मादेतानि मन्त्रे मन्त्र विद्यात्' इति । प्राणिनां च सुखप्राप्तये धर्मो विधीयते । दुःखपरिहाराय चाधर्मः प्रतिषिध्यते । दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतः, न विलक्षणविषयावित्यतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते । स्मृतिश्च भवति—'तेषां ये यानि कर्माणि

१. श्वे.उ. ६/१८ ।

प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः । हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ।' इति । प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते । शक्तिमूलमेव च प्रभवति । इतरथाकस्मिकत्वप्रसङ्गात् । नचानेकाकाराः शक्तयः शक्याः कल्पयितुम् । ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां, वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिन्द्रियविषयसंबन्धनियतत्ववत्प्रत्येतव्यम् । नहीन्द्रियविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुम् । अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात्कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति । समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः । समाननामरूपतां च श्रुतिस्मृती दर्शनयतः—**'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः'**[१] इति । यथा पूर्वस्मिन्कल्पे सूर्याचन्द्रमः-प्रभृतिजगत्क्लृप्तम्, तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः । तथा **'अग्निर्वा अकामयत । अन्नादो देवानाँस्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निवपत्'**[२] इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या । स्मृतिरपि—'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः । यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ।'[३] इत्येवंजातीयका द्रष्टव्या ।

अभिधानाभिधेयाविच्छेदे हि संबन्धनित्यत्वं भवेत् । एवमध्यापकाध्येतृपरंपराविच्छेदे वेदस्य नित्यत्वं स्यात् । निरन्वयस्य तु जगतः प्रबिलयेऽत्यन्तासतश्चापूर्वस्योत्पादेऽभिधाना-

---

१. ऋ.सं.१०/१९०/३ ।

२. तै.ब्रा.३/१/४/१ ।

३. भाष्य ३३१-३३६ ।

भिधेयाविच्छेदे हि संबन्धनित्यत्वं भवेत् । एवमध्यापकाध्येतृपरंपराविच्छेद वेदस्य नित्यत्वं स्यात् । निरन्वयस्य तु जगतः प्रविलयेऽत्यन्तासतश्चापूर्वस्योत्पादेऽभिधानाभिधेयावत्यन्त-मुच्छिन्नाविति किमाश्रयः संबन्धः स्यात् ? अध्यापकाध्येतृसंतानविच्छेदे च किमाश्रयो वेदः स्यात् । नच—जीवास्तद्वासनावासिताः सन्तीति—वाच्यम्; अन्तःकरणाद्युपाधिकल्पिता हि ते तद्विच्छेदे न स्थातुमर्हन्ति । नच ब्रह्मणस्तद्वासना; तस्य विद्यात्मनः शुद्धस्वभावस्य तदयोगात् । ब्रह्मणश्च सृष्ट्यादावन्तःकरणानि तदवच्छिन्नाश्च जीवाः प्रादुर्भवन्तो न पूर्वकर्मविद्यावासनावन्तो भवितुमर्हन्ति; अपूर्वत्वात् । तस्माद्विरुद्धमिदं शब्दार्थसंबन्धवेदनित्यत्वं सृष्टिप्रलयाभ्युपगमेनेति । अभिधातृग्रहणेनाध्यापकाध्येतारावुक्तौ । शङ्कां निराकर्तुं सूत्रमवतारयति—तत्रदमभिधीयते समाननामरूपत्वादिति । यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्तिः तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिः सहावतिष्ठन्त एव । तथाच स्मृतिः—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ।' इति । ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिता यथा कूर्मदेहे निलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनासिततया घनाघ्नासारसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति, तथा पूर्ववासनावशात्पूर्वसमाननामरूपाण्युत्पद्यन्ते । एतदुक्तं भवति—यद्यपीश्वरात्प्रभवः संसारमण्डलस्य; तथापीश्वरः प्राणभृत्कर्मविद्यासहकारी तदनुरूपमेव सृजति । नच सर्गप्रलयप्रवाहस्यानादितामन्तरेणैतदुपपद्यत इति सर्गप्रलयाभ्युपगमेऽपि संसारानादिता न विरुध्यत इति । तदिदमुक्तम्— उपपद्यते चाप्युपलभ्यते चागमत इति । स्यादेतत्—भवत्वनादिता संसारस्य, तथापि महाप्रलयान्तरिते कुतः स्मरणं वेदानामित्यत आह—अनादौ च संसारे यथा स्वापप्रबोधयोरिति । यद्यपि प्राणमात्रावशेषतातन्निःशेषते सुषुप्तप्रलयावस्थयोर्विशेषः तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणविद्यावशेषतासाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम्[१] ।

---

१. भामती-पृ.-३३१-३३५ ।

तत्र भामत्यां "कर्मविक्षेपकाविद्यावासनाभिः" एतद् ग्रन्थेन संस्काररूपाद्द्वितीया अविद्या सूचिता । संस्काररूपाविद्याविंष्टाप्रथमाविद्या। अथवा अनादित्वात् तयोः पूर्वपूर्वाविद्यावासनाविष्टोत्तरोत्तराविद्या प्रपञ्चसहकारिणीति बोध्यम् । वासनासंस्कारः । उक्तञ्च तत्रैव कल्पतरौ—कर्मविक्षेपिकाविद्याः भ्रान्तयस्तासां वासनाभिरित्यर्थः । भ्रमात्संस्कारतश्चान्या मण्डूकमृदुदाहृतः । भावरूपा मताऽविद्या स्फुटं वाचस्पतेरिह । अप्रज्ञातं प्रत्यक्षतः । अलक्षणमननुमेयम् । अप्रतर्क्यं तर्कागोचरः । अविज्ञेयमागतमः । साक्षिसिद्धस्य ह्यज्ञानस्यागमादिभिरसत्त्वनिवृत्तिः क्रियते ।[१] पूर्वपूर्ववासनाऽभावे हिंस्राहिंस्रादि-व्यवस्थानुपपत्तेरवश्यं वासनावशेषः स्वीकार्यः ।

**भावरूपाविद्यायां प्रमाणं प्रयोजनञ्च–**

कर्मविक्षेपिकाविद्याः भ्रान्तयस्तासां वासनाभिरित्यर्थः । भ्रमात्संस्कारतश्चान्या मण्डूकमृदुदाहृतेः । भावरूपा मताऽविद्या स्फुटं वाचस्पतेरिह । अप्रज्ञातं प्रत्यक्षतः । अलक्षणमननुमेयम् । अप्रतर्क्यं तर्कागोचरः । अविज्ञेयमागमतः । साक्षिसिद्धस्य ह्यज्ञानस्यागमादिभिरसत्त्वनिवृत्तिः क्रियते । ननु—किं भावरूपयाऽविद्यया प्रयोजनम् ? अज्ञातशुक्तिब्रह्मविवर्तत्वेन रजतजगद्भ्रमसिद्धेः, अज्ञातत्वस्य च ज्ञानाभावादुपपत्तेः । तन्न; स्वयंप्रभप्रत्यग्ब्रह्मणः स्वविषयप्रमाणानुदयेऽपि यथावत्प्रकाशापत्तौ जगद्भ्रमाभावप्रसङ्गात् । नहि स्वयंप्रभं संवेदनं स्वविषयप्रमाणानुदयान्न भाति । यद्यपि शुक्तिं स्वत एव जडमविद्यानावृणोति; तथापि तत्स्थानिर्वाच्यभावरूपरजतोपादानत्वेनेष्टव्येति भावरूपाविद्या सप्रयोजना । प्रमाणं तु डित्थप्रमा, डित्थगतत्वे सति यः प्रमाभावस्तत्त्वानधिगरकरणानादिस्वप्रागभावनिवर्तिका, प्रमात्वाद् डपित्थप्रमावत् । ये तु प्रमा स्वप्रागभावनिवृत्तिरेव, नतु निवर्तिकेति मन्यन्ते, तान् प्रति निवर्तिकेत्यस्य स्थाने निवृत्तिरिति पठितव्यम् । न चैतदसमवेतत्वमेतदन्यसमवेतत्वं चोपाधिः; एतत्सुखादीनामेतन्निष्ठप्रमाभावत्वरहितानादिस्वप्रागभावनिवर्तकत्वेन साध्ये

---

१. कल्पतरूः पृ.३३३ ।

विद्यमानेऽपि उपाध्यभावेन साध्याव्याप्तेरिति। त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिश्च मानम्। नच प्रमाणतो न जानामि किंतु जाने इति व्यपदेशार्थः, तथा सति को मदुक्तोऽर्थं इत्युक्तेऽनुवदेन्न च शक्नोति। नच सामान्येन ज्ञाते विशेषतोऽज्ञानम्; सामान्यस्य ज्ञातत्वात्, विशेषस्य चाबुद्धस्याज्ञानव्यावर्तकत्वेन प्रतिभासायोगात्, प्रमितत्वे चाज्ञातत्वव्याघातात्, स्मृतत्वे चानुवादापातात्। मम तु भावरूपाज्ञानस्य सविषयस्य साक्षिण्यध्यासात्प्रतिभासां न मानत इत्यविरोधः। नच—मानाभाव एव तस्मिन्नध्यस्तो भासत इति—वाच्यम्; स्वप्रभे भावरूपाविद्यातिरोधानमन्तरेणाध्यासायोगस्योक्तत्वात्। पराक्रान्तं चात्र सूरिभिरिति।

तथाहि—चित्सुखीग्रन्थे विवरणे अद्वैतसिद्धौ भावरूपानिवर्चनीयाज्ञाने प्रमाणमुक्तम्—

**चित्सुखीयाज्ञानसाधकानुमानविमर्शः-**

**देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः ।**

**अनादेर्ध्वंसिनी मात्वाद् अविगीतप्रमा यथा ।।**

विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद् यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम्। ये तु प्रमा प्रागभावनिवृतितरेव, न तु निवर्तिकेति मन्यते, तान् प्रति देवदत्तप्रमा तनिनष्ठप्रमाभावातिरिक्तानादिनिवृत्तिरिति प्रयोक्तव्यम्। इत्थमत्र प्रयोगः—देवदत्तप्रमाणज्ञानमेतन्निष्ठप्रमाणाभावत्वानधिकरणानादिनिवर्तकम्, प्रमाणत्वाद् यज्ञदत्तप्रमाणवत्।

अत्रानुमाने दृष्टान्ते साध्यसमन्वयः। यज्ञदत्तप्रमायां देवदत्तनिष्ठप्रमाप्रागभावातिरिक्त-स्वीयप्रागभावस्यानादेनिवर्तकत्वमस्त्येव प्रमात्वरूपहेतुरपीति। एवञ्च पक्षधर्मताबलात् पक्षेऽपि साध्यसमन्वयाय देवदत्तीयप्रमाप्रागभावातिरिक्तानादिः कश्चिद् भावो मन्तव्यः। स चाज्ञानमेव ज्ञानेन स्वप्रागभावातिरिक्तस्वाज्ञानस्यैव निवर्तनात्।

अनादिनिवर्तकमित्युक्ते प्रागभावमादायार्थान्तरता। अतोऽभावातिरिक्तेति। तावत्युक्तौ त्वप्रसिद्धविशेषणता, अतो देवदत्तनिष्ठेत्युक्तम्। यज्ञदत्तनिष्ठप्रमाणे देवदत्तनिष्ठप्रमाभावा-

विद्यमानेऽपि उपाध्यभावेन साध्याव्याप्तेरिति। त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिश्च मानम्। नच प्रमाणतो न जानामि किंतु जाने इति व्यपदेशार्थः, तथा सति को मदुक्तोऽर्थं इत्युक्तेऽनुवदेन्न च शक्नोति। नच सामान्येन ज्ञाते विशेषतोऽज्ञानम्; सामान्यस्य ज्ञातत्वात्, विशेषस्य चाबुद्धस्याज्ञानव्यावर्तकत्वेन प्रतिभासायोगात्, प्रमितत्वे चाज्ञातत्वव्याघातात्, स्मृतत्वे चानुवादापातात्। मम तु भावरूपाज्ञानस्य सविषयस्य साक्षिण्यध्यासात्प्रतिभासो न मानत इत्यविरोधः। नच—मानाभाव एव तस्मिन्नध्यस्तो भासत इति—वाच्यम्; स्वप्रभे भावरूपाविद्यातिरोधानमन्तरेणाध्यासायोगस्योक्तत्वात्। पराक्रान्तं चात्र सूरिभिरिति।

तथाहि—चित्सुखीग्रन्थे विवरणे अद्वैतसिद्धौ भावरूपानिवर्चनीयाज्ञाने प्रमाणमुक्तम्—

**चित्सुखीयाज्ञानसाधकानुमानविमर्शः—**

**देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः।**
**अनादेर्ध्वंसिनी मात्वाद् अविगीतप्रमा यथा॥**

विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद् यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम्। ये तु प्रमा प्रागभावनिवृतितरेव, न तु निवर्तिकेति मन्यते, तान् प्रति देवदत्तप्रमा तनिनष्ठप्रमाभावातिरिक्तानादिनिवृत्तिरिति प्रयोक्तव्यम्। इत्थमत्र प्रयोगः—देवदत्तप्रमाणज्ञानमेतन्निष्ठप्रमाणाभावत्वानधिकरणानादिनिवर्तकम्, प्रमाणत्वाद् यज्ञदत्तप्रमाणवत्।

अत्रानुमाने दृष्टान्ते साध्यसमन्वयः। यज्ञदत्तप्रमायां देवदत्तनिष्ठप्रमाप्रागभावातिरिक्त-स्वीयप्रागभावस्यानादेनिवर्तकत्वमस्त्येव प्रमात्वरूपहेतुरपीति। एवञ्च पक्षधर्मताबलात् पक्षेऽपि साध्यसमन्वयाय देवदत्तीयप्रमाप्रागभावातिरिक्तानादिः कश्चिद् भावो मन्तव्यः। स चाज्ञानमेव ज्ञानेन स्वप्रागभावातिरिक्तस्वाज्ञानस्यैव निवर्तनात्।

अनादिनिवर्तकमित्युक्ते प्रागभावमादायार्थान्तरता। अतोऽभावातिरिक्तेति। तावत्युक्तौ त्वप्रसिद्धविशेषणता, अतो देवदत्तनिष्ठेत्युक्तम्। यज्ञादत्तनिष्ठप्रमाणे देवदत्तनिष्ठप्रमाभावा-

तिरिक्तानादेस्तत्प्रागभावस्य निवर्तकत्वं सुप्रसिद्धम्। पूर्वज्ञानसुखादिव्यवच्छेदार्थमनादिग्रहणम्। ननु देवदत्ताप्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वमुपाधिः। तथाहि पक्षे अस्यासत्त्वात् साधनाव्यापकत्वम्, दृष्टान्ते च देवदत्तप्रमाप्रागभावातिरिक्तस्वीयप्रागभावनिवर्तकत्वस्य सत्त्वात् साध्यव्यापकत्वमिति चेत्, न, देवदत्तप्रमाप्रागभावातिरिक्ततदीयव्यवहारप्रागभावस्यापि-निवर्तकत्वाद् उपाधेः पक्षेऽपि सत्त्वात् साधनव्यापकत्वात्। ननु देवदत्तनिष्ठप्रमाणज्ञानस्य देवदत्तनिष्ठप्रमाप्रागभावातिरिक्ततदीयव्यवहारप्रागभावस्य निवर्तकत्वे अर्थान्तरता स्यात्, सिद्धसाधनं वेति चेत्, न साध्यदले साक्षाद् निवर्तकत्वस्य निवेशात् प्रमाणज्ञानेन च साक्षाद् निवर्त्यत्वमज्ञानस्यैव, न तु व्यवहारप्रागभावस्येति। तस्य निवर्तकता तदीयव्यवहारस्यैवेति नार्थान्तरादिदोषः।

अथवा देवदत्तप्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वस्य देवदत्तप्रमाणमात्रे असत्वात् पक्षेतरत्वतुल्योऽयमुपाधिः, पक्षेतरत्वस्येव पक्षेतरत्वतुल्यस्यापि अनुपाधित्वात्, अन्यथानुमानोच्छेदप्रसङ्गः।

ननु प्रमात्वमीश्वरप्रमायां तत्र च देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकत्वं नास्ति। तस्या नित्यत्वात् प्रागभावस्यासत्वाद् अतो व्यभिचार इति चेत्, न, ईश्वरप्रमायाः साधारणकारणत्वात् तस्या सर्वस्यापि निवर्तकत्वाद् यज्ञदत्तप्रागभावस्यापि निवर्तकत्वमस्त्येवेति देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकत्वस्य साध्यस्यापि सत्त्वाद् व्यभिचाराभावात्।

ननु विवादपदम् (देवदत्तप्रमा) अनादेर्भावस्य निर्वत्तकं न भवति, पदार्थत्वाद्, घटादिवदिति प्रत्यनुमानविरोध इति चेत्, न, यद्यनेन प्रतिरोधेन अनादिभावस्य कस्यचिद् निवर्तकत्वाभावः साध्यते चेत्, सत्ताद्रव्यत्वादेरपि अनिर्वर्तकत्वेन सिद्धसाधनम्। यदि चोभयसम्मतानादिभावव्यतिरिक्तानादेर्भावस्य अभावविलक्षणस्यानिवर्तकत्वं साध्यते, तदा तादृशस्यानादेर्भावस्याभावविलक्षणस्य तव मतेऽसम्भवत्वाद् अप्रसिद्धविशेषणतापत्तेः।

अथ विगीता प्रमा, प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वात्,

यज्ञादत्तप्रमावदिति प्रतिरोधः । तथा च प्रमा प्रागभावातिरिक्तैतन्निष्ठानादेः सुखादिप्रागभावस्यानिवर्तकत्वमन्यदीयप्रमायां प्रसिद्धमिति नाप्रसिद्धविशेषणता । अत्रैतन्निष्ठेति निवेशाभावे दृष्टान्तासिद्धिः । यज्ञादत्तप्रमाया एतत् प्रमाभावातिरिक्तस्वप्रमाप्रागभावस्य निवर्तकत्वाद् एतन्निष्ठस्यानादेरनिवर्तकत्वमित्येवोक्तौ तु बाधः । एतन्निष्ठस्यानादेः प्रागभावस्य निवर्तकत्वात् पक्षे साध्याभावात्, अत प्रमाभावातिरिक्तेति । प्रत्यासत्त्या प्रमापदेन पक्षीकृतप्रमैव ग्राह्या ।

न चाभावातिरिक्तत्वमेवास्तु विशेषणम्, किं प्रमापदेन निविष्टेनेति वाच्यम्, अप्रसिद्धविशेशणतापत्तेः । दृष्टान्ते यज्ञदत्तीयप्रमाभावातिरिक्तस्यानादेः कस्यचित् अनिवर्तकत्वाप्रसिद्धेः । सुखादिप्रागभावस्यैतन्निष्ठस्य निवर्तकत्वानधिगकरणत्वं यज्ञदत्तीयप्रमायां प्रसिद्धमिति अभावातिरिक्तत्वनिवेशे च सुखादिप्रागभावातिरिक्तस्य कस्यचिदनिवर्तकत्वासिद्धेः । अतः प्रमाभावातिरिक्तेत्युक्तम् । एवञ्च एतदिति प्रमायामनिवेशेनापि न कश्चिद् दोष इति चेत्, न, देवदत्तनिष्ठं प्रमाणज्ञानं देवदत्तनिष्ठानाद्यभावानिवर्तकत्वानधिकरणं प्रमाणज्ञानत्वाद् यज्ञदत्तप्रमाणज्ञानवदिति अनुमानाभाससमानयोगक्षेमत्वात् । तथाहि आभासत्वमस्यानुमानस्य बाधादिदोषदुष्टत्वाद् बोध्यम् । देवदत्तप्रमाणज्ञाने देवदत्तनिष्ठानाद्यभावस्य तत्प्रागभावस्य निवर्तकत्वात् । तथैव प्रकृतेऽपि प्रमायाः प्रमाभावातिरिक्तैतन्निष्ठानादेरज्ञानस्य निवर्तकत्वाद् बाधादिदोषः प्रभवति ।

किञ्च एतदसमवेतत्वस्य एतदन्यसमवेतत्वस्य चोपाधित्वाद् अपि आभासता । तथाहि देवदत्तनिष्ठे प्रमाणज्ञाने एतदन्यसमवेतत्वस्यासत्वाद् एतदसमवेतत्वस्य वा असत्वाद् साधनाव्यापकत्वम् । दृष्टान्ते यज्ञदत्तप्रमायां चोपाधेः सत्वात् साध्यव्यापकत्वमिति । एवञ्च हेतोः सोपाधिकत्वाद् व्याप्यत्वासिद्धेः । तथैव प्रकृतेऽपि 'विगीता प्रमा' प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वात् यज्ञदत्तप्रमावदित्यत्रापि उक्तोपाधेः सत्त्वाद् दोषः ।

"न च देवदत्तप्रमा देवदत्तनिष्ठत्वे सति देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वानधिकरणं प्रमात्वाद् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षता ।"

अयम्भावः—यज्ञदत्तप्रमायां देवदत्तनिष्ठवसमानाधिकरणं देवदत्तप्रमा वातिरिक्तानादेर्निवर्तकत्वानधिकरणत्वमस्त्येवेति तत्र साध्यसमन्वयः । अतः देवदत्तनिष्ठत्वाभावे दृष्टान्तः साध्यविकलः स्यात्, तत देवदत्तप्रमाभावातिरिक्तस्य स्वीयप्रमाप्रागभावस्यानादेर्निवर्तकत्वात् ।

पूर्वप्रदत्तसत्प्रतिपक्षेनात्र भेदः । तत्र प्रमासामान्यस्य ग्रहणम्, इह तु देवदत्तीया प्रमैव साध्यकुक्षौ प्रविष्टा इति बोध्यम् । एवञ्च सत्प्रतिपक्षता स्यादिति चेत्, न; एतन्निष्ठनिवर्तकत्वानधिकरणत्वस्योपाधित्वात् । तथा हि पक्षे देवदत्तप्रमायामुपाधेरभावात् साधनाव्यापकत्वम् । तत्रैतन्निष्ठनिवर्तकत्वाधिकरणत्वस्यैव सत्त्वात् । दृष्टान्ते च साध्यव्यापकत्वमिति भवत्युपाधित्वमस्य । तथा च साध्यव्यापकोपाध्यभावेन साध्याभावसाधनस्योपाधेः प्रयोजनत्वात् प्रकृते यत्रैतन्निष्ठनिवर्तकत्वानधिकरणत्वं नास्ति, तत्र देवदत्तनिष्ठत्वसमानाधिकरणदेवदत्तप्रमाभावातिरिक्तानादेर्निवर्तकत्वानधिकरणत्वं नास्तीति उपाध्यभावसाध्याभावयोर्व्याप्तिः । गृहीता चेयमेतत्सुखादौ । तत्र हि एतत्सुखप्रागभावरूपानादेर्निवर्तकत्वाद् एतन्निष्ठनिवर्तकत्वानधिकरणत्वाभावोऽस्त्येव । देवदत्तनिष्ठत्वसमानाधिकरणदेवदत्तप्रमाप्रागभावातिरिक्तानादेः सुखादिप्रागभावस्य निवर्तकत्वाद् उक्तसाध्याभावोऽप्यस्त्येवेति एतत्सुखादौ व्यतिरेकव्याप्तिसिद्धेः, उक्तानुमानस्य हीनबलत्वात् सत्प्रतिपक्षत्वाभावात् । एवञ्चायमुपाधिः विगीता प्रमा प्रमाभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वाद् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षेऽपि योज्यः । एवञ्च सिद्धान्तानुमानं निर्दुष्टम् ।

किञ्चोक्तेषु सत्प्रतिपक्षेषु देवदत्तनिष्ठप्रमाभावातिरिक्तानादेर्निवर्तकत्वाभावः साध्यः । तत्र तादृशानादेः निवर्तकत्वं प्रसिद्धमप्रसिद्धं वेति उभयत्र व्याहतिः । अप्रसिद्धौ तद् घटितसाध्यस्यापि अप्रसिद्ध्या साध्याप्रसिद्धेः । प्रसिद्धिश्च यदि पक्षे, तदा तत्र तदभावासिद्धेः। अन्यत्र च प्रसिद्धिः सम्भावितापि नास्ति । देवदत्तगतानादिनिवर्तकत्वं तदतिरिक्तप्रमायां न सम्भवति । ननु सिद्धान्तानुमाने प्रमापदेन प्रमात्वव्याप्यस्य सर्वस्य ग्रहणे साक्षिज्ञानस्यापि

ग्रहणात् तत्र सुखादिकत्वाभावाद् बाधः स्यात्, साक्षिज्ञानस्याज्ञाननिवर्तकत्वाभावादिति चेत्, न; अत्र प्रमापदेन अन्तःकरणवृत्तेरेव ग्रहणात्।

ननु येषां मते सुखाद्याकारान्तःकरणवृत्तिः कल्प्यते, तन्मते सुखादिज्ञानस्यापि प्रमापदेन ग्रहणम्। यथोक्तम् वेदान्तपरिभाषायाम्—"अन्तःकरणतद्धर्माणां केवलसाक्षि-विषयत्वेऽपि तत्तदाकारवृत्त्युपगमेनोक्तलक्षणस्य तत्रापि सत्त्वाद् नाव्याप्तिः। न चान्तःकरणं तद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यम्, न हि वृत्तिं विना साक्षिविषयत्वं केवलसाक्षिविषयत्वम्; किन्तु इन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम्। अत एवाहङ्कारटीकायामाचार्यैरहमाकारान्तःकरणवृत्तिरङ्गीकृता। अत एव प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिः साम्प्रदायिकैरङ्गीकृता। तथा चान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्वान्नाव्याप्तिः।

एवञ्च सुखादीनामपि वृत्तेरभ्युपगमे प्रमापदेन तस्या अपि ग्रहणे बाधः स्यादेवेति चेत्, सुखादीनां वृत्तिं विनैव साक्षिवेद्यतेति मते तस्यानुमानस्य प्रवृत्तत्वात्। अत एव एतच्चित्सुखीयानुमानविवरणप्रस्तावे अद्वैतसिद्धौ उक्तम्—"सुखादिज्ञानेषु न बाधः, अन्तःकरणवृत्तेरेव प्रमापदेनोक्तेः"। एतेन मधुसूदनसरस्वतीभिः स्पष्टमेवाभिहितं यत् सुखादीनां वृत्तिर्न भवतीति।

**सुखादिवृत्त्यभ्युपगमविमर्शः–**

ननु सुखादीनां वृत्त्यनभ्युपगमे तेषां कथं प्रत्यक्षत्वम्? विषयप्रत्यक्षत्वप्रयोजकत्वस्य स्वविषयवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्नसत्ताकत्वस्य तत्राभावात्। एवञ्च सुखादिज्ञानस्यापि प्रत्यक्षत्वप्रयोजकत्वस्यान्तःकरणावच्छिन्नचैतन्यवृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्यस्याभेदस्य तत्राभावात्।

किञ्च सुखादीनां वृत्त्यनभ्युपगमे सुखादिज्ञानं न सुखादिवृत्त्यवच्छिन्नं चैतन्यम्; अपि तु शुद्धचैतन्यमेव तथा च तादृशस्यानुभवस्य नित्यस्य चैतन्यस्य संस्कारजनकत्वाभावेन तेषां स्मरणं नोपपद्येत इति चेत्, न, सुखादीनां वृत्त्यनभ्युपगमे अपि तेषां साक्षिणा

साक्षात्सम्बद्धत्वात् स्वसत्तायां प्रकाशाव्यभिचारित्वाच्च आवरणाभावात्, तद्भङ्गार्थं नित्यमेव चिदुपरक्तत्वात् चिदुपरागार्थमभेदाभिव्यक्त्यर्थं वा वृत्तेः कल्पनं व्यर्थमेव। उक्तप्रत्यक्षलक्षणस्य सन्निकर्षजप्रत्यक्षानुगतत्वे बाधकाभावाद् मानसप्रत्यक्षस्थले साक्षिभास्यत्वस्यैव लाघवाद् कल्पनीयत्वात्। तत्र वृत्तिकल्पनेऽपि नान्तःकरणपरिणामरूपत्वं तस्या अपि तूल्लासमात्रत्वम्।

यदि उल्लासोऽपि मनःपरिणाम एव, तर्हि प्रकृतानुमाने देवदत्तप्रमापदेन आवरणभङ्गार्थान्तःकरणपरिणामरूपवृत्तेरेव ग्रहणं बोध्यम्।

ननु किमर्थं वृत्यभ्युपगम इति कथं न जीवोऽपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव विषयं प्रकाशयतीति चेत्, न, ब्रह्मचैतन्यं तावत् सर्वोपादानतया सर्वप्रपञ्चतादात्म्यापन्नं संसृष्टं सर्वमवभासति, न जीवचैतन्यं तस्योपहितत्वात्। यद्यपि जीवोऽपि सर्वगतः, तथापि अनुपादानत्वात् न सर्वसङ्गी। ननु सर्वासङ्गीजीवः किमपि नावभासयेतेति चेत्, न, असङ्गी अपि केवलं स्वभावान् मनःसङ्गीति। एवञ्च अन्तःकरणस्य प्रकाशकत्वात् तद्वृत्तिद्वारा विषयदेशं गतः सन् विषयावच्छिन्नचैतन्येनाभेदापन्नो विषयदेशं गतः सन् विषयावच्छिन्नचैतन्येनाभेदोपन्नो विषयस्यापि अनावृत्तस्य प्रकाशकः। अत एवोक्तं सिद्धान्तलेशसंग्रहे—

**बुद्धो संसृज्यते जीवः सर्वगो व्यक्तिजातिवत्।**
**अन्यैस्तद्वृत्त्युपारूढो ज्ञाता विवरणे स्थितः ।।६२।।**
**यद्वान्तःकरणोपाधिर्जीवो वृत्त्या बहिर्गतः।**
**विषयब्रह्मचैतन्याभेदव्यक्त्यार्थभासकः ।।६३।।**
**अथवा सर्वगोऽविद्याकृतोऽसौ न प्रकाशते।**
**बुद्धावनावृत्तो वृत्तिभग्नावरणभासकः ।।६४।।**
**वृत्तेश्चिदुपरागो वा अभेदव्यक्तिरेव वा।**
**फलमावृत्तिभङ्गो वा तत्राद्यं कीदृशं भवेदिति[१] ।।६५।।**

१. सिद्धान्तलेशः-पृ.१४६।

तत्राद्वैतसिद्धावपि 'तथा हि अन्तःकरणं चक्षुर्वत्तेजोऽवयवि, तच्चेन्द्रियद्वारेण तत्संयुक्तं विषयं व्याप्य तदाकारं भवति। यथा नद्याद्युकं प्रणाल्या निःसृत्य केदाराद्याकारं भवति, सैव वृत्तिरित्युच्यते। तत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतमन्तःकरणोपाधिकं सत् परिच्छिन्नमिति मतद्वयम्। तत्राद्ये विषयप्रकाशकं जीवचैतन्यम्, द्वितीये ब्रह्मचैतन्यम्। आद्ये पक्षेऽपि जीवचैतन्यमविद्यानावृत्तम्, आवृतञ्चेति। तत्राद्ये वृतितर्जीवचैतन्यस्य विषयोपरागार्था, द्वितीये त्वावरणाभिभवार्था। अनावृत्तत्वपक्षे हि अनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते, न तु विषयैः, असङ्गत्वात्। यथा गोत्वं सर्वगतमपि सास्नादिमद्व्यक्त्याऽभिव्यज्ञते, न तु केसरादिमद्व्यक्त्या।

यथा वा प्रदीपप्रभा आकाशरसगन्धव्यापिन्यपि तान् प्रकाशयन्ती रूपसंसर्गितया रूपमेव प्रकाशयति, तद्वत् केवलाग्न्यदाह्यस्यापि अयःपिण्डादिसमारूढाग्निदाह्यवच्च केवलचैतन्याप्रकाशस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढतत्तदुपरागे तत्तदर्थप्रकाशः। अन्तःकरणावच्छिन्नचैतन्यरूपत्वे जीवस्यावच्छेदकान्तःकरणतत्तद्विषयाकारवृत्त्या तत्तद्विषयावच्छिन्नचैतन्याभिव्याक्तौ तत्तदर्थप्रकाशो यद्यपि प्रकाशकमधिष्ठानचैतन्यं सर्वगतं जीवचैतन्यं चान्तःकरणावच्छिन्नम्, तथापि चैतन्याभेदेनाभिव्यक्तत्वाद् व्यवस्थोपपत्तिः।

एवञ्चानेन ग्रन्थेन ज्ञायते यदन्तःकरणस्य बहिर्विषयाकारपरिणाम एव वृत्तिपदेनोच्यते। आन्तरधर्मादीनां या वृत्तिर्नैव सा परिणामः, अपि तु आकाराख्यः कश्चिदुल्लासरूपः। अन्यथाऽन्तःकरणतद्धर्मादीनां त्रयाणामपि प्रयोजनानामभावाद् वृत्तिकल्पनं व्यर्थमेव स्यात्। अतस्तेषां केवलं साक्षिवेद्यत्वं सिद्धं भवति। केवलापदेन च वृत्तेर्निरासः। वृत्तिमनपेक्ष्य साक्षिवेद्यत्वमित्यर्थः। वेदानतपरिभाषाकारमतेन च तत्रापि वृत्तिः कल्पनीया। प्रकृतानुमानञ्च येषां मते सुखादीनां वृत्तिर्नास्ति, तेषां मते बोध्यम्। एतन्मते अन्तःकरणतद्धर्माणां केवलसाक्षिवेद्यतैव सुखादीनाञ्च तथैवापरोक्षत्वमिति दिक्।

**अनिर्वचनीयाज्ञानसाधकं विवरणोक्तमनुमानम्–**

एवञ्च तादृशाज्ञाने विवरणोक्तमनुमानमपि प्रमाणम्। तथाहि विवादपदं प्रमाणाानं स्वप्रागभावव्यतिरिक्तविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थ-प्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति।

अत्र ज्ञानमात्रस्य पक्षत्वे अनुवादज्ञानस्यापि ग्रहणात् तत्र हेत्वसिद्धिः, अतः प्रमाणेति। धारावाहिकव्यावृत्तये विमतमिति। प्रमाणञ्च वृत्तिरेव गृह्यते, अन्यथा सुखादिप्रमायां बाधः स्यात्, तस्याः साक्षिचैतन्यरूपत्वात्, अज्ञानानिवर्तकत्वात्। वस्तुपूर्वकमित्येवोक्तौ स्वाश्रयेणात्मना सिद्धसाधनता स्यात्, अतो वस्त्वन्तरपूर्वकमित्युक्तम्। स्वाश्रयातिरिक्त-सामग्रीचक्षुरादिनिवृत्यर्थं स्वदेशगतेति। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमात् पूर्वज्ञानस्य निवृत्यर्थं स्वविषयावरणेति। अदृष्टादिव्यावृत्यर्थं स्वनिवर्त्येति। प्रागभावव्यावृत्यर्थं प्रागभावव्यतिरिक्तेति।

अभावस्यावारकत्वं नास्तीति मते तु साध्यद्वयं बोध्यम्, स्वप्रागभावव्यतिरिक्त-स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्येकम्, स्वविषयावरणस्वनिवर्त्यस्वदेशगत-पूर्वकमित्यपरम्। एवञ्चानुमानद्वयं बोध्यम्।

हेतुकोटौ, धारावाहिकज्ञानेषु व्यभिचारवारणाय अप्रकाशितेति। धारावाहिकप्रभा-सूभयवैकल्यं वारयितुं प्रथमेति। आतपवति देशे समुत्पन्नदीपप्रभायां व्यभिचारं वारयितुमन्धकारेति। न चात्र चक्षुर्ग्राह्यत्वमुपाधिः। तथाहि दृष्टान्ते प्रथमोत्पन्नप्रदीपप्रभायां तस्योपाधेः सत्त्वात् साध्यव्यापकता, पक्षे चासत्वात् साधनाव्यापकतेति वाच्यम्, तस्य पक्षेतरतुल्यत्वात्। अत्र पक्षेतरत्व पक्षमात्रावृत्तित्वम्, न तु पक्षेतरमात्रवृत्तित्वमिति बोध्यम्।

ननु धारावाहिकबुद्धिव्यावृत्तये विमतमित्युक्तं तन्न युक्तम्, धारावाहिकबुद्धीनाम-नधिगताबाधितविषयज्ञानत्वरूपप्रमात्वोपपत्तये तत्तत्क्षणावच्छिन्नार्थविषयत्वमवश्यं वक्तव्यम्। तथा तासामपि क्षणविशेषणेन अज्ञातज्ञापकत्वमस्त्येव, कालस्य च सर्वप्रमाणवेद्यत्वाभ्युगमात्।

उक्तञ्च वेदान्तपरिभाषायां ''**नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमाद् धारावाहिक-बुद्धेरपि पूर्वपूर्वज्ञानाविषयंतत्तत्क्षणविशेषविशिष्टविषयत्वेन न तत्राव्याप्तिः**[१] ।''

अद्वैतसिद्धावपि ''धारावाहिकबुद्धीनां च तत्तत्कालावच्छिन्नार्थविषयत्वेनाज्ञात-ज्ञापकत्वमस्त्येव । कालस्य सर्वप्रमाणवेद्यत्वाभ्युपगमात्'' इति चेत्, सत्यम्, इदं रजतमित्यादिस्थले इदमाकारवृत्तेरज्ञानानिर्वकत्वात् तद्व्यावृत्यर्थं विमतमिति देयम् । न च तस्या वृत्तेरपि अज्ञातज्ञापकत्वरूपप्रमात्वोपपत्तिर्न स्यादिति वाच्यम्, तत्र सुखादिप्रमावद् अबाधितत्त्वमादाय प्रमात्वोपपत्तिः, न तु तदुपपत्तस्तदविषयाज्ञानकल्पन युक्तम्, अन्यथा इदमाकारो भ्रम संशयो वा स्यात् । अत एवोच्यते—''धर्म्यंशे सर्वभ्रान्तं प्रकारे तु विपर्ययः । यदि च भ्रमसंशयाजनकमपि इदमाकारमज्ञानं विमतमिति पदं न देयम् । एवञ्च प्रमाणवृत्तित्वावच्छेदेनैवाज्ञाननिवर्तकत्वं बोध्यम् । परोक्षप्रमाया अपि असत्त्वापादकावरण-रूपाज्ञाननिवर्तकत्वमस्त्येवेति, न तत्र बाधः ।

ननु 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिबलात् सत्कार्यवादे अद्वैतमते स्वोपादाने कार्यस्य विद्यमानत्वात् कथं प्रागभाव उपपद्यते? आरम्भवादे च नैष दोषः, घटस्य स्वोत्पत्तेः प्रागसत्वाद् अस्त्येव प्रागभाव इति ।

किञ्च सिद्धान्ते कारणे कार्यस्य प्रागभावो यदि स्वीक्रियते, तदा कार्यकारणयोर्भेदोऽपि किं वा कार्यस्य कारणातिरिक्तत्वमपि गले पतितममिति चेत्, न, अस्यानुमानस्य परमतेन प्रवृत्तत्वात् । स्वमते ''तम आसीद्'', ''अज्ञानेनावृत्तं ज्ञानम्'' इत्यादि-श्रुति-स्मृत्योः प्रबलप्रमाणेनानुमानस्यानुपयोगात्, श्रुत्यर्थे चाविवादात् । येषां तु श्रुत्यर्थे विवादः, तदर्थमयमनुमानप्रयोगः ।

किञ्च सत्कार्यवादे अपि प्रागभावः समर्थयितुं शक्यते । तथाहि घटादेः स्वोपादाने मृत्तिकायां सत्त्वेऽपि स्वेन कम्बुग्रीवादिमद्रूपेण घट इति नाम्ना च तत्रासत्वात्, तेन

१. वे.प.पृ.२० ।

रूपेण पूर्वमभावोऽनुभूयत एवेति कार्यं स्वोत्पत्तेः पूर्वं कारणे कारणात्मना सदिति सत्कार्यवादाभिप्रायः। न तु स्वेन नाम्ना रूपेण च पूर्वविद्यमानमित्यर्थः। एवञ्च कार्यस्य कारणाद् अनन्यत्वमपि सिद्धम्। यथोक्तम् आरम्भणाधिकरणे—"**सत्त्वाच्चावरणस्य**"[१] इति सूत्रे भगवत्पादैः "इतश्च कारणात् कार्यस्यानन्यत्वम्, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते—"**सदेव सोम्येदमग्र आसीत्**"[२], "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादौ इदशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्याद् यच्च यदात्मना यत्र न वर्तते, न तत् तत् उत्पद्यते, यथा सिकताभ्यस्तैलम्। तस्मात् प्रागुत्पत्तेरनन्यत्वाद् उत्पन्नमपि अनन्यदेव कारणात् कार्यमित्यवगम्यते। यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति, एकञ्च पुनः सत्त्वमतोऽनन्यत्वं कारणात् कार्यस्य"[३]।

विस्तरेण च "**तदनन्यत्वमारम्भणशब्दादिभ्यः**"[४] इति सूत्रे भगवत्पादैरेतत् प्रतिपादितम्। एवञ्च कारणात्मना कार्यस्य कारणेऽवस्थितिः। कारणात्मना च कार्यस्यानन्यत्वं सिद्धं भवति। नाम्ना स्वरूपेण च व्यावहारिको भेदोऽपि उपपन्नो भवति। एवञ्च सिद्धान्तेऽपि कार्यरूपेण कारणे प्रागभावोऽस्त्येवेति।

**कार्यकारणयो र्भेदाभेदविमर्शः–**

उक्तञ्च परापरज्ञैः श्रीवाचस्पतिमिश्रैर्भामत्यां समन्वयाधिकरणे—"कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्तः। तथाहि आत्यन्तिके अभेदे अन्यतरस्य द्विरवभावप्रसङ्गः। भेदे चात्यन्तिके न सामानाधिकरण्यम्, नहि भवति कुण्डं बदरमिति नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति। सोऽयमबाधितो असंदिग्धः सर्वजनीनः

---

१. ब्र.सू. २/१/१९।

२. छा.उ. ६/२/१।

३. ब्रह्मसूत्रभाष्य-पृ.२०२।

४. ब्र.सू.२/१/१४।

सामानाधिकरण्यप्रत्यय एव कार्यकारणोर्भेदाभेदौ व्यवस्थापयति । तथा च कार्याणां कारणात्मत्वात् कारणस्य च सद्रूपस्य सर्वत्रानुगमात् सद्रूपेणाभेदः कार्यस्य जगतो भेदः कार्यरूपेण गोघटादिनेति । यथाहुः—

**कार्यरूपेण नानात्वमभेदः कारणात्मना ।**

**हेमात्मना यथाभेदः कुण्डलाद्यात्मना भिदा[1] ।। इति ।।**

स्वरूपेण कार्यकारणयोर्भेदो न पारमार्थिकः । उक्तञ्च—"**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्**"[2] वाचैव केवलमस्तीत्यारभ्यते विकारः—घटः, शराव इति भावः । कार्यनानात्वमेव नेह नानास्ति किञ्चनेत्यादि श्रुत्योच्यते बाध्यते च । एवञ्च सिद्धान्ते प्रागभावस्य व्यावहारिकस्य सत्त्वेऽपि न क्षतिः ।

ननु ज्ञानमज्ञानस्यैव निवर्तकमिति नियमात् स्वनिवर्त्यपदेनैव स्वप्रागभावस्यापि व्यावृत्तेः किमर्थः तदतिरिक्तत्वनिवेशेनेति चेत्, न, अत्रानुमाने स्वनिवर्त्येति पदं दत्तम्, न तु निवर्तकतावच्छेदकरूपं निविष्टम् । तथा च प्रमायाः प्रमात्वेन रूपेण अप्रमानिर्वतकत्वेऽपि प्रतियोगित्वेन रूपेण प्रागभावस्यापि निवर्तकत्वाद् यथैव अप्रमा स्वनिवर्त्या, यथा प्रागभावोऽपीति विशेषणं सार्थकम् ।

न चाभावस्यावारकत्वाभावात् स्वविषयावरणपदेनैव तद्व्युदास इति वाच्यम्, आवरणस्यात्र विपरीतबुद्धिकारित्वरूपत्वात् किं वा अस्ति प्रकाशत इति व्यवहारविरोधित्व-रूपत्वात् । तादृशस्यावरणस्य भावाभावसाधारणत्वात् । तादृशावारकत्वमभावस्यापीति तु बृहदारण्यकोपनिषदि घटभाष्ये भगवत्पादैरपि प्रतिपादितत्वात्, प्रतिबोधिता च वयं गुरुचरणैः ।

नन्वभावस्यापि तादृशरूपेणवारकत्वे भावरूपमज्ञानं किमर्थं स्वीक्रियते इति चेत्,

---

१. भामती, पृ.३८७ ।

२. छा.९/१/१ ।

न, अभावरूपाज्ञाने स्वीकृते जगदुपादानत्वं विरुध्येत । न हि अभावः कस्याप्युपादानं भवतीति केनापीष्यते । अभावो नावारक इति मते तु साध्यद्वये तात्पर्यमिति तूक्तमेव ।

विगीतो विभ्रम एतज्ज्ञानकारणाबाध्यातिरिक्तोपादानको विभ्रमत्वात् देवदत्तादि-विभ्रमवदिति द्वितीयं चित्सुखीयानुमानम् ।

एतज्ज्ञानकारणीभूतात् तज्जनकाद् अबाध्याद् अतिरिक्तोपादानं यस्येति भावः । तथा च दृष्टान्ते एतज्ज्ञानकारणीभूतो अबाध्य एष एव चैत्रः, तदतिरिक्तोपादानकत्वं देवदत्तविभ्रमस्येति साध्यसमन्वयः, तत्र च साध्यप्रसिद्धिः । पक्षे च पक्षधर्मताबलात् । एतज्ज्ञानकारणीभूताबाध्यैतदतरिक्तमज्ञानं तदुपादानमवश्यमेवमन्तव्यम् ।

अत्रातिरिक्तकारणस्य द्रव्यस्य परैरबाध्यत्वाङ्गीकारात् तदर्थमेतज्ज्ञानकारणेत्युक्तम् । एतज्ज्ञानकारणत्वानधिकरणोपादान इत्युक्ते व्याहतिस्तदर्थमबाध्यत्वातिरिक्तेत्युक्तम् । ततश्चाबाध्यत्वानधिकरणबाध्याज्ञानोपादानत्वं विभ्रमस्य सिद्धम् ।

ननु विभ्रमत्वमस्तु, बाध्याज्ञानोपादानत्वं मास्तु, इति चेत् न, सत्योपादानत्वे तस्य सत्यत्वप्रसङ्गाद् इति विपक्षे बाधकतर्कस्य जागरूकत्वात् ।

न च विगीतो विभ्रम एतज्ज्ञानजनकबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवदिति सत्प्रतिपक्ष इति वाच्यम्, मध्वमते एतस्यानुमानस्य प्रवृत्तत्वात् तन्मते बाध्यसदेव । न हि प्रातिभासिकालीकयोस्तन्मते भेदोऽस्ति । असतश्चाजनकत्वाद् एतज्ज्ञानजनकबाध्यत्वस्यैवा-प्रसिद्धत्वात् साध्याप्रसिद्धेः । ब्रह्मणोऽपि प्रपञ्चस्य विवर्तोपादानकत्वस्वीकारात् तस्य च अबाध्यत्वात् नानेनानुमानेन विरोधः । एवञ्च सिद्धसाधनतादोषोऽपि बोध्यः । न चोक्तानुमाने अनेतन्निष्ठत्वम्, एतदन्यसमवेतत्वं वोपाधिः, तस्य पक्षेतरतुल्यत्वात् । किञ्च एतत्समवेतसुख-दुःखादिषु साध्याव्याप्तेः । एतेनानुमानेन भ्रमोपादानमज्ञानमिति लक्षणमपि प्रामाणिकं भवति ।

न च समस्तस्य प्रपञ्चस्याज्ञानोपादानकत्वे सिद्धे सांख्यमतप्रवेशः, तत्रापि प्रकृतेरेव सर्वोपादानत्वात् । एवञ्च नाममात्रे विवाद इति वाच्यम् । बहुतरभेदात् परमेश्वराध्यस्ताऽ-

निर्वचनीयाऽविद्यापरिणामस्य विवर्तापरनाम्नो जगतः स्वीकारात्। तत्र प्रपञ्चस्य परिणामोपादानं माया, विवर्तोपादानञ्च ब्रह्मेति। ब्रह्मपरिणामः प्रपञ्च इति पक्षेऽपि परिणामो विवर्त इत्येव युक्तम्। विषमसत्ताककार्यापत्तिविवर्तः। समसत्ताककार्यापत्तिः परिणामः। ब्रह्मणः परिणाम इत्युक्तौ तु ब्रह्मणोऽनित्यत्वापत्तिः। जगतो वा पारमार्थिकत्वापत्तिरिति। न चैतत् आत्मन आकाशः सम्भूतः'' इत्यादि श्रुतयः प्रवृत्ताः। अस्यार्थः—वै निश्चयेन तस्मात् परमात्मनः एतस्माद् जीवाद् आत्मनः अनात्मनामधिष्ठानभूताद् जीवपरमात्मनोर- भेदरूपाखण्डार्थात् सच्चिदानन्दाद् आकाशः शब्दगुणः सम्भूत उत्पन्न इति। प्रकृतेः कारणत्वनिषेधस्तु रचनानुपपतेरित्यादि ब्रह्मसूत्रे भगवत्पादैः कृत एवेति तत एव द्रष्टव्यम्। एवञ्च विचित्ररचनानुपपत्तेः प्रधानस्य च अशब्दत्वाद् अप्रामाणिकत्वाद् न सांख्यमतं युक्तम्।

खण्डितञ्च सर्वं परमतं श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ चतुर्थश्लोकव्याख्यायाम्। तथा हि—

**न सांख्य न शैवं न तत् पञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा।**

**विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टः शिवः केवलोऽहम्॥**

आदिशब्देनानुक्तानां संग्रहः।

न तावदचेतनं जगदुपादानं 'तदैक्षत बहु स्याम प्रजायेय' इति ईक्षणपूर्वक सृष्टिश्रवणात्। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति च जीवात्मत्वव्यपदेशात्। 'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतिति सर्वविज्ञानमेकविज्ञानेन प्रतिज्ञानात् प्रधानज्ञानेन च तदप्रकृतिकानां पुरुषाणां ज्ञातुमशक्यत्वात्, 'ऐतदात्म्यमिदं सर्वम्' 'तत् सत्यं स आत्मा' तत्वमसीति च तदभेदस्य नवकृत्व उपदेशात्। 'तस्माद्वा एतस्माद् आत्मन आकाशः सम्भूतः' इति च श्रुत्यन्तरादचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः प्रधानमहदादेर-प्रामाणिकत्वाच्च न साङ्ख्यमतं साधु। एवं पाशुपतमतं पाञ्चरात्रिकं जैनं त्रैदण्डञ्च मतं श्रुतियुक्तिबाधितत्वादयुक्तम्।

न च विधिशेषत्वात् श्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तम्। **"असिद्धत्वात् विधिशेषत्वस्य"**[१], **"जन्माद्यस्य यतः"**[२], **"प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्"**[३] इत्यादि सूत्रेषु भगवत्पादैरपि ब्रह्मणो विवर्तोपादानत्वं प्रतिपादितमेवं तथा हि "अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति, तद् ब्रह्म" प्रकृतिश्चेत्यादि सूत्रेऽपि भगवत्पादैः ब्रह्मण उपादानत्वं प्रतिपादितमेव। तत्र ईक्षणपूर्वकसृष्टिश्रुतौ कार्येषु च वैरूप्यदर्शनाद् ब्रह्मणो निमित्तकारणत्वे प्राप्ते प्रतिज्ञादृष्टान्तानुपरोधाद् उपादानत्वं प्रतिपाद्यते। एकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञा। 'एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम्' इत्यादि दृष्टान्तः। न चैतो ब्रह्मणो निमित्तकारणत्वे उपपद्येते। तस्मादुपादानमेव जगतो ब्रह्मेति सिद्धं भवति।

ननु क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवदित्यादिना निमित्तत्वमेव परमात्मन आयाति। कथमुच्यते उपादानत्वमिति चेत्, न, कर्तृजन्यत्वव्याप्यः कार्यत्वहेतुर्न ब्रह्मणो अनुमापकः सम्भवति, तत्र सकर्तृत्वमात्रसाधने अदृष्टद्वारककृतिमादाय जीवेन सिद्धसाधनाद् अर्थान्तराच्च। सोपादानकत्वसाधने तु प्रधानेन सिद्धसाधनाद् अर्थान्तराच्च। श्रुतिविरोधस्तु अस्त्येवेति। जगत उपादानमेव ब्रह्म, निमित्तान्तराभावाच्च अभिन्ननिमित्तोपादानत्वं तस्योच्यते।

अत एवोक्तं सकलमभिप्रेत्य नयनप्रसादिन्याम्—'कूटस्थ तस्य वियदादिविकाराभावाद् अविद्यावेशवशाद् विकारे प्राप्ताप्राप्तविवेकेन तस्या एव विकारः। न चैवं सांख्यसिद्धान्तसंगतेरिह गन्धिता, परमेश्वराध्यस्तानिर्वचनीयाविद्यापरिणामस्य विवर्तापरनाम्नः स्वीकारात्। ईदृशमेव हेतुत्वमभिप्रेत्य "तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः" इत्यादि सृष्टिश्रुतयस्तथा जन्माद्यस्य यतः, प्रकृतिश्चेत्याद्यधिकरणान्यपि। अत एव धातुसमीक्षायां

---

१. सिद्धान्तबिन्दुः पृ.१२९।

२. ब्रह्मसूत्रम्-१/१/२।

३. ब्र.सू.-१/४/२३।

ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिरभिहितम्—

**शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः ।**

**ज्ञानज्ञेयादिरूपस्य मायैव जननी ततः ।। इति ।।**

एवञ्च भ्रमस्य विवर्तोपादानस्य ब्रह्मणि परिणामोपादानत्वमज्ञानस्यैव । भ्रमोपादानमज्ञानमिति लक्षणे उपादानपदं परिणामोपादानपरमिति बोध्यम् ।

**अद्वैतसिद्धौ अज्ञानेऽनुमानविमर्शः–**

'अद्वैतसिद्धौ' अज्ञानानुमानप्रमाणविचारे नव्यास्तु इति कृत्वा अनुमानानि उक्तानि । तानीह संक्षेपेण समीक्ष्यन्ते, तथाहि—विमता प्रमा प्रमाभावातिरिक्तानादेर्निवर्त्तिका, कार्यत्वाद् घटवत् । अत्र दृष्टान्ते घटे प्रमाभावातिरिक्तानादेर्घटप्रागभावनिवर्तककत्वमस्तीति साध्यसमन्वये सति पक्षधर्मताबलात् प्रमायामपि तत्प्रागभावातिरिक्तानाद्यज्ञानमादाय साध्यसमन्वयः । अत्रापि प्रमापदेनान्तःकरणवृत्तिरेव ग्राह्या । न च कार्यत्वमस्तु, तादृशानादेर्निवर्तकत्वं मास्तु, इति वाच्यम्, यद्यज्ञानं न स्यात्, तदा त्वदुक्तमर्थं न जानामीति प्रतीतिर्नोपपद्यते । तथा यदि अज्ञानं न स्यात्, तदा प्रपञ्चोऽज्ञानोपादानो न स्यात् । एवञ्च सत्यः स्यात्, सत्यत्वे च दृग्दृश्यसम्बन्धो नोपपद्येतेति बोध्यम् ।

अत्रानादेर्निवर्तकत्वमित्येवोक्ता प्रमाप्रागभावनिवर्तकत्वमादायार्थान्तरं सिद्धसाधनं वा स्यात् । पूर्वज्ञानादिनिवृत्त्यर्थमनादीति विशेषणं दत्तम् । न चेश्वरप्रमायां कार्यत्वाभावात् स्वरूपासिद्धिरिति वाच्यम्, अत्र प्रमापदेन जन्यप्रमायाः स्वीकारात् । न चात्र प्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्तकत्वं नास्तीति साधनाव्यापकत्वमिति वाच्यम्, तस्योपाधेः पक्षमात्रावृत्तित्वात् पक्षेतरतुल्यत्वात् । प्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वं प्रमायामेव नास्ति ।

न च प्रमा अभावातिरिक्तानादेर्निवर्तिका न भवति, पदार्थत्वात् पटवदिति प्रतिरोध इति वाच्यम्, सत्ताद्रव्यत्वादीनामपि निर्वतकत्वात् सिद्धसाधनम् । यद्युभयसम्मतानादि-

भावव्यतिरिक्तानादेर्भावस्यानिवर्तकत्वं साध्यते चेत्, तव मते तादृशस्यानादेर्भावस्याप्रसिद्धत्वात् साध्याप्रसिद्धिरिति पूर्वमेवोक्तम् ।

द्वितीयमनुमानम्—भ्रमानुत्तरप्रमा स्वाभावातिरिक्तस्वविरोधिनिवर्तिका प्रमात्वात्, भ्रमोत्तरप्रमावदिति । समन्वयश्चेत्थम्—दृष्टान्ते भ्रमोत्तरप्रमायां प्रमात्वहेतोः सत्वात् स्वप्रागभावातिरिक्तस्य स्वविरोधिनो रजतादिभ्रमस्य निवर्तकत्वरूपसाध्यस्यापि सत्वात् समन्वयः । पक्षे च भ्रमानुत्तरप्रमायां पक्षधर्मताबलात् स्वाभावातिरिक्तविरोधि अज्ञानं मन्तव्यम्, यस्य निवर्तकत्वं समागच्छेत् ।

स्वाभावातिरिक्तनिवेशाभावे भ्रमानुत्तरप्रमायां स्वविरोधिस्वप्रागभावनिवर्तकत्वमादाय साध्यपर्यवसानाद् अर्थान्तरता सिद्धसाधनं वेति, अतस्तदुक्तम्—स्वाभावातिरिक्त-निवर्तकत्वमात्रनिवेशे च पूर्वज्ञानादिनिवर्तकत्वमादाय सिद्धसाधनं स्यात् ।

न च भ्रमोत्तरत्वमुपाधिः, तस्य दृष्टान्ते सद्भावात् साध्यव्यापकत्वं पक्षे चाभावात् साधनाव्यापकत्वमिति वाच्यम्, भ्रमोत्तरकाले कस्मिंश्चिदपि व्यवहारे तदुत्तरत्वस्य सत्त्वेऽपि प्रमात्वाभावात् साधनव्यापकत्वात् । नन्वत्र पक्षकोटौ भ्रमानुत्तरत्वेऽपि निवेशः किमर्थः ? प्रमा स्वाभावातिरिक्तस्वविरोधिनिर्विका प्रमात्वात्, भ्रमोत्तरप्रमावदित्येवानुमानाकारः स्यात् । न च रजतभ्रमोत्तरकाले 'इयं शुक्तिः' इत्यादि प्रमायां स्वाभावितिरिक्तस्वविरोधि-रजतभ्रमनिवर्तकत्वस्य सिद्धसाधनमिति वाच्यम्, पक्षतावच्छेदकावच्छेदेनेनानुमितिपक्षे सिद्धसाधनाभावाद्अन्यथा प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरूप्यवदित्यत्रापि सिद्धंसाधनं स्यादिति चेत् न, पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ तावत् पक्षैकदेशे सिद्धौ सिद्धसाधनत्वस्य दोषत्वात् तत्पक्षे तद्दोषनिरासाय भ्रमानुत्तरत्वप्रमायां विशेषणात् ।

तृतीयं यथा—ज्ञानत्वं स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशवृत्तित्वात्, आलोकत्ववत् । दृष्टान्ते आलोकत्वे अप्रकाशितार्थघटादिप्रकाशवृत्तित्वमस्त्येव । तत्र स्वप्रकाशविषयीभूतघटाद्यावरणान्धकारविर्तकप्रकाशनिष्ठत्वमप्यस्त्येवेति समन्वयः । पक्षे

ज्ञानत्वे अप्रकाशितार्थस्याज्ञातस्य प्रकाशो ज्ञानं तद्वृत्तित्वं ज्ञानत्वे वर्तत एव। एवञ्च पक्षधर्मताबलात् स्वविषयावरणनिवर्तकनिष्ठत्वमपि भवत्येव। तत्रागत्याऽऽवरणमज्ञानमेव स्वीकर्तव्यमन्धकाराभावात्। अत्र साध्यकोटौ आवरणेति निवेशेन प्रागभावस्य व्यवच्छेदः, तस्यावारकत्वाभावात्। एवं पूर्वज्ञानस्यपि व्यवच्छेदः, अन्यथा सिद्धसाधता स्यात्। इदञ्चानुमानमभावो नावारक इति मते प्रवृत्तम्।

हेतुकोटौ धारावाहिकप्रमायां प्रभायाञ्च व्यभिचारवारणाय अप्रकाशितेति। अप्रकाशितत्वमिति न प्रकाशत इति व्यवहारविषयत्वम्, तच्च प्रभायां प्रमायां वर्तत एव। आवरणत्वमपि अन्धकारे अज्ञाने च समानमेव वर्तते।

न चात्र चक्षुर्ग्राह्यवृत्तित्वमुपाधिः, तस्य पक्षेतरतुल्यत्वादिति बोध्यम्, आवरणेति निवेशेनैवानादित्वमपि संगृहीतं भवति।

चतुर्थं यथा—अनित्यज्ञानम् अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्, प्रयत्नान्यत्वे सति सविषयत्वे सति अनित्यत्वाद् अनित्येच्छावत्। दृष्टान्ते अनित्येच्छारूपे हेतोः सत्त्वं स्पष्टमेव साध्यस्यापि अभावत्वानधिकरणस्वविरोधिद्वेषादिसमानाधिकरणत्वस्य तादृग् इच्छायां सत्वात् समन्वयः। पक्षे च पक्षधर्मताबलाद् अज्ञानमादाय साध्यपर्यवसानं बोध्यम्।

ईश्वरेच्छानिवृत्यर्थमनित्येति इच्छायां ज्ञाने च विशेषणम्। साध्ये, अभावत्वानधिकरणेति निवेशः प्रागभावमादाय सिद्धसाधनतानिवृत्त्यर्थम्। स्वविरोधित्वनिवेशेन च पूर्वज्ञानस्य व्यावृत्तिः। हेतौ प्रयत्ने व्यभिचारवारणार्थं प्रयत्नान्यत्वनिवेशः। नित्येच्छाज्ञानादौ व्यभिचारवारणायानित्येति। घटादौ व्यभिचारवारणाय सविषयत्वे सतीति बोध्यम्। न च शुक्तिरजतज्ञाने सिद्धसाधनम्, अनित्यज्ञानत्वावच्छेदेनानुमानस्य प्रवृत्तत्वात्।

एवमेवाभावविलक्षणाज्ञाने अनुमानम्। तथाहि—ज्ञानविरोधित्वम् अनादिभावत्व-समानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वात्। दृश्यत्ववद् दृष्टान्ते दृश्यत्वे सकल यद्

ज्ञानविरोधि दृश्यम्, तद्वृत्तित्वं सिद्धमेव। एवमनादिभावरूपे अविद्याचिद्योगादौ दृश्यत्वस्य सत्वाद् अनादिभांवत्वसमानाधिकरणत्वस्यापि साध्यस्य सत्त्वात् समन्वयः। पक्षे च ज्ञानविरोधित्वे पक्षधर्मताबलाद् अनादिभावरूपमज्ञानं सिद्धं कृत्वा, तत्समानाधिकरणत्वं सिद्धं भवतीति भावः।

अत्र साध्यकाटौ पूर्वानादिनिवृत्यर्थम् अनादीति प्रागभावादिव्यावृत्यर्थं भावेति। अत्र हेतुकोटौ कलया, कार्येण सहितं सकलमिति सकलं यद् ज्ञानविरोधि अज्ञानम्, तत्कार्यमित्यर्थः, तेन न हेतौ व्यर्थविशेषणतादोषः।

द्वितीयम्—अनाद्यभावविलक्षणत्वं ज्ञानविरोधिवृत्त्यनाद्यभावविलक्षण- मात्रवृत्तित्वात्, अभिधेयत्ववदिति। दृष्टान्ते अभिधेयत्वे सकलानाद्यभावविलक्षणे अज्ञाने तत् कार्ये च अभिधेयत्वस्य वृत्तित्वाद् हेतोः सद्भावः। एवञ्च ज्ञानविरोधिवृत्तित्वमपि संगतमेव ब्रह्मातिरिक्ते सर्वत्राभिधेयत्वस्य सत्त्वात्। पक्षे च पक्षधर्मताबलाद् ज्ञानविरोधिज्ञानं प्रसाध्यैव तद्वृत्तित्वं रूपं साध्यं संगमिष्यतीति ज्ञानविरोधिभावरूपाज्ञानसिद्धिः। पक्षकोटौ अभावविलक्षणत्वमात्रोक्तौ तत्र ज्ञानविरोधिवृत्तित्वासिद्धेः बाधः स्यात्, अतोऽनादीति। अनादिविलक्षणत्वोक्तौ तु ज्ञानप्रागभावमादाय सिद्धसाधनता स्यात्, अतः अभावेति। एवञ्च अनाद्यभावपदेन प्रागभावस्यैव ग्रहणे प्रागभावविलक्षणत्वं पक्षः स्यात्, तथा च तस्य घटादावपि सत्वाद् ज्ञानविरोधिवृत्तित्वाभावाद् बाधः स्यात्, अतः अनादित्वे सति अभावविलक्षणत्वं पक्षः। ब्रह्मणि निर्धर्मके कस्यापि धर्मस्याभावात् तत्र व्यभिचारादि दोष इति।

## वेदान्तमीमांसाशास्त्रारम्भकर्तव्यताविचारः

अत्रेदं विचार्यते धर्मब्रह्ममीमांसयोरेकशास्त्रत्वं पृथक्शास्त्रत्वं वा। कुतः पुनरियं विचारणा? आचार्याणां व्याख्यानभेदात् विप्रतिपत्तेः संशयः। तन्निर्णयार्थं विचारोजायते। तथाहि श्रीभाष्ये अथातो ब्रह्मजिज्ञासेति सूत्रे उभयोः शास्त्रयोर्मीमांसारूपयोरेकशास्त्रत्वं बोधायन वृत्तिमनुसृत्य वर्णितम्। उपपादितञ्च तत्र श्रुतार्थप्रकाशिकाख्यायां टीकायां विस्तरेण।

एवमन्यत्रापि ब्रह्मसूत्रवैष्णवभाष्यकाराणां मते उभयोरेकशास्त्रत्वं सम्मतम् । तथा च तन्मते षोडशाध्यायलक्षणं मीमांसाशास्त्रमेकमेव न चतुर्लक्षणी पृथगारब्धव्या । भगवत्पादीये भाष्ये तदनुसारि भामती विवरणादि व्याख्यानग्रन्थे च विस्तरेण ब्रह्ममीमांसाया चतुर्लक्षण्याः पृथक् शास्त्रत्वं प्रतिपादितमिति जायते किमिह युक्तमिति जिज्ञासोपशमनी विचारणा । तत्र प्रथमं श्रीभाष्यादिप्रतिपादितैक्यशास्त्रत्वमुपस्थाप्यते ।

तत्र अथ शब्दस्यानन्तार्यार्थत्वम् अतः शब्दस्य च हेत्वर्थत्वमुक्त्वा श्रीभाष्यकारैरूच्यते—"मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वाद् उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्चं । पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतो र्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः "कर्माधिगमादनन्तरं ब्रह्मविविदिषा" वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम् । संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" (श्रीभाष्ये प्रथमसूत्रे) तत्र संहितमित्यस्य नियतपौर्वापर्यैकव्याख्येय व्याख्यानरूपतया संगतमित्यर्थः ।

अनेन भाष्यसन्दर्भेण स्पष्टमेव कर्मावबोधादनन्तरं ब्रह्मणोजिज्ञासा । कर्मावबोधस्य च पूर्ववृत्तत्वं । उभयो र्मीमांसयोरेकशास्त्रत्वमित्यादि सर्वमुक्तम् ।

एवमेकशास्त्रत्वसिद्धौ अध्यायपादभेदवच्च प्रतिपाद्यार्थभेदेन पूर्वोत्तरमीमांसयोर्भेदः ।

मीमांसाशास्त्रं तु एकमेव अथातोधर्मजिज्ञासामित्यारभ्य अनावृत्तिः शब्दादनावृत्तिः शब्दाद् इत्येवमन्तम् ।

**अत्रापेक्षसमाधानम्**

ननु यदि उभयोरेकशास्त्रत्वं तर्हि उपक्रमे साधारणार्थः प्रतिज्ञायेत "अथातो वेदार्थ जिज्ञासेति । न च तथा प्रतिज्ञातम् । किन्तु विशेषार्थ एव पूर्वभागसाधारणः प्रतिज्ञातः अथातो धर्मजिज्ञासेति चेत्, अत्र—श्रुतप्रकाशिकायां श्रीभाष्यव्याख्याग्रन्थे अविकलं प्रतिपत्तृसौकर्याद् उद्ध्रियते—"अत्र ब्रूमः—अथातो ब्रह्मजिज्ञासेत्येवाभय-

भागसाधारणार्थप्रतिज्ञा । कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे सङ्गतः । ब्रह्मविचारान्तर्भावेपि पृथक्करणमुपपद्यते ; यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथा च निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः । पृथक्करणं च बहुग्रन्थप्रतिपाद्यत्वात् । तत्र च पूर्वभावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम् । एतदुक्तं भवति— अर्थक्रमाद् ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन कर्मविचारः सङ्गतः । प्रतिपत्तिसौकर्यलक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव इति ॥ एवं वा—साधर्म्यवैधर्म्यसमयोर्जात्योः कथनेन यथा प्रतिधर्मसमा उभयानुयायिनी अर्थसिद्धा । एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात् । साधारणार्थे प्रतिज्ञातेऽप्यसाधारणार्थस्तु पृथगेव प्रतिज्ञातव्यः । धर्मजिज्ञासायां प्रतिज्ञातायामपि, ''अथातः शेषलक्षणम्'', ''अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा'' इत्यादौ ह्यसाधारणार्थप्रतिज्ञा कृता । अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथमम्, 'अथातोधर्मजिज्ञासे'ति प्रतिज्ञातम् ; न तु वेदार्थजिज्ञासेति । अथवा— अथातोधर्मजिज्ञासेत्येव साधारणप्रतिज्ञा । अलौकिकश्रेयःसाधनं हि धर्मः, तत् अनुयायिप्रतिपाद्यम् । धर्मश्च साध्यसिद्धभेदेन द्विविधः । सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः । यथा, ''ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्''इति । तथाऽभियुक्तैश्च अलौकित्वे सति श्रेयःसाधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्वानैः सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः, ''द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेपि न ताद्रूपेण धर्मता'' इत्यादौ । तत्र द्रव्यादिसद्भावेऽपि क्रियाप्राधान्यात् साध्यधर्मपरः पूर्वभागः । उपासनतदङ्गसद्भावेऽपि ब्रह्मप्रधानत्वात् सिद्धधर्मपर ऊर्ध्वभागः । अत उभयभागविचारसाधारणी प्रथमप्रतिज्ञा । तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वात्, पूर्वभागप्रतिपन्नत्वेन प्राथम्यात्, धर्मजिज्ञासापदेनैव तन्त्रेण वा अर्थतो वा प्रतिज्ञातत्वोपपतेश्च तल्लक्षणमुक्तं चोदनासूत्रे । सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञैव अर्थतः प्रतिज्ञातत्वेपि तस्य बहुग्रन्थव्यवधानात्, शब्दाबोध्यत्वशङ्कापरिजिहीर्षया

च पुनः प्रतिज्ञा कृता ; तस्य लक्षणमुक्तं जन्मादिसूत्रे—इति युक्तमैकशास्त्र्यम्।

ननु पूर्वभागस्य साध्यधर्मप्रधानतोक्तिरुदाहृतवचनेन विरुध्यते। तत्र पूर्वभागेऽपि सिद्धरूपस्य परस्य कर्माराध्यतया प्रधानप्रतिपाद्यत्वावगमात्। तस्मिन् वचने वेदविच्छब्दो हि पूर्वभागाभिज्ञपरः, गोबलीवर्दन्यायात्; "विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" इत्यनेनैकार्थ्याच्च। न च गुणभावेन कर्मणः(णां) प्रतिपाद्यत्वमित्यविरोधः, प्राधान्येन प्रतिपाद्यत्वस्य जैमिनेरभिमतत्वात्, भवद्भिरपि यथोक्तत्वाच्च। सत्यम्। वस्तुतः प्राधान्यं परमात्मन एव; यथा राज्ञस्तात्पर्यगोचरत्वलक्षणम्। शाब्दं प्राधान्यं तु कर्मण एव; यथा राजपुरुषस्य। तच्चातिरस्कृतम्। तत्र तस्य परमात्माराधनरूपत्वानवगमात्। न च तदवगमोऽवश्यं संपाद्यः। अन्तवत्स्वर्गादिफलप्रदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यं हि श्रुतिस्मृतिभ्यामवगम्यते। "यो ह वा एतदक्षरं गार्गि ! अविदित्वाऽस्मिल्लोके जुहोति, जयते, तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति" इति, "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्चवन्ति ते" इति च। अतस्तन्नैरपेक्ष्यलक्षणमपि प्राधान्यमस्ति कर्मणः। अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्यपरमात्माराधनरूपत्वं चाविरुद्धम्। अतः प्रतिज्ञोपपत्तेः शास्त्रैक्यं युक्तम्।

यद्यपि कर्मब्रह्ममीमांसयोरैकशास्त्र्यमविवक्षितं जैमिनिना—तथापि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तम्, यतः "अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम्। तादर्थ्यमर्हति ग्रामे कल्प्ये पूर्वतटाकवत्"। विवक्षितत्वं सम्भवश्च दर्शितः। अतः शास्त्रैक्यं युक्तम्।

नन्विदमयुक्तमैकशास्त्र्यम्, शारीरकशब्दसूचितात् प्रधानप्रतिपाद्यभेदात्, जैमिनीयशब्दसूचितात् कर्तृभेदात्, तदुभयफलितात् प्रयोजनभेदात्, अर्थविरोधाच्चेत्याशङ्कां परिहरति अतः प्रतिपिपादयिषितेति। अतः वृत्तिकरोक्तात् एक व्याख्येयव्याख्यानरूपत्व संबन्धादित्यर्थः। षट्कभेद; पूर्वमीमांसायाम्, अध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ।

अर्थभेदाभावे ह्येकं षट्कमेकोऽध्यायो वा स्यात्। अत एकावयवित्वे सिद्धे सति अवान्तरार्थभेदो न महावाक्यैकतवविरोधी, यथा पदार्थभेदो वाक्यार्थैकत्वविराधीति भावः। अनेन प्रतिपाद्यभेदः परिहृतः। प्रयोजनभेदश्चार्थात्परिहृतः; षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात्। अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च दर्शितम्। पूर्वोत्तरमीमांसाशब्देन जैमिनीयशारीरकशब्दौ च विवृतौ। प्रतिपिपादयिषितशब्देनार्थविरोधः परिहृतः। प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितम्। स च तात्पर्यविषयोऽर्थः। विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः॥ नन्वेवं कथमभिधीयते? "आम्नायस्य क्रियार्थत्वात्"[१] इति सिद्धपरवाक्यानां तच्छेषत्वं हि सूत्रकारेण कण्ठोक्तम्। तच्च विरुद्ध्यत एव। अतः शास्त्रभेद इति॥

नैवम्। "पदे जुहोति", "आहवनीये जुहोति", "न हिंस्यात् सर्वा भूतानि", "पशुमालभेत" इति वत्, शास्त्रान्तरे, "कर्मण्यण्" "आतोऽनुपसर्गे कः" इतिवच्च उत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात। सामान्येन सिद्धवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्याविशेषस्य किं विधिशेषत्वं न वेति विचार्य, 'स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वम्; स्वयंपुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानामतच्छेषत्वम्' इति हि निर्णेतुं युक्तम्, यथा होमस्य सामान्येनाऽऽहवनीये प्राप्तत्वेऽपि होमविशेषस्य पदे कर्तव्यत्वनिश्चयः, यथा च सामान्यतो हिंसानिषेधेऽपि हिंसाविशेषस्य कर्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणि प्राप्तेऽपि आकारान्तात् धातोः कप्रत्ययविधिः। न च तत्र शास्त्रभेदः—तद्वत्।

देवतानिराकरणे च न तात्पर्यम्; अश्रुतवेदान्तानां कर्मण्यश्रद्धानिराकरणाय कर्मप्राधान्यपरत्वात् तस्य। "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु निन्दितादितरत् प्रशंसितुम्" इति हि न्यायविदः। यद्वा वेदप्रामाण्य-कर्मावश्यकर्तव्यतातात्पर्यातिशयात्

---

१. पू.मी.१-२।

तत्प्रतिपक्षनिराचिकीर्षया अन्वारुह्यवादो देवतानिरासोक्तिः स्यात् । अभिमततरार्थानादरेणापि हि विपक्षव्युदासो दृश्यते, यथा—"अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्" । एवमभिमततरेश्वरानादरेणापि वेदप्रामाण्यादिसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः । तत्सिद्धिप्रकारश्च तदुक्तरात्रिसत्रन्यायाद्यधीन इत्युत्तरत्र व्यक्तीभविष्यति । न च तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघातः ; तस्यान्वारुह्यकृतत्वात् ।। कथमन्वारुह्यवादत्वनिश्चयः ? । उच्यते । "सम्पत्तेरिति जैमिनिः", "अन्यार्थं तु जैमिनिः", "परं जैमिनिर्मुख्यत्वात्", ब्राह्मेण जैमिनिः" इत्यादिसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वात् ; महाभारते च हयशिरउपाख्यानादिषु, भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानत्वावगमाच्चेति । अतो विरुद्धेऽर्थे तात्पर्याभावान्नार्थविरोधः ।

नन्वर्थविरोधो दुष्परिहरः । तथा हि विशेषातिदेशनिरूपणपरे अष्टमेऽध्याये— विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्ये सति कस्मिन् कर्मणि कस्य कर्मणो धर्मातिदेशः प्राप्तः इत्यपेक्षायाम्, यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं वा भवति तस्मिन् तद्धर्मोऽतिदेष्टव्य इति स्थितम् । तत्र, 'यस्य केनचिद् द्रव्यसाम्यं केनचित् देवतासाम्यं च भवति, तस्मिन् द्रव्यसाम्यवत एव कर्मणो धर्मातिदेशः कृतः, न तु देवतासाम्यवतः इति द्रव्यप्राधान्यमुक्तं जैमिनिना, द्रव्यदेवतासाम्ये द्रव्यं बलीयः इति । न च द्रव्यप्राधान्योक्तेरतिवादत्वम् ; अनुष्ठानविरोधात् द्रव्यप्राधान्येन ह्यनुष्ठानं दृश्यते । अतो द्रव्यप्राधान्यं वदतो जैमिनेर्देवतानिरासे तात्पर्यमस्तीति ।

अत्रोच्यते । नात्र द्रव्यदेवतयोः सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते ; अपि तु विलम्बिताविलम्बितप्रवृत्तिकप्रमाण्यविषयत्वाधीने । द्रव्यं ह्यविलम्बितप्रत्यक्षगम्यम्; देवता तु विलम्बितशास्त्रगम्या । विलाम्बाविलम्बावेव हि श्रुतिलिङ्गादिषु प्रत्यक्षादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू । ननु हविष्ट्वं शास्त्रैकगम्यमिति न द्रव्यस्यापि प्राधान्यमिति

चेत्—नैवम् चरुपुरोडाशादिकं द्रव्यं हि प्रत्यक्षम्। हविष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रगम्यम्। देवतायास्तु स्वरूपं श्रेय:साधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम्। अत: स्वरूपतो धर्मश्च विलम्बितमानगम्यत्वाद् देवताया अप्राधान्यम्, धर्ममात्रस्य शास्त्रगम्यत्वेऽपि धर्म्यंशेना(शस्या) विलम्बितमानगम्यत्वात् हविष: प्राधान्यम्। अत: प्राधान्याप्राधान्ययो: प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा। एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोध:।

ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहर:। तथा हि—"फलमत उपपत्ते:" इत्यत्रेश्वरस्य फलप्रदत्वोक्त्या, "धर्मं जैमिनि:" इति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तम्। न; श्रुतत्वोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रे जैमिन्यभिहिते ताभ्यामवात्र फलसाधनविशेषसिद्धेरुक्तत्वात्।

ननु, "शेषत्वात् पुरुषार्थवादो यथा अन्येष्विति जैमिनि:" इत्यत्र वेदान्तोदितात्मज्ञानस्य कर्मशेषतयाऽऽत्मनां कर्मशेषत्वोक्ति:, "अधिकोपदेशात्" इति सिद्धान्तेन विरुद्ध्यते। न च विकल्पेन निर्वाह: संभवति; वस्तुनि विकल्पायोगात्। न च जैमिनिना परमतमुपन्यस्तमिति वाच्यम्—जैमिनिमतत्वेन सिद्धान्तिना प्रतिक्षेपायोगात्॥ नैवम्। विपक्षनिरासार्थस्य जैमिनेरन्वारुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्ते:। अन्यथा, "परं जैमिनि:" इत्यादिसूत्राणां मिथोविरोध:, भारतोक्तिविरोधश्च। जैमिनेरन्वारुह्यवादमजानतां तु तदुक्ते तत्त्वबुद्धि: स्यादिति तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ। अत एव, "परामर्शं जैमिनि:" इत्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोपि परिहृत:। "तद्भूतस्य" इत्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात्। न ह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसंभव:। अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थ आश्रमान्तरप्रतिक्षेप: पूर्ववदन्वारुह्यवाद:। स च पूर्वमीमांसायामसूत्रितं। तथाप्यौडुलोम्यादिमतवदनूद्य निरस्त:। न च मधुविद्यायां वस्वाद्यनधिकारोक्तिरधिकारोक्त्या विरुध्यत इति वाच्यम्; अनधिकारोक्तेर्वस्वादि-

देवताभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्धाटनवैयर्थ्यात्। "भावं जैमिनिः" इत्यादि सूत्रोक्ताश्च पक्षाः शास्त्रैक्याविरुद्धाः, कर्मविचारे तेषामसमर्थनादिति न तात्पर्यनुयोगावकाशः।

तस्मान्नार्थविरोधः। कर्तृभेदपरिहारस्तु प्रसिद्धत्वान्न कण्ठोक्तः। अत एव च शब्दसूचितो वा। धूर्तस्वामिकपर्दिकर्तृकस्याऽऽपस्तम्बसूत्रव्याख्यानस्य व्याख्यायैक्यादेकप्रबन्धत्वं हि दृष्टम्। पाणिनीयसूत्रपूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टम्। तस्मादुपपन्नमैकशास्त्र्यम्''[१]।

एवमेकशास्त्रत्वे सिद्धे संहतमेत् चतुर्लक्षणं षोडशलक्षणेने पोर्वापर्यसिद्धिः। संहतमिति, संगतिविशेषेण क्रमविशात्। आरम्भणीयञ्चैतत् एकं मीमांसाशास्त्र तथाहि स्वाध्यायोऽध्येतव्य इति अध्ययनविधेः अक्षरग्रहणं विधानम्। स्वाध्यायशब्दवाच्याखिलवेदराशे र्ग्रहणं स्वाध्यायविधिना विधीयते।

एवञ्च सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेत वेदविदाचार्य्योपनीतस्य व्रतनियम-विशेषयुक्तस्य आचार्योच्चारणानूच्चारणरूपमक्षरग्रहणफलम् अध्ययनमित्यवगम्येत। अध्ययनञ्च स्वाध्यायसंस्कारः, न तु सक्तुहोमवत् अपूर्वविषयतया पुरुष संस्कारः। स्वाध्यायोऽध्येतव्य इत्यत्र कर्मणि तव्यप्रत्ययेन स्वाध्यायस्यैव. कर्मत्वावगमात्। एवमध्ययनगृहीतस्य वेदराशिरूपस्वाध्यायस्य स्वभावतः प्रयोजनवदर्थाववोधित्वदर्शनात् स्वाध्यायात् गृहीतान् अवगम्यमानान् प्रयोजनवतोऽर्थान् आपाततो विलोक्य तत् स्वरूपप्रकारविशेषनिर्णयार्थं वेदवाक्यविचाररूपमीमांसाशास्त्रारम्भः।

एवञ्च स्वाध्यायनन्तर्यं मीमांसाशास्त्रात् पूर्ववृत्तमिति तदपेक्ष्यते।

कर्मणि निरूपिते च तत्र तत्फलस्य क्षयिष्णुत्वाल्पत्वदर्शनात् अध्ययनविधिगृहीत स्वाध्यायैकदेशोपनिषद्वाक्येषु अमृतत्वरूपानन्तरफलप्रतीतेः तन्निर्णयफल वेदान्तरूपशारीरमीमांसायामधिकारः। एवञ्चैकशास्त्रत्वे सर्वाव्यवस्थासिध्यति। स्वाध्यायाध्ययनस्योभ्यत्र समानत्वेऽपि ब्रह्ममीमांसायां कर्मावबोधानन्तर्यमधिकमितिभावः।

---

१. श्रुता. पृ. २४-२७।

**पृथक्शास्त्रत्वोपपत्तिः–**

तत्र शाङ्करभाष्ये कस्मादनन्तरं ब्रह्मजिज्ञासेतिविचारे 'स्वाध्यायानन्तर्यं तु समानम्' नन्विह कर्मावबोधानन्तर्यं विशेषः । न, धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरित्यादिभाष्येण कर्मावबोधानन्तर्यं खण्डयित्वा साधनचतुष्टयानन्तर्यमुपपादितम् । एतेन भाष्येण तद्व्याख्यानभूतभामत्यादिग्रन्थेन उभयोरेकशास्त्रत्वं पौर्वापर्यञ्च खण्डितम् । पृथक् शास्त्रं जिज्ञास्यफलभेदाच्चोपपादितमित्यवगन्तव्यम् तथाहि—श्रीभाष्यादौ एकशास्त्रत्वं क्रमनियमः शास्त्रारम्भश्चोपपादितम् ।

तत्र कर्मब्रह्ममीमांसयोरेकशास्त्रत्वं कुतः । नियत पौर्वापर्यैकव्याख्येयव्याख्यानरूपत्वात् । इति चेन्न उभयोरेकव्याख्येयव्याख्यानरूपत्वाभावात् । पूर्वमीमांसाव्याख्येयः पूर्वकाण्डः उत्तरकाण्डोपनिषत् वाक्यञ्च व्याख्येयं ब्रह्ममीमांसायाः । न चोभयत्र वेदस्यैव व्याख्येयत्वात् एकप्रबन्धत्वमिति वाच्यम् । उपक्रमे तथाप्रतिज्ञा या अभावात् । धर्मजिज्ञासाया एव प्रतिज्ञातत्वात् । एकशास्त्रत्वेतु अथातो वेदार्थजिज्ञासेति प्रतिज्ञा स्यात् । नच श्रुतप्रकाशिकोक्तेन तथा "अथातो ब्रह्मजिज्ञात्येवोभयभागसाधारणार्थप्रतिज्ञा । कर्मविचारस्तु ब्रह्ममीमांसा तृतीयाध्याये चतुर्थपादे संगत इत्यादि रूपेण उभयानुगतप्रतिज्ञोपपत्तिरिति वाच्यम् । शब्दतः तथा प्रतिज्ञाया अभावात् अर्थतस्तथा प्रतिज्ञाने प्रमाणाभावात् भिन्नशास्त्रत्वेनाप्युपपत्तेः ।

न चाथातोधर्मजिज्ञासेत्येव सामान्येन प्रतिज्ञानम् । धर्मश्च द्विविधः साध्यः सिद्धश्च सिद्धेऽपि वस्तुनिधर्मशब्दस्य महाभारतादौ प्रयोगदर्शनात् इति वाच्यम् । सिद्धरूपस्यापि धर्मत्वे धर्मित्वानुपत्तेः । द्रव्यादीनामपि धर्मत्वापत्तेः । पूर्वमीमांसायां भव्यरूपानुष्ठेयधर्मस्य मीमांसितत्वात् उत्तरमीमांसायाञ्च सिद्धब्रह्मरूपधर्मस्य मीमांसितत्वात् भिन्नशास्त्रत्वापत्तेः । जैमिना सिद्धरूपधर्मविचारस्य प्रतिज्ञानात् आचार्यस्य प्रतिज्ञाहानेश्च । चतुर्लक्षण्यादौ अथातः सिद्धरूपधर्मजिज्ञासा, अथातोऽवशिष्टधर्मजिज्ञासेत्येव रूपेण प्रतिज्ञा आचार्येण वादरायणेन कृता स्यात्, न च तथा कृतेति ।

किञ्च यथाकथंचित् अर्थतः सामान्यार्थप्रतिज्ञोपपादने वेदाङ्गनामपि सर्वेषां व्याकरणज्यौतिषादीनामेकशास्त्रत्वापत्तिः। नच स्वाध्यायपदेन तेषां न ग्रहणमिति वाच्यम् स्वाध्यायपदेन सषडङ्गसमस्त वेदराशेर्ग्रहणात्। अत एव ब्राह्मणेन निष्कारणो धर्म- षडङ्गो वेदो ध्येयो ज्ञेयश्चेति विधिः।

किञ्च प्रमाणप्रमेयरूपसामान्यार्थव्याख्येयव्याख्यानरूपस्य न्यायवैशेषिकादि-समस्तशास्त्रस्यापि एकशास्त्रत्वापत्तिः स्यात्।

यदि हितानुशासनत्वात् सर्वशास्त्रेषु शास्त्रत्व व्यवहारवत् उभयो र्मीमांसयोः शास्त्रत्व व्यवहारस्तदा न कोऽपि विरोधः। तथापि तथाप्रतिज्ञानाभावात् नायमर्थोऽत्राभिप्रेतः।

तस्मात् अधिकारिविषयप्रयोजनादिभेदाच्छास्त्रभेद इति क्लृप्तनियमाद् इहापि उभयोरधिकार्यादिभेदान् नैकशास्त्रत्वं युक्तम्। एवं च कर्तृभेदादपि नैकशास्त्रत्वम्। क्वचित्तथादर्शनेऽपि। सर्वत्र तथा नियमस्यासम्भवात् अतिप्रसक्तेश्च।

नच प्रतिपाद्यभेदादिः, पूर्वमीमांसायां उपदेशषट्कमतिदेश षट्कमित्यादिभेदवत् अध्यायभेदवच्च गतार्थ इति वाच्यम्। अधिकारि प्रयोजनभेदसद्भावात् शास्त्रान्तरत्वसिद्धेः। किञ्च आम्नायस्य समस्तस्य क्रियापरत्वम् सिद्ध बोधकवाक्यानामपि विध्येकवाक्यत्वात् क्रियापरकवाक्यशेषत्वमभीष्टम्। आम्नायस्य क्रियार्थत्वात् (१-२) इत्यादि जैमिनिसूत्रात्। उत्तरमीमांसायान्तु सिद्ध ब्रह्मबोधकवाक्यानामपि प्रामाण्यमवस्थितमिति कथमेकशास्त्रत्वं विरोधात्। न च श्रुतप्रकाशिकाकारेण उत्सर्गापवादन्यायेनोक्तविरोधपरिहारः कृत इति वाच्यम्। पदे जुहोति, आहवनीये जुहाति, न हिंस्यात् सर्वाभूतानि, पशुमालभेतेत्यादि वाक्यवत् क्रियापरकवाक्यानां सिद्धपरवाक्यानाञ्च उत्सर्गापवादन्यायाविषयत्वात्।

स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वम् स्वयं पुरुषार्थपर्यवसायिनाम-तच्छेषत्वमिति निर्णेतुं युक्तमित्यादि श्रुतप्रकाशिकाकृदभिधानमसंगतम् तादृशसंकोचे प्रमाणाभावात् आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानामिति सामान्येनाभिधानात्। किञ्च जैमिनिमते

ब्रह्मणि प्रमाणाभावात् तत् प्राप्तेः पुरुषार्थत्वाभावादेव ब्रह्मप्रतिपादकवाक्यानां स्वयं पुरुषार्थ परत्वाभावः। विधिनैकवाक्यत्वात् कर्तृदेवता प्रकाशनार्थत्वात् तेषां क्रियार्थत्वप्रतिपादनात्। किञ्च फलमत उपपत्तेरिति सूत्रे वादरायणेन ईश्वरस्य कर्मफलप्रदत्वमङ्गीकृत्य धर्मं जैमिनिरिति सूत्रेण धर्मस्यैव फलप्रदत्वं जैमिनिसम्मतमुक्तं तदपि एकशास्त्रत्वे विरोधः।

श्रुतप्रकाशिकाकारेण चैवं विधविरोधः स्वप्रज्ञाबलेन प्रौढ्या परिहृतः।

एवं बहुविधविरोधात् तत् कथंचित् परिहारापेक्षया भिन्नशास्त्रत्वे च बाधकाभावात् एकशास्त्रत्वेऽपि भेदस्यावश्यं स्वीकर्त्तव्यत्वात् अधिकारिविषयप्रयोजनादिभेदात् भिन्नशास्त्रत्वमेवाङ्गीकर्त्तव्यम्। किञ्चैकशास्त्रत्वे कानुगुणता दृश्यते— पौर्वापर्यक्रम इति सच शास्त्रभेदेऽपि अविरुद्धः। कर्मावबोधस्यानन्तर्यलाभ इति तदपि तन्मते भिन्नशास्त्रत्वेऽपि सम्भवः। कर्मावबोधस्य आनन्तर्यं खण्डयिष्यते।

नच श्रीमदाचार्यबोधायनोक्तिर्विरुध्येत पृथक्शास्त्रत्वे इति वाच्यम्। वैदिकवाक्य-व्याख्यानरूपत्वादपि संहतत्वोपपत्तेः। स्वाध्यायाध्ययनानन्तरं एवमर्थे प्रवृत्तत्वाद् एकशास्त्रत्वोपत्तेर्वक्तुं शक्यत्वात्।

उक्तश्च भामत्यामाचार्येण श्रीमद्वाचस्पतिना—

स्वाध्यायानन्तर्यं तु समानमिति भाष्यप्रतीकमादाय "अत्र च स्वाध्यायने विषयेण तद्विषयमध्ययनं लक्षयति। तथा च अथातोधर्मजिज्ञासा इत्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम्। धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद्ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनान्तर्यसाम्यात्"[१]।

प्रौढ्यैकशास्त्रत्वञ्च कल्पतरुपरिमलेऽपि प्रौढ्याव्युत्पादितम्। एकशास्त्रत्वाभ्युपगमेऽपि न कश्चिद् दोषः। तथाहि परिमलग्रन्थः—"ननु—धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वमङ्गीकृत्य तेन तत्रत्याथशब्दस्य सकलवेदाध्ययनानन्तर्यमर्थमुपपाद्यास्याथशब्दस्य तेन गतार्थत्व-

१. भामती पृ.५१।

परिहारार्थमर्थान्तरं वर्णनीयमित्युपपादनमयुक्तम् ; तथा सति हि सकलवेदार्थविचारप्रतिज्ञानं तत्रैव कृतमिति स्यात्, एवंच कृत्स्नमेवेदं शास्त्रं गतार्थत्वेनानारभ्यं भवेदिति कुतोऽस्याथशब्दस्यार्थान्तरवर्णनप्रत्यासा, नहि कृत्स्नवेदार्थविचारं प्रतिज्ञाय तदेकदेशविचारस्त्यक्तो बुद्धिपूर्वमिति वक्तुं शक्यम्; न वा धर्मविचारार्थं द्वादशलक्षणीं कृत्वा तत्रासूत्रितान् कांश्चिन्न्यायानालक्ष्य तत्संग्रहार्थं द्वादशलक्षणीं शेषं संकर्षकाण्डमपि कृतवतो महर्षिवरस्य भगवतो जैमिनेर्ब्रह्मपरवेदभागविचारे विस्मरणं विघ्नजातं वोत्प्रेक्षितुं शक्यमिति—चेत्, उच्यते; धर्मजिज्ञासासूत्रस्य (जै.अ.१पा.१सू.१) सकलवेदार्थविचार-प्रतिज्ञापरत्वमात्रेणास्य शास्त्रस्य गतार्थत्वं नोपपद्यते; इह व्युत्पादयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां पूर्वतन्त्रव्युत्पादितेभ्यः कर्मपरवाक्यार्थनिर्णायकन्यायेभ्यो विलक्षणत्वात्, किंतु शास्त्रारम्भप्रतिज्ञैक्येन वक्तृभेदेऽप्येकप्रबन्धतामात्रं तदानीमापद्यते; समयबन्धपूर्वकानेककविकर्तृकैककाव्यवत्। तदपि सिद्धान्ते प्रौढ्याभ्युपगम्य मतान्तरमिष्यत एव; तदाश्रित्य हि भाष्यटीकयो**'रेक आत्मनः शरीरे भावात्'**[१] इत्यधिकरणे देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनादत्र तद्व्यवस्थानं पुनरुक्तमिति शङ्कोद्घाटनं, भाष्यकृता शबरस्वामिना तत्र तत्कृतं न तत्सूत्रारूढमिति समाधानं च करिष्यते। ननु—प्रौढ्यापि कथमैकशास्त्र्यमभ्युपगतं; विरुद्धयोरेकप्रबन्धत्वायोगात्, अस्ति हि जैमिनिबादरायणमतयोर्विरोधः, बादरायणेन हि **'शेषत्वात्; पुरुषार्थवादो यथान्येष्विति जैमिनिः'**[२], **'परामर्शं जैमिनिः'**[३] इति सूत्रे ब्रह्मसंन्यासापलपनं जैमिन्यभिमतमनूद्य दूषितं, नच—जैमिनेरन्वारुह्यवादमात्रमनूद्य दूषितं, नतु तन्मतम्, **'परं जैमिनिर्मुख्यत्वात्'**[४] **'तद्भूतस्य तु नातद्भावो जैमिनेरपि'**[५] इत्यादिसूत्रैः जैमिनेर्ब्रह्मसंन्यासाभ्युपगमस्य बादरायणेनैव

१. जै. ब्र.३/२/५३।
२. ब्र.अ.३/४/१२।
३. ब्र.अ.३/४/१८।
४. ब्र.अ.४/३/१२।
५. ब्र.अ.३/४/४०।

प्रतिपादितत्वादिति—वाच्यम्; **'तस्य विप्रतिषेधाच्चासमञ्जसम्'**[१] इति साङ्ख्याधिकरणोक्तन्यायेन जैमिनिमतस्य परस्परविरुद्धतयोनुपादेयत्वसूचनार्थत्वोपपत्तेः। किंच देवताधिकरणे (ब्र.सू.१/३/२६-३३) जैमिन्यभिमतं बहुशो देवताप्रत्याख्यानमनूद्य दूषितम्। **'आम्नायस्य क्रियार्थत्वात्'**[२] इत्यादिसूत्रेण वेदस्य क्रियार्थत्वेनैव प्रामाण्यं वक्तव्यमित्यविशेषेणाक्रियार्थानाम- प्रामाण्यमाशङ्क्य **'विधिना त्वेकवाक्यत्वात्'**[३] इति सूत्रेण केवलसिद्धार्थविषयत्वेन भासमानां वाक्यानां विध्येकवाक्यतया क्रियार्थतामुपपाद्य जैमिनिना यत्प्रामाण्यसमर्थनं कृतं, तदपि बादरायणेन समन्वयसूत्रे (ब्र.सू.१/१/४) ब्रह्मविषयाणां वाक्यानामनपेक्ष्य विधिशेषतामक्रियार्थानामेव सतां प्रामाण्यसमर्थनेन प्रत्याख्यातम्; एवं विरुद्धयोरेकप्रबन्धत्वं प्रौढ्यापि कथमभ्युपगतमिति—चेत्, उच्यते; ब्रह्मसंन्यासदेवतापलापविषये विरोधस्तावद् नैकप्रबन्धत्वापवादकः, तस्य द्वादशलक्षण्यामसूत्रितत्वेन परस्परविरुद्ध-मताभिमान्यनेककविकृतरामायणादिदेवकप्रबन्धतोपपत्तेः। किंच जैमिनिना तिर्यगधिकरणे 'न देवता देवतान्तराभावादिति' सूत्रेण देवताः कर्मसु नाधिक्रियन्ते; इन्द्रादीनां हविस्त्यागोद्देश्यस्येन्द्रान्तरादेरभावात्, स्वात्मने संकल्प्यमानस्य द्रव्यस्य स्वत्वत्यागासंभवेन यागाद्यनिर्वृत्तेः, इत्येवमुपपादयता देवताभ्युपगम एव स्पष्टीकृतः। देवतानां युगपदनेकयागदेशसंनिधानमप्याधानपवमानेष्टिजन्यसंस्कारनिचयम् आहवनीयादिशब्दार्थ-मभ्युपगच्छता तस्य संप्रतिपन्नमेव; आहवनीयाद्यभिमानिदेवतां विना निरुक्तसंस्काराधारस्य वक्तुमशक्यत्वात्, नहि प्रत्यक्षाग्निस्तदाधारः, आधानकाले निहितस्याहवनीयादेः पावमानेष्ट्यनन्तरं त्यागेन तद्गतस्य संस्कारस्य तन्नाशतो नाशादाहवनीयाद्यननुवृत्तिप्रसङ्गात्, अजस्रपक्षेऽप्यनुगतस्य मथनादिना पुनरुत्पादने तदनुवृत्त्यभावप्रसङ्गात्। नच प्रणयनमथनादिजन्यसंस्कारोप्याहवनीयादिशब्दस्यार्थः; अनेकार्थत्वप्रसाङ्गात्पशावौत्तरवेदिक-

---

१. ब्र.अ.२/२/१०।

२. ब्र.सू.१/२/१।

३. जै.१/२/७।

प्रणयनानन्तरमाहवनीयगार्हपत्यताप्राप्त्या प्रणयनस्याहवनीयशब्दप्रवृत्तिनिमित्तत्वायोगाच्च। तस्मादाहवनीयाद्यभिमानिदेवता एव तत्तदायतनविशेषनिहितेषु संभारेषु मथिताग्निनिधानरूपेणाधानेन संस्क्रियन्ते। ताश्च संस्कृता देवता अजस्रपक्षे यजमानशरीरे अग्निदानपर्यन्तं मध्येऽग्निसंस्कारविच्छेदनिमित्तोपजने तत्पर्यन्तं च तेष्वग्निषु संनिदधते। अग्निनामजस्रधारणाभावे तत्तत्कर्मावसानेष्वाहवनीयादिदेवता गार्हपत्यमनुप्रविशन्ति। पश्चावैततरवेदिकप्रणयने क्रियमाणे तम् आहवनीयोऽनुप्रविशति, तेन प्रागधिष्ठितमग्निं गार्हपत्य इत्येवमादिकमभ्युपगन्तुं युक्तम्। एवं सत्येव 'नान्तराग्निं संचरति यदि पूर्वोऽनुगतः संचर्यं पश्चाद्धि स तर्हि गत' इति 'गार्हपत्याज् ज्वलन्तमाहवनीयमुद्धरती'ति च कल्पसूत्रकारवचनं सामञ्जस्यमश्नुते। न हि संस्कारमात्रस्य पश्चाद्गमनं संभवति। नाप्याहवनीयस्य गार्हपत्यानुप्रवेशाभावे गार्हपत्यात् तत्र सत आहवनीयस्योद्धरणं संभवति। नच तथा सत्यग्निद्वयसंसर्गनिमित्तकप्रायश्चित्तप्रसङ्गः, तस्य प्रत्यक्षाग्निसंसर्गनिमित्तकत्वात्। नच देवतानामाहवनीयादिशब्दार्थतायां 'आहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयती'त्यादिवाक्यश्रुतं हविः प्रक्षेपश्रपणाद्याधारत्वमपि तासां भवेदित्ययं दोषः, इष्टापत्तेः 'अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वेति' मन्त्रवर्णतः पाकेन हविषां सुरभीकरणस्योद्देश्यदेवतार्थं नयनस्य चैककर्तृकत्वावगतेश्च। तत्राभिमान्यभिमानविषयणामभेदाध्यवसायेन समानकर्तृकत्वव्यपदेश इति चेद्, इहापि तर्ह्यभेदाध्यास एव गतिरस्तु। एवमग्निसंस्काराधारदेवतानामिव हविरुद्देश्यदेवतानामपि बहुषु यागदेशेषु संनिधानम् आवाहनादिमन्त्रार्थवादावगतं जैमिनिनाप्युक्तप्रायमेव; मानान्तरप्राप्तिबाधाभावे मन्त्रार्थवादादिप्रतिपन्नस्य देवतादेस्तेनाप्यभ्युपगतत्वात्। नच तथापि देवतानां कर्मसु गुणत्वप्राधान्याभ्यां विरोधः; बादरायणमतेऽपि फलकरणत्वेन प्रधानतया शब्दबोधितं यागादिकं प्रत्युद्देश्यतया तच्छरीरनिवर्तकत्वेन देवतानां संनिपात्यङ्गत्वरूपतद्गुणत्वसत्त्वात्। सिद्धार्थविषयवाक्यानां विधिशेषत्वं तु जैमिनिनोक्तं विधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयम्। तथाहि—धर्मजिज्ञासासूत्र (जै.अ.१/१/१/) ब्रह्ममीमांसासाधारणी

वेदार्थविचारप्रतिज्ञा धर्ममीमांसामात्रासाधारणी धर्मविचारप्रतिज्ञा चेति द्विविधा प्रतिज्ञा विवक्षिता; सूत्राणामावृत्त्यानेकार्थप्रतिपादकत्वस्यालंकारत्वात्। अतएव—'अथातः शेषलक्षणम्'[१] इति तृतीयाध्यायाद्यसूत्रं वार्तिककृता—'द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम्। तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम्' इत्यवशिष्टदशाध्यायार्थविचारप्रतिज्ञापरं व्याख्यायानन्तरं तृतीयाध्यायार्थशेषशेषिभावविचारप्रतिज्ञापरत्वेनापि—व्याख्यातम्। एवंच यथा शेषः परार्थत्वादिति द्वितीयसूत्रमारभ्य तृतीयाध्यायसूत्राणि शेषशेषिभावमात्रविषयाणि, एवं चोदनासूत्रं (जै. १/१/२) आरभ्य द्वादशलक्षणीसूत्राणि धर्ममात्रविषयाणि। अत एव चोदनासूत्रे धर्मस्यैव विधिगम्यत्वं लक्षणमुक्तं, नहि ब्रह्मणोविधिगम्यत्वमस्ति, अतः **'तस्य निमित्तपरीष्टिः'**[२] इति सूत्रे धर्मप्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातमितितदनुसारेण **'आम्नायस्य क्रियार्थत्वात्'**[३] इति सूत्रं धर्मप्रमाणत्वेनाभिमतस्य क्रियार्थत्वेनैव तत्रप्रामाण्यं वक्तव्यमित्येतत्परम्। **'विधिना त्वेकवाक्यत्वा'**[४]दिति सूत्रमपि धर्मप्रमाणत्वाभिमत-क्रियाविधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयमिति न कश्चिद्विरोधः। नचैवं—कर्मब्रह्मविचारशास्त्रयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगतार्थशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति—वाच्यम्, भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः। नहि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण वा तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरचिकित्सामारभ्य विचारणीयम्। तत्तद्विचाराधिकारि-वैलक्षण्यमिहापि तुल्यम्। तस्मादनपेक्षितं हि वेदार्थविचारत्वोपाधिकल्प्यमैकशास्त्र्यं नातिविरुद्धमिति प्रौढ्या तदभ्युपगमे न कश्चिदोषः। एवमेकशास्त्रत्वाभ्युपगमे अनभ्युपगमे व अथातो ब्रह्मजिज्ञासेति सूत्रमारब्धव्यमेव।

---

१. जै. ३/१/१।

२. जै. १/१/३।

३. जै. १/२/१।

४. जै. १/२/७।

वेदार्थविचारप्रतिज्ञा धर्ममीमांसामात्रासाधारणी धर्मविचारप्रतिज्ञा चेति द्विविधा प्रतिज्ञा विवक्षिता; सूत्राणामावृत्त्यानेकार्थप्रतिपादकत्वस्यालंकारत्वात्। अतएव—'अथातः शेषलक्षणम्'[१] इति तृतीयाध्यायाद्यसूत्रं वार्तिककृता—'द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम्। तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम्' इत्यवशिष्टदशाध्यायार्थविचारप्रतिज्ञापरं व्याख्यायानन्तरं तृतीयाध्यायार्थशेषशेषिभावविचारप्रतिज्ञापरत्वेनापि—व्याख्यातम्। एवंच यथा शेषः परार्थत्वादिति द्वितीयसूत्रमारभ्य तृतीयाध्यायसूत्राणि शेषशेषिभावमात्रविषयाणि, एवं चोदनासूत्रं (जै. १/१/२) आरभ्य द्वादशलक्षणीसूत्राणि धर्ममात्रविषयाणि। अत एव चोदनासूत्रे धर्मस्यैव विधिगम्यत्वं लक्षणमुक्तं, नहि ब्रह्मणोविधिगम्यत्वमस्ति, अतः **'तस्य निमित्तपरीष्टिः'**[२] इति सूत्रे धर्मप्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातमितितदनुसारेण **'आम्नायस्य क्रियार्थत्वात्'**[३] इति सूत्रं धर्मप्रमाणत्वेनाभिमतस्य क्रियार्थत्वेनैव तत्रप्रामाण्यं वक्तव्यमित्येतत्परम्। **'विधिना त्वेकवाक्यत्वा'**[४]दिति सूत्रमपि धर्मप्रमाणत्वाभिमत-क्रियाविधिसमभिव्याहृतवायुक्षेपिष्ठादिवाक्यमात्रविषयमिति न कश्चिद्विरोधः। नचैवं—कर्मब्रह्मविचारशास्त्रयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगतार्थशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति—वाच्यम्, भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः। नहि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण वा तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरचिकित्सामारभ्य विचारणीयम्। तत्तद्विचाराधिकारि-वैलक्षण्यमिहापि तुल्यम्। तस्मादनपेक्षितं हि वेदार्थविचारत्वोपाधिकल्प्यमैकशास्त्र्यं नातिविरुद्धमिति प्रौढ्या तदभ्युपगमे न कश्चिदोषः। एवमेकशास्त्रत्वाभ्युपगमे अनभ्युपगमे व अथातो ब्रह्मजिज्ञासेति सूत्रमारब्धव्यमेव।

---

१. जै. ३/१/१।

२. जै. १/१/३।

३. जै. १/२/१।

४. जै.१/२/७।

## दर्शनश्रवणादीनां विधित्वविमर्शः

भाष्ये—"**तस्माज्ज्ञानमेकमुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते**"[१] इत्युक्तम्।

तस्य भाष्यायमभिप्रायः उत्पत्त्यादिचतसृणां विधानां मध्येऽन्यतमया क्रियाफलत्वं व्याप्तं सा च मोक्षाद् व्यावर्तमाना व्यापकानुपलब्ध्या मोक्षस्य क्रियाफलत्वं व्यावर्तयति।

तत् किं मोक्षे क्रियैव नास्ति ? तथा च मोक्षार्थानि शास्त्राणि तदर्थाश्च प्रवृत्तयोऽनर्थकानि स्युः। अत्र भाष्ये ज्ञानमेकमुक्त्वेत्युक्तम्।

ननु तर्हि क्रियानुप्रवेशः स्यादेवेति चेन्न ज्ञानं नाम मानसीक्रिया। सा च न विधिगोचरः सा न मोक्षाख्ये ब्रह्मणि फलं जनयितुमर्हति। तस्य स्वयं प्रकाशतया विधिक्रियाकर्मभावानुपपत्तेः। तथा च ज्ञानस्य मानस क्रियात्वेऽपि न तस्या ब्रह्मणि कर्मभाव उपपद्यते। विधिवादिभिः औपाधिकं कर्मत्वमिष्टम्। सिद्धान्ते तु ब्रह्मणि वृत्त्युपरागोपाधिकं विदिक्रियाकर्मत्वम्।

भामत्यां—"ननु ज्ञानं नाम मानसीक्रिया, न, वैलक्षण्यादिति भाष्यं ज्ञानस्य क्रियात्वेऽपि न तज्जन्यफलाश्रयत्वं ब्रह्मणि सम्भवतीति व्याख्यातम्। अत एव न तस्या मानसरूपज्ञानक्रियाया विधिः सम्भवति। यदि च ज्ञानं क्रियैव न भवतीत्येवं परतया भाष्यं व्याख्यायेत तदा पचतीतिवज्जानातीति पूर्वापरीभावप्रसिद्धिः दुश्चिकित्सा स्यात्। अत एव भामत्यां 'न वैलक्षण्याद्" इति भाष्यस्य व्याख्यानं "**तदेतस्मिन् वैलक्षण्ये स्थिते एव वैलक्षण्यान्तरमाह क्रिया हि नाम सेति**"[२] वर्णितम्।

ज्ञेयवैलक्षण्यं पूर्वमुक्तम्—चतुर्विधक्रियाकर्मभावाभावः इदानीं ज्ञानस्याविधेयत्वमुच्यते इति कल्पतरौ व्याख्यातम् अत्रत्यं भाष्यम्—ननु ज्ञानं नाम मानसी क्रिया। न; वैलक्षण्यात्।

---

१. भा.पृ.१२८।

२. भा.पृ.१२८।

क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, **'संध्यां मनसा ध्यायेत्'**[१] इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात्, ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयम्। अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम्। केवलं वस्तुतन्त्रमेव तत्। न चोदनातन्त्रम्। नापि पुरुषतन्त्रम्। तस्मान्मानससत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथाच **'पुरुषो वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः'**[२] इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति। केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा। नापि पुरुषतन्त्रा। किं तर्हि ? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्तम्। तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्; अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, नच तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छितं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्त्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते। **'इदं सर्वं यदयमात्मा'**[३] **'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्' विज्ञातारमरे केन विजानीयात्'**[४] **'अयमात्मा ब्रह्म'**[५] इत्यादिभिः। यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न

---

१. ऐ.ब्रा. ३/८/१।

२. छान्दो. ५/७, ८/१।

३. बृह. २/४/६।

४. बृह.४/५/१५।

५. बृह.२/५/१९।

भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति। तथाच श्रुतिः—**'आत्मानं चेद्विजानीयादयमस्मीति पुरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्'**[१] इति। **'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत'**[२] इति स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम्[३]।

व्याख्यातं च भामत्यामिदं भाष्यं भामतीकारेण—अयमर्थः—सत्यं, ज्ञानं मानसी क्रिया, नत्वियं ब्रह्मणि फलं जनयितुमर्हति; तस्य स्वयं प्रकाशतया विदिक्रियाकर्मभावानुपपत्तेरित्युक्तम्। तदेतस्मिन्वैलक्षण्ये स्थित एव वैलक्षण्यान्तरमाह—क्रिया हि नाम सेति। यत्र विषये वस्तुस्वरूपनिरपेक्षैव चोद्यते। यथा देवतासंप्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा देवताध्यानक्रिया। यथावा योषिता अग्निवस्त्वनपेक्षाग्निबुद्धिर्या सा क्रिया हि नामेति योजना। नहि 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इत्यस्माद्विधेः प्राग्देवताध्यानं प्राप्तं त्वधीतवेदान्तस्य विदितपदतदर्थसंबन्धस्याधिगतशब्दन्यायतत्त्वस्य 'सदेव सौम्येदम्' इत्यादेः 'तत्त्वमसि' इत्यन्तात्संदर्भात् ब्रह्मात्मभावज्ञानं शब्दप्रमाणसामर्थ्यात्। इन्द्रियार्थसन्निकर्षसामर्थ्यादिव प्रणिहितमनसः स्फीतालोकमध्यवर्तिकुम्भानुभवः। नह्यसौ स्वसामग्रीबललब्धाजन्मासन् मनुजेच्छयान्यथाकर्तुमकर्तुं वा शक्यः, देवताध्यानवत्, येनार्थवानत्र विधिः स्यात्। नचोपासना वानुभवपर्यन्तता वास्य विधेर्गोचरः, तयोरन्वयव्यतिरेकावधृतसामर्थ्ययोः साक्षात्कारे वानाद्यविद्यापनये वा विधिमन्तरेण प्राप्तत्वेन पुरुषेच्छयान्यथाकर्तुमकर्तुं वा अशक्यत्वात्। तस्माद्ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचरः, पुरुषचित्तव्यापाराधीनायास्तु क्रियाया वस्तुस्वरूपनिरपेक्षिता क्वचिदविरोधिनी, यथा देवताध्यानक्रियायाः, नह्यत्र वस्तुस्वरूपेण कश्चिद्विरोधः। क्वचिद्वस्तुस्वरूपविरोधिनी, यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता भेदेन निदर्शनमिथुनद्वयोपन्यासः। क्रियैवेत्येवकारेण

१. बृह.४/४/१२।

२. भ.गी.१५/२०।

३. भाष्यं-पृ.१२८-१३०।

वस्तुतन्त्रत्वमपाकरोति। ननु 'आत्मेत्येवोपासीत' इत्यादयो विधयः श्रूयन्ते। नच प्रमत्तगीताः, तुल्यं हि सांप्रदायिकं, तस्माद्विधेयेनात्र भवितव्यमित्यत आह—तद्विषयां लिङादय इति। सत्यं श्रूयन्ते लिङादयः, नत्वमीविधिविषयाः, तद्विषयत्वेऽप्रामाण्यप्रसङ्गात्। हेयोपादेयविषयो हि विधिः। स एवच हेय उपादेयो वा, यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति। तत्रैव च समर्थः कर्ताधिकृतो नियोज्यो भवति। नचैवंभूतान्यात्मश्रवणमननोपासनदर्शनानीति विषयतदनुष्ठात्रोर्विधिव्यापकयोरभावाद्विधेरभाव इति प्रयुक्ता अपि लिङ्गादयः प्रवर्तमानायामसमर्था उपल इव क्षुरतैक्ष्ण्यं कुण्ठमप्रमाणीभवन्तीति। अनियोज्यविषयत्वादिति। समर्थो हि कर्ताधिकारी नियोज्यः। असामर्थ्ये तु न कर्तृता ततो नाधिकृतोऽतो न नियोज्य इत्यर्थः। यदि विधेरभावान्न विधिवचनानि, किमर्थानि तर्हि वचनान्येतानि विधिच्छायानीति पृच्छति—किमर्थानीति। नचानर्थकानि युक्तानि, स्वाध्यायविध्यधीनग्रहणत्वानुपपत्तेरिति भावः। उत्तरम्—स्वाभाविकेति। अन्यतः प्राप्ताः एव हि श्रवणादयो विधिस्वरूपैर्वाक्यैरनूद्यन्ते। नचानुवादोऽप्यप्रयोजनः; प्रवृत्तिविशेषकरत्वात्। तथाहि—तत्तदिष्टानिष्टविषयेप्सा-जिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति। आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्य इति प्रवृत्तिविशेषकरतानुवादाना-मस्तीति सप्रयोजनतया स्वाध्यायविध्यधीनग्रहणत्वमुपपद्यत इति। यच्च चोदितमात्मज्ञानम-नुष्ठानानङ्गत्वादपुरुषार्थमिति, तदयुक्तम्; स्वतोऽस्य पुरुषार्थत्वे सिद्धे यदनुष्ठानानङ्गत्वं तद्भूषणं न दूषणमित्याह—यदपीति। अनुसंज्वरेत् शरीरं परितप्यमानमनुतप्येत। सुगममन्यत्। प्रकृतमुपसंहरति—तस्मान्न प्रतिपत्तीति[१]।

तत्र वस्तुतन्त्रत्वमपाकरोतीति भामती वाक्यमादाय कल्पतरुकृता श्रीमदमलानन्दाचार्येण तत्तात्पर्यमुक्तम्—**"अनेन ज्ञानमेव तत्र क्रियेति भाष्ये क्रियाशब्देन क्रियागतभवस्तु तन्त्रत्वं लक्षयित्वा प्रतिषिध्यते इति व्याख्यातम्। अत एव भाष्यकारो ब्रह्मज्ञानं न**

१. भामती पृ.-१२८-१३०।

**चोदना तन्त्रमिति दार्ष्टान्तिके चोदनातन्त्रत्वं प्रतिषेधति, न ब्रवीति न क्रियेति । अतः क्रियात्वमभ्युपेत्य ज्ञाने विधेयत्वं न मृष्यत इति गम्यते इति ।''**[१]

एवञ्च भामतीकाराणां मते दर्शनश्रवणमनननिदिध्यासनानि न विधेयानि तेषां ज्ञानरूपत्वाद् प्रत्येकं आत्मपदार्थस्यान्वयात् आत्मा द्रष्टव्य: श्रोतव्य इत्येवरूपेण दर्शनादिज्ञानादि-कर्मत्वाभावात् । सर्वपेक्षाधिकरणे (ब्र.३/४/२६) सूत्रे चतस्त्र: प्रतिपत्तयो ब्रह्मणि भवन्ति । प्रथमा—तावदुपनिषद्वाक्यश्रवणमात्राद् भवति, यां किलाचक्षते श्रवणमिति । द्वितीया—मीमांसासहितात् तस्मादेवोपनिषद्वाक्याद्, यामाचक्षते मननमिति । तृतीया चिन्तासन्ततिमयी, यामाचक्षते निदिध्यासनमिति । चतुर्थी तु साक्षात्कारवती वृत्तिरूपेति । श्रवणादिरूपतयोक्तानां चतुर्णामपि ज्ञानानां प्राप्तत्वेन विधातुमशक्यत्वमुपपादितमेव[२] ।

कल्पतरौ च श्रवणादीना ज्ञानरूपत्वेनाविधेयत्वमूपपाद्य विधान्तरेणापि श्रवणादीनामविधेयत्वमुपपादितम् । तथाहि—श्रवणं हि ब्रह्मात्मनि तत्त्वमसिवाक्यस्य तच्छब्दश्रुत्यादिपर्यालोचनया तात्पर्यावगम:; अस्य च विषयविशेषावच्छिन्नप्रत्ययस्यानवगमे तत्कर्तव्यत्वबोधायोगात्, अवगमे श्रवणस्यैव जातत्वात्पुन: कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वात् । एवं मननस्यापि विषयविशेषनियतयुक्तयालोचनस्यावगतस्य कर्तुमशक्यत्वादिति । उपासनस्यापि यथाश्रवणमननं प्रत्ययावृत्तेरवगमे द्वित्रिवारावृत्तेरवश्यं-भावाद्विधित्सितार्थस्य ज्ञातस्य न पुन: कर्तव्यत्वं, दर्शनस्य त्वशक्यत्वं स्फुटमिति । अन्यत: प्राप्ता इति । दर्शनार्थं कर्तव्यत्वेनान्वयव्यतिरेकावगतान् श्रवणादीननुवदन्ति वचांसि तद्गतप्राशस्त्यलक्षणया तेषु रुचिमुत्पाद्यानात्मचिन्तायामरुचिं कुर्वन्ति, प्रवृत्त्यतिशयं जनयन्तीत्यर्थ:[३] । तस्माद् दर्शनश्रवणादीनां न कोऽपि विधि: सम्भवतीति अत्रत्यभाष्यभामती कल्पतरूकल्पतरूपरिमलादिभिर्निणीतम् ।

---

१. कल्पतरू-पृ.-१२९ ।

२. कल्पतरूपरिमल-पृ.-१३० ।

३. कल्पतरू-पृ.१३० ।

विवरणे पुनः—साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्येति भाष्य प्रघट्टके। साधनप्रतिपादकवाक्यानि उदाहृत्य विचारविधिरूपपादितः। तथाहि—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति नित्यानित्यवस्तुविवेको दर्शितः; "शान्तो दान्तः" इति च दर्शनविधिप्रकरणे शमादयो दर्शिताः; "तद्विजिज्ञासस्वे"ति विचारविधिप्रकरणे 'वरुणं पितरमुपससारे"ति गुरूपसदनं दर्शितम्; सर्वत्र च फलश्रुतयः कामनोत्पादनद्वारेण मुमुक्षोरधिकारप्रदर्शनार्थाः; अन्यथा साधनानुष्ठानादेव फलसिद्धौ सङ्कीर्तनवैफल्यात्। ज्ञानस्याविधेयत्वात् तद्विधयोऽपि तत्साधनविधिपराः; तत्र सर्वशाखाप्रत्ययन्यायेन विधीनामेकत्वोपपत्तेः। स चैको विधिरधिकारमीक्षमाणः प्रकरणसामर्थ्यात् सङ्कीर्तनवैफल्यपरिहाराच्च वर्णितं धर्मकलापमधिकारनिमित्तत्वेन स्वीकरोति; निरधिकारस्य विधेः प्रवृत्तिपर्यन्तत्वायोगात्। ननु एषु वाक्येषु विचारो विधीयत इति कथमवगम्यते? उच्यते—"विजिज्ञासितव्यः" "विजिज्ञासस्वे"ति चान्तर्णीतो विचारो विधीयते; इष्यमाणज्ञानस्येच्छायाश्च विधेयत्वायोगात्"। "श्रोतव्यः" इति च स्वयमेव विचारो विहितः; "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"ति ज्ञानस्य साध्यतावगमात्। गुरुपसदनविधानाच्च तत्साधनश्रवणादिविधिः कल्प्यते। "आत्मन्येवात्मानं पश्येदि"ति ज्ञानविधानायोगात् तत्साधने विधिरुपादीयते, इति सर्वत्र मनन-निदिध्यासनाभ्यां सह श्रवणं नामाङ्गि विधीयत इति सिद्धम्[१]।

एवं विवरणमते श्रवणस्य मनननिदिध्यासनाङ्गसहितस्याङ्गिनः नियमविधिः सिद्धः।

एतत् सर्वं सिद्धान्तलेशे संगृह्योक्तम्। नियमविधित्वं विवरणमतेऽविधित्वं भामतीमते। तथाहि—वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहेतुत्वं नाप्राप्तम् अपरोक्षवस्तुविषय-प्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वप्राप्तेः शाब्दापरोक्षवादेव्यवस्थापनात्। तदर्थमेव हि तत्प्रस्तावः। न च तावता ब्रह्मप्रमाणत्वेनापातदर्शनसाधारणब्रह्मसाक्षात्कारहेतुत्वप्राप्तावपि

१. विवरणप्रमेयसंग्रह-पृ.७२९-७३३।

अविद्यानिवृत्त्यर्थमिष्यमाणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वं श्रवणस्य न प्राप्तमिति वाच्यम्। विचारमात्रस्य विचार्य्यमात्रनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्यतत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तशब्दज्ञानरूपस्य श्रवणस्य तद्धेतुत्वप्राप्तेः।

न चोक्त उभयतो व्यभिचारः सहकारिवैल्येनान्वयव्यभिचारस्य अदोषत्वात्। जातिस्मरस्य जन्मान्तरश्रवणात् फलसम्भवेन व्यतिरेकव्यभिचाराभावात्। अन्यथा व्यभिरेण हेतुत्वबाधे श्रुत्यापि तत्साधनताज्ञानासम्भवात्। घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव ब्रह्मसाक्षात्कारे श्रवणातिरेकेण उपायान्तरमस्तीतिशङ्कायां व्यतिरेकव्यभिचारस्यापि अदोषत्वाच्च। तथा च प्राप्तत्वात् न अपूर्वविधिः। अत एवावृत्तिरसकृदुपदेशात् इति अधिकरणभाष्ये दर्शनपर्य्यवसानानि हि श्रवणादीनि आवर्तमानानि दृष्टार्थानि भवन्ति, यथा अवघातादीनि तण्डुलनिष्पत्त्यवसानानीति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दर्शपूर्णमासिकावघातन्यायप्राप्तौ व्यावृत्त्युपदेशः। अपूर्वविधित्वे तु स न युज्यते सर्वौषधाऽवघातवत्। अग्निचयने सर्वौषधस्य पूरयित्वाऽवहन्त्यथैतदुपदधातीत्युपधेयालूखलसंस्कारार्थत्वेन विहितस्य अवघातस्य दृष्टार्थत्वाभावात् न आवृत्तिरिति तन्त्रलक्षणे स्थितम्। अतो नियमविधिरेवायम्।

तदभावे हि यथा वस्तु किञ्चित् चक्षुषा वीक्षमाणस्तत्र स्वागृहीते सूक्ष्मे विशेषान्तरे केनचित् कथिते तदवगमाय तस्यैव चक्षुषः पुनरपि सप्रणिधानं व्यापारे प्रवर्त्तते एवं मनसाऽहमिति गृह्यमाणे जीवे वेदान्तैरध्ययनगृहीतैः उपदिष्टं निर्विशेषब्रह्मचैतन्यरूपत्वमाकर्ण्य तदवगमाय तत्र सावधानं मनस एव निधाने कदाचित्पुरुषः प्रवर्त्तेत इति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यात्। अप्राप्य मनसा सहेति तु मनसैव अनुद्रष्टव्यं दृश्यते त्वग्रायाबुद्धोत्वपि श्रवणेनाऽनवहितमनोविषयेति शङ्कासम्भवात्।

अथ वा जुष्टं यदा पश्यत्यन्तमीशमस्य महिमानमिति वीतशोक इत्यादिश्रवणाद्भिन्नात्मज्ञानात् मुक्तिरिति भ्रमसम्भवेन मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपशास्त्रान्तरश्रवणेऽपि पक्षे प्रवृत्तिः स्यात् इति अद्वितीयात्मपरवेदान्तश्रवणनियमविधिरस्तु। इह आत्मशब्दस्येदं

सर्वं यदयमात्मेत्यादिप्रकरणपर्य्यालोचनया अद्वितीयात्मपरत्वात्। न हि वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति कुलधर्मः। येन वेदान्तश्रवणनियमार्थवत्त्वाय नियमादृष्टजन्यस्वप्रतिबन्धककल्मषनिवृत्तिद्वारा सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य वेदान्तश्रवणैकसाध्यत्वस्याभ्युपगन्तव्यत्वेन तत्र वस्तुतः साधनान्तराभावात् न नियमविधिर्युज्यते इति आशङ्क्येत किं तु यत्र साधनान्तरतया सम्भावनया पक्षे प्राप्ता विधित्सितसाधनस्य पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते तत्र नियमविधिः तावता एव अप्राप्तांशपरिपूरणस्य तत्फलस्य सिद्धेः।

अथ वा गुरुमुखाधीनाध्ययनादिव निपुणस्य स्वप्रयत्नमात्रसाध्यादपि वेदानतविचारात् सम्भवति सत्तानिश्चयरूपं ब्रह्मपरोक्षज्ञानं किं तु गुरुमुखाधीनवेदान्तवाक्यश्रवणनियमाऽदृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेन उपयुज्यत इति तदभावेन प्रतिबद्धमविद्यामनिवर्त्तयत् परोक्षकल्पम् अवतिष्ठते। न च ज्ञानोदये अज्ञानाऽनिवृत्त्यनुपपत्तिः। प्रतिबन्धकाभावस्य सर्वत्रापेक्षितत्वेन सत्यपि प्रत्यक्षविशेषदर्शने उपाधिना प्रतिबन्धात् प्रतिबिम्बरूपभ्रमाऽनिवृत्तिवत् तदनिवृत्त्युपपत्तेः। एवं च लिखितपाठादिनापि स्वाध्यायग्रहणप्रसक्तौ गुरुमुखाधीनाध्ययननियमविधिवत् स्वप्रयत्नमात्रपूर्वकस्यापि वेदान्तविचारस्य सत्तानिश्चयरूपब्रह्मसाक्षात्कारार्थत्वेन पक्षे प्राप्तौ गुरुमुखाधीनश्रवणनियमविधिरयमस्तु।

न च तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति गुरूपसदनविधिनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्विफलो नियमविधिरिति शङ्क्यम्। गुरूपसदनस्य श्रवणाङ्गतया श्रवणविध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्याप्रसक्तेः। अन्यथा अध्ययनाङ्गभूतोपगमविधिनैव लिखितपाठादिव्यावृत्तिः इति अध्ययननियमोऽपि विफलः स्यात्।

अथ वा अद्वैतात्मपरभाषाप्रबन्धस्य श्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणे नियमविधिरस्तु। न च न म्लेच्छितवा इत्यादिनिषेधादेव तदप्राप्तिः। शास्त्र-व्युत्पत्तिमान्द्यात् वेदान्तश्रवणमशक्यमिति पुरुषार्थनिषेधमुल्लङ्घ्यापि भाषाप्रबन्धेन अद्वैतं जिज्ञासमानस्य तत्रापि प्रवृत्तिसम्भवेन

नियमविधेरर्थवत्त्वोपपत्तेः । अभ्युपगम्यते हि कर्तृधिकरणे व्युत्पादितं पुरुषार्थे अनृतवदननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चित्‌हेतोरङ्गीकृततन्निषेधोल्लङ्घनस्याऽविकलां क्रतुसिद्धिं कामयमानस्य अनृतवदने प्रवृत्तिः स्यादिति पुनः क्रत्वर्थतया दर्शपूर्णमासप्रकरणे नाऽनृतं वेददिति निषेध इति क्रत्वर्थतया निषेधस्यार्थवत्त्वम् ।

यद्वा यथा मन्त्रैरेव मन्त्रार्थस्मृतिः साध्येति नियमस्तन्मूलकल्पसूत्रात्मीयग्रहणक-वाक्यादीनामपि पक्षे प्राप्तेस्तथा वेदान्तमूलेतिहासपुराणपौरुषेयप्रबन्धानामपि पक्षे प्राप्तिसम्भवात् नियमोऽयमस्तु[१] ।

सर्वथा नियमविधिरेवायम् । सहकार्य्यन्तरविधिरित्यधिकरणभाष्ये अपूर्वविधित्वोक्तिस्तु नियमविधित्वेऽपि पाक्षिकाप्राप्तिसद्भावात् तदभिप्रायेति तत्रैव पक्षेणेति पाक्षिकाप्राप्तिकथनपर-सूत्रपदयोजनेन स्पष्टीकृतमिति विवरणानुसारिणः ।

भामतीमतम्—आत्मा श्रोतव्य इति मननादिवदात्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्य्योपदेशजमात्मज्ञानमेव न तु तात्पर्य्यविचाररूपं न तत्र कोऽपि विधिः । अत एव समन्वयसूत्रे आत्मज्ञानविधिनिराकरणानन्तरं भाष्यं किमर्थानितर्हि आत्मा वा अरे द्रष्टव्य इत्यादीनि वचनानि विधिच्छायानि स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूम इत्यादि । यदि च वेदान्ततात्पर्य्यविचाररूपं श्रवणं तदा तस्य तात्पर्य्यनिर्णयद्वारा वेदान्ततात्पर्य्यभ्रमसंशयरूपप्रतिबन्धकनिरास एव फलं न प्रतिबन्धकान्तरनिरासो ब्रह्मावगमो वा । तत् फलकत्वं च तस्य लोकत एव प्राप्तं साधनान्तरं च किञ्चिद्विकल्पा समुच्चित्य वा न प्राप्तमिति न तत्र विधित्रयस्य अपि अवकाशः । विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसम्भवे अदृष्टकल्पनाऽयोगाद् गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थे पर्य्यवस्यतीति । अत एव स्वप्रयत्नसाध्यविचारव्यावृत्तिः । अध्ययनविध्यभावे तु उपगमनं विधीयमानमक्षरावाप्तार्थत्वेन अविधीयमानत्वान्न तदर्थं गुरुमुखोच्चारणानूच्चरणमध्ययनं

---

१. सिद्धान्तलेशसंग्रहः-पृ.१२-३० ।

द्वारीकरोतीति लिखितपाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियमविधिः । न च तात्पर्य्यादिभ्रमनिरासाय वेदान्तविचारार्थिनः कदाचिद् द्वैतशास्त्रेऽपि प्रवृत्तिः स्यात् तत्रापि तदभिमतयोजनया वेदान्तविचारसत्त्वादित्यद्वैतात्मपरवेदान्तविचारनियमविधिरर्थवानिति वाच्यम्? स्वयमेव तात्पर्य्यभ्रमहेतोस्तस्य तन्निरासकत्वाभावेन साधनान्तरप्राप्ताभावात् । तन्निरासकत्वभ्रमेण तत्रापि कस्यचित् प्रवृत्तिः स्यात् इति एतावता श्रोतव्य इति नियमविधेरभ्युपगम इत्यपि न । ईश्वरानुग्रहफलाद्वैतश्रद्धारहितस्य श्रोतव्यवाक्येऽपि पराभिमतयोजनया सद्द्वितीयात्मविचार-विधिपरत्वभ्रमसम्भवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेन अपि अपरिहार्य्यत्वात् ।

न च व्यापारान्तरानिवृत्त्यर्था परिसंख्येति युक्तम् । असंन्यासिनो व्यापारान्तर-निवृत्तेरशक्यत्वात् । सन्यासिनस्तन्निवृत्तेर्ब्रह्मसंस्थया सह संन्यासविधायकेन ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्यन्तरेण सिद्धतया संन्यासविधायकश्रुत्यन्तरमपेक्ष्य श्रोतव्यवाक्येन तस्य व्यापारान्तरनिवृत्त्युपदेशस्य व्यर्थत्वात् । न च विचारविध्यसम्भवेऽपि विचारविषयवेदान्तनियमविधिः सम्भवति भाषाप्रबन्धादिव्यावर्त्त्यसत्त्वादिति शङ्क्यम् । सन्निधानादेव वेदान्तनियमस्य लब्धत्वेन विधिविषयत्वायोगात् । स्वाध्यायोऽध्येतव्य इत्यर्थावबोधनार्थनियम-विधिबलादेव अध्ययनगृहीतवेदात्पादितं वेदार्थज्ञानं फलपर्य्यवसायि न कारणान्तरोत्पादित-मित्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादीनामप्राप्तेः । न च सहकार्यन्तरविधिरित्यधिकरणे बाल्यपाण्डित्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधिरभ्युपगत इति वाच्यम् । विचारे विचार्य्य तात्पर्य्यनिर्णयहेतुत्वस्य वस्तुसिद्ध्यनुकूल-युक्त्यनुसन्धाने च वस्त्वगमवैशद्यहेतुत्वस्य च लोकसित्वेन तेषु विध्यनपेक्षणात् । विधिच्छायार्थवादस्य इव प्रशंसाद्वारा प्रवृत्तातिशयकरत्वमात्रेण तत्र विधित्वव्यवहारात् । एवं च श्रवणविध्यभावात् कर्मकाण्डविचारवद् ब्रह्मकाण्डविचारोऽपि अध्ययनविधिमूल इत्याचार्य्यवाचस्पतिपक्षानुसारिणः[१] ।

---

१. सिद्धान्तलेशः-पृ.-४१-५७ ।

## अध्यासस्वरूपम्

"आह कोऽयमध्यासो नामेति । उच्यते–स्मृतिरूपः परत्र पूर्वदृष्टाव-भासोऽध्यासः"[१] ।

अत्र भामत्यामाक्षेप उक्तः—स्यादेतत्—सत्ख्यातिवादेन शङ्का कृता । अस्य निरासः अग्रे भामत्यां भविष्यति । द्धा पूर्वपतीतिमात्रमुपयुज्यत आरोपे, नतु प्रतीयमानस्य परमार्थसत्ता; प्रतीतिरेव त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नोपपद्यते, प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्वं, नतु तदतिरिक्तं सत्तासामान्यसमवायः, अर्थक्रियाकारिता वा, द्वैतापत्तेः, सत्तायाश्चार्थक्रियाकारितााश्च सत्तान्तरार्थक्रियाकारितान्तर-कल्पनेऽनवस्थापातात्, प्रकाशमानतैव सत्ताभ्युपेतव्या । तथाच देहादयः, प्रकाशमानत्वान्नासन्तः, चिदात्मवत्; असत्त्वे वा न प्रकाशमानाः, तत्कथं सत्यानृतयोर्मिथुनीभावः, तदभावे वा कस्य कुतो भेदाग्रहः, तदसंभवे कुतोऽध्यास इत्याशयवान्—आह आक्षेप्ता—कोऽयमध्यासो नाम । क इत्याक्षेपः । समाधाता—लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः[२] ।

ननु युष्मदस्मदित्यत्राप्याक्षेप उक्तः स्यादेतत् इत्यादिनाऽत्रापीति को भामत्यभिप्रायः इति चेत् उच्यते, सत्यानृते मिथुनीकृत्येत्यत्र वस्तुसत्तावर्जमारोप्यस्य प्रतीतिमात्रमुपयोगीत्युक्तम् । इदानीं पतीतिरेवानृतस्यायुक्तेत्यभिप्रायः । अन्ततस्य प्रतीतिमङ्गीकृत्य भेदग्रहाद् अध्यासाक्षेपः पूर्वं कृतः । इदानीं प्रतीतिविषयस्यानृतत्त्वमेव न युक्तमित्याक्षेप इति भेद इत्यर्थः ।

आह कोऽयमित्यत्र किं शब्द आक्षेपार्थः । "समाधाता लोकसिद्धमध्यासलक्षणमाचक्षण एवाक्षेपं प्रतिक्षिपतीति भामती । अयमत्राशयः । किम् आत्मानात्मनोरध्यास आक्षिप्यते उत लोकेऽध्यासमात्रमाक्षिप्यते । तत्र आत्मानात्मनोरध्यासआक्षिप्ते अध्याससामान्यलक्षणकथा

१. भाष्य -१७ ।

२- भामती-पृ.-१७-१८ ।

व्यर्थाब्रह्मजिज्ञासायां तस्यानुपयुक्तत्वात् । तस्माद् लोकसिद्धमध्यासं लक्षयन् आचार्यः सर्वाक्षेप समाधानं करोति । इष्टस्थलेऽपि आत्मानात्माध्यासे लक्षणस्य संगतत्वात् । न चाध्यास एव नास्ति । सहस्रशोऽध्यासानामुपलम्भात् । तत्र लक्षणे स्मृतिरूपेत्यादौ भामतीकारमते लघुविस्तृतलक्षणद्वयमभिप्रेतम् । तथाहि—**"अवसन्नोऽवमतो वा भासोऽवभासः प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा । एतावता मिथ्याज्ञानमित्युक्तं भवति । तस्येदमुपव्याख्यानं पूर्वदृष्टेत्यादि"**[१] ।

अवसाद उच्छेदः, यथा रजतादेः । अवमानो यौक्तिकतिरस्कारः यथा लघुमण्डलश्चन्द्रः इत्यादेः । एवञ्च अवभासपदेनैव योगशक्त्या अध्यासस्य लघुलक्षणं भाष्याभिप्रेतम् । तस्यैव विस्तृतं लक्षणं पूर्वदृष्टेत्यादिरूपम् । तथाहि—पूर्वदृष्टस्यावभासः पूवदृष्टावभासः । मिथ्याप्रत्ययश्चारोपविषयारोपणीययोर्मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीय-मुपस्थापयति । तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्तेति दृष्टग्रहणम् । तथापि वर्तमानं दृष्टं दर्शनं नारोपोपयोगीति पूर्वेत्युक्तं । तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयानिर्वाच्य-मिथ्यनृतम् । आरोपविषयं सत्यमाह—परत्रेति । परत्र शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमुक्तम् । स्यादेतत्—परत्र पूर्वदृष्टावभास इत्यलक्षणम्; अतिव्यापकत्वात् । अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वसय परत्र कालाक्ष्यामवभासः, अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्यत्यामवभासः समीचीनः । अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धम्, यथा नीलस्यावभासः पीतस्यावभास इत्यत आह—स्मृतिरूप इति । स्मृतेरूपमिव रूपमस्येति स्मृतिरूपः । असंनिहितविषयत्वं च स्मृतिरूपत्वं, संनिहितविषयं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः । नाप्यव्याप्तिः; स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवं-रूपत्वात् । तत्रापि हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसंनिधानापरामर्शे, तत्र तत्र पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोपः । एवं पीतः शङ्खस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं

१. भामती-पृ.१८ ।

योजनीयम् । तथहि—बहिर्विनिर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तद्रव्यवर्तिनी पीततां पित्तरहितामनुभवन्, शङ्खं च दोषाच्छादितशुक्तिमानमनुभवन्, पीततायाश्च शङ्खासंबन्धमननुभवन्, असंबन्धाग्रहणसारूप्येण पीतं तपनीयपिण्डं पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सासमानाधिकरण्यं पीतत्वशङ्खयोरारोप्याह पीतः शङ्ख इति । एतेन तिक्तो गुड इति प्रत्ययो व्याख्यातः । एवं विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयत्, दोषवशात्तद्देशतामनभिमुखतां च मुखस्याग्राहयत, पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति । एतेन द्विचन्द्रदिङ्मोहालातचक्रगन्धर्व-नगरवंशोरगादिविभ्रमेष्वपि यथासंभवं लक्षणं योजनीयम्[१] ।

उक्तं लक्षणद्वयं कल्पतरूकाराणामप्यभिप्रेतम्—तथाचोक्तं कल्पतरौ—"सकृच्छ्रुतपदस्यार्थद्वयक्लृप्ति र्न दुष्यति संक्षिप्तविस्तृताध्यासलक्षणद्वयलाभतः । एवञ्च मिथ्याज्ञानमध्यास इत्यवभासपदेन व्युत्पाद्यप्रत्यभिज्ञायामतिव्याप्त्यभिधानं शोभतेतरामित्युपहासानवसरः" (कल्प. १९)

अत्र पूर्वदृष्टपेदनानृतमुपस्थापयतीति भामत्यामुक्तम् । परत्रपदेन आरोपविषयः सत्य उपस्थाप्यते इत्युक्तम् । अत्र शङ्कते यदि पूर्वदृष्टपदेनानृतस्योपस्थापनं तदा अनृतस्य सत्येऽवभासोऽध्यास इति लक्षणं स्मृतिरूपं फलितम् । तत् कथं प्रत्यभिज्ञायामतिव्याप्तम् । नहि प्रत्यभिज्ञायां पूर्वदृष्टमनृतं भवति अपि तु सत्यमेवेति । उच्यते, न पूर्वदृष्टपदेनानृतत्वलाभः अपि तु स्मृतिरूपपदेन । तथा च स्मृतिरूपपदं विना प्रत्यभिज्ञायामतिव्याप्तिः प्रदर्शिता । तथाहि स्मृतिरूपपदेन स्मृतौ रूपमिवरूपं यस्येतिविग्रहात् असंनिहितविषयत्वमागतम् । असन्निधानञ्चाधिष्ठाने परमार्थतोऽसत्त्वम् । तेनानृतत्वलाभः । स्मृतिरूपपदाभावे पूर्वदृष्टपदेनानृतत्वलाभेन भवतीति स्मृतिरूपपदनिवेशाभावे भामत्यां प्रत्यभिज्ञायामति-

१. भामती-पृ. १८-२१ ।

व्याप्तिरुक्तेत्यदोषः। स्मृतिरूपपदेनासन्निहितविषयत्वे विवक्षिते स्मृतिरूपः पूर्वदृष्टस्यावभास इत्येतावन्मात्रोक्तौ स्मृतौ अतिव्याप्तिरतः परत्रेति। तस्मात् असन्निहितस्य परत्र प्रतीतिरध्यासः इति लक्षणमुक्तं भवति। असंनिधानञ्च अधिष्ठाने परमार्थतोऽसत्त्वं न तु देशान्तरसत्त्वमिति नापसिद्धान्तः।

अथवा असंनिधाने सत्ख्यातिरिह वारिता अवभासादसत्ख्यातिर्नृभृङ्गे तददर्शनात् इति। असन्निहितस्य परत्र प्रतीयमानस्य पूर्वदृष्टत्वे अर्थतः सिद्धेऽपि पुनर्ग्रहणं पूर्वप्रमितत्वव्यावृत्त्यर्थम् इत्यादि सर्वं कल्पतरौ व्याख्यातम् असन्निहितस्यावभासः परत्रेति लक्षणं कल्पतरूमते अथवेत्यनेन सूचितम्। अत्र च अत्र असंनिहितेत्यनेन सत्ख्यातयो वारिताः सत्ख्यातयः—आत्मख्यातिरन्यथाख्यातिरख्यातिरपि च। अवभासपदेन च प्रतीति गृह्यते तेन चासत्ख्याति वारिता।

भ्रमविषयरजतादितं तादात्म्येन वा तादृशधर्म्येण वा यद्गतं तदधिष्ठानम्। तथा चाख्यात्मन्यव्याख्यातिमतयोरेव देशान्तरस्थमधिष्ठानम्। आत्मख्यातिमते ज्ञानम्। सत्ख्यातिमते पुरोवत्तिशुक्त्यादिकमधिष्ठानम्। अस्मिन् मतचतुष्टयेऽपि सदेव रजतादिकं तत्तदधिष्ठानसमसत्ताकमित्यसन्निधानपदेन चतुर्विधाप्येषा सत्ख्याति वार्यते। अवभासाद्=अपरोक्षावभासात् असत्ख्यातिर्वारिता। अत एवाह नृभृङ्गे तददर्शनादिति। नृशृङ्गेपि हि परोक्षावभासः प्रागाचार्यैरङ्गीकृतः। यद्यप्यापरोक्ष्यं न लक्षणानुप्रविष्टं; तथापि रजताध्यासे लक्षणानुगतौ क्रियमाणायां तत्र लक्षणस्थमवभासपदं वस्तुतोऽपरोक्षावभासे पर्यवस्यदापरोक्ष्यस्फुरणनियतमिति तल्लाभः। इदं त्ववधेयम्—शुक्तावसद्रजतं भासत इति सदुपरक्तासत्ख्यातेरपरोक्षावभासेन निरासः शून्यवाद्यभिमतनिरधिष्ठानासत्ख्यातेस्त्व-संनिधानेनापि निरासः; तदर्थस्य स्वाधिष्ठाने समसत्ताकत्वाभावस्यासति स्वाधिष्ठानाप्रसिद्धौ निरूपयितुमशक्यत्वात्, एवंच सिद्धान्त्यभिमता शशशृङ्गादिशब्दजन्या असत्प्रतीतिः न शुक्तिरजतादिज्ञानवदध्यासो, नापि घटादिज्ञानवत्प्रमा, किंतूभयविलक्षणं ज्ञानमात्रमिति।

पूर्वदृष्टग्रहणं तु न ख्यात्यन्तरनिरासार्थं, पूर्वदृष्टिसद्भावप्रतिपादनार्थं वा; रजतविभ्रमादिषु पूर्वदृष्ट्यपेक्षाया: सर्वसंप्रतिपन्नत्वात्, किंतु टीकोक्तप्रयोजन- मात्रार्थमित्याह—असंनिहितस्येति । पूर्वप्रमितत्वंशब्देन पूर्वप्रमितत्वसहचरिता सत्ता लक्ष्यते, आक्षेपभाष्यटीकानुसारात्[१] ।

भामत्याम् अध्यासलक्षणात् पूर्वं सत्ख्यातिवादेन शङ्का उत्थापिता । तस्या: परिहार: लक्षणव्याख्यानानन्तरं एतदुक्तं भवति ग्रन्थादिना तोयात्मनापि सन्तोभवन्ति इत्यन्तेन ग्रन्थेन कृत: । पुन: सत्ख्यातिवादिनैव असत्ख्यातिवादस्य निरास: कृत:-न च विषयस्य समस्तसामर्थ्य विरहेऽपीत्यादिना-नानुभवविषयाभवितुमर्हन्तीत्यन्तेन ग्रन्थेन । पुन: अत्र ब्रूम: इत्यादिना सर्वेषामेव सम्मत: परीक्षणामित्यन्तेन ग्रन्थेन । तथाहि—सत्ख्यातिवादं शून्यवादिमतनिरासपूर्वकं प्रतिक्षिपति । अत्र ब्रूम:—निस्तत्त्वं चेन्नानुभवगोचर:, तत्किमिदानीं मरीचयोऽपि तोयात्मना सतत्त्वा:, यदनुभवगोचरा: स्यु: । न सतत्त्वा:; तदात्मना मरीचीनामसत्त्वात् । द्विविधं च वस्तूनां तत्त्वं सत्त्वमसत्त्वं च । तत्र पूर्वं स्वत:, परं तु परत: । यथाहु:—'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ।' इति । तत्किं मरीचिषु तोयनिर्भासप्रत्ययस्तत्त्वगोचर:, तथाच समीचीन इति न भ्रान्तो नापि बाध्येत । अद्धा न बाध्येत, यदि मरीचीनतोयात्मतत्त्वानतोयात्मना गृह्णीयात्, तोयात्मना तु गृह्णन्कथमभ्रान्त: कथं वाऽबाध्य: ।अनिर्वचनीयख्यातिं समर्थयति । हन्त तोयाभावात्मनां मरीचीनां तोयभावात्मत्वं यावन्न सत्; तेषां तोयाभावादभेदेन तोयभावात्मतानुपपत्ते: । नाप्यसत्; वस्त्वन्तरमेव हि वस्त्वन्तरस्यासत्त्वमास्थीयते 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति वदद्भि: । नचारोपितं रूपं वस्त्वन्तरम् । तद्धि मरीचयो वा भवेत्, गङ्गादिगतं तोयं वा । पूर्वस्मिन्कल्पे मरीचय इति प्रत्यय: स्यान्न तोयमिति । उत्तरस्मिंस्तु गङ्गायां तोयमिति स्यात्, नपुनरिहेति । देशभेदास्मरणे तोयमिति स्यान्नपुनरिहेति । नच-इदमत्यन्तमसन्निरस्तसमस्तस्वरूपमलीकमेवास्त्विति—सांप्रतम्;

---

१. कल्पतरूपरिमल-पृ.-२० ।

तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मान्न सत्; नापि सदसत्; सांख्यमतं सदसत्ख्याति प्रतिक्षिपति । परस्परविरोधादित्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयं, तदनेन क्रमेणाध्यस्तं तोयं परमार्थतोयमिव, अतएव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयं नच पूर्वदृष्टं, किंत्वनृतमनिर्वाच्यम् । एवंच देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यत इति उपपन्नम्; अध्यासलक्षणयोगात् । देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यत इति उपपन्नम्; अध्यासलक्षणयोगात् देहेन्द्रियादिप्रपञ्चबाधनं चोपपादयिष्यते । चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरः तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्यः । अबाधिता स्वयंप्रकाशतैवास्य सत्ता, सा च स्वरूपमेव चिदात्मनः, नतु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वेति सर्वमवदातम् । स चायमेवंलक्षण-कोऽध्यासोऽनिर्वचनीयः सर्वेषामेव संमतः परीक्षकाणाम्[१] ।

भाष्ये सिद्धान्तलक्षणमुक्त्वा अध्यास्यानिर्वचनीयत्वं द्रढयितुम् अन्येषां मतानि उपस्थापितानि तथाहि—तं केचित्—अन्यत्रान्यधर्माध्यास-इति वदन्ति । केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति । अन्ये तु-यत्र यदध्यचासस्तस्यैव विपरीतधर्मत्वकल्पनां-आचक्षते; इति सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति ।[२]

## अध्यासेऽनुपपत्तिप्रदर्शनं तत्परिहारश्च

ननु अथातो ब्रह्म जिज्ञासेति सूत्रे साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासेत्युक्तम् । तत्रब्रह्मणो जिज्ञासेत्यनेन जिज्ञास्यस्य ब्रह्मणः संदिग्धत्वं सप्रयोजनत्वञ्च सूत्रेण सूचितम् ।

तयोरेव सन्दिग्धत्वसप्रयोजनत्वयोः आक्षेपसमाधानपरं "आह कोऽयमध्यासः"

---

१. भामती-पृ.-२३-२५ ।

२. भाष्य-पृ.-१८-३४ ।

इत्यत: प्राक्प्रवृत्तस्य युष्मदस्मद्विषयविषयिणोरित्यादिभाष्यमिति प्रथमं भामत्यां प्रदर्शितम्। ननु ब्रह्म जिज्ञासितव्यमित्युक्तम् इह च भाष्यभामत्यां युष्मदस्मद्प्रत्ययगोचरयोरध्यास आक्षिप्य उक्त:। युष्मत्प्रत्ययगोचरयो: प्रपञ्च: अस्मत्प्रत्ययगोचरो जीवात्मेति। तयोरध्यासेन ब्रह्मजिज्ञासाया: क: सम्बन्ध:। किमर्थं तावत् भाष्यकृता अध्यासभाष्यं योजितम् । सूत्रेण प्रथमेन अध्यासस्याप्रतिपदनात्। तस्माद् सूत्रासम्बद्धमिदं भाष्यं तदनुसारिभामतीग्रन्थश्चेति चेन्न। अयमात्मा ब्रह्म तरति शोकमात्मवित्। ब्रह्मविद् ब्रह्मैव भवतीत्यादि श्रुतिभ्य:। क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारतेत्यादि स्मृतिभ्यश्च जीवात्मपरमात्मनोरैक्यं प्रतिपादितम्। तथा च आत्मैव ब्रह्म। स चात्मा अहं प्रत्ययगम्य सर्वप्राणिसाक्षिक: नि:सन्दिग्ध: निष्प्रयोजनश्चेति। तस्माद् ब्रह्म न जिज्ञासितव्यम्। इत्याक्षेपो युक्त:। जिज्ञास्यत्वव्यापके संदिग्धत्वसप्रयोजनत्वे तद्विरुद्धे चासन्दिग्धत्वनिष्प्रयोजनत्वे। तयोरूपलब्धिरस्ति। ततश्च व्यापकाभावे व्याप्यजिज्ञास्यत्वाभाव: प्रतिपादिते भामत्यां व्यापकविरुद्धोपलब्धिरित्यनेन ग्रन्थेन। तथा च मुमुक्षुणा ब्रह्म न विचार्यं तं प्रत्ययसंन्दिग्धत्वात् समनस्केन्द्रिय संनिकृष्टस्फीतालोकमध्यवर्ति घटवत्। निष्प्रयोजनत्वाच्च काकदन्तवदिति प्रयोग: फलित:।

तथाहि स्पष्टं सर्वभामत्याम्—अथ-यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचर:; यथा समनस्केन्द्रियसंनिकृष्ट: स्फीतालोकमध्यवर्ती घट:, करटदन्ता वा, तथाचेदं ब्रह्मेति व्यापकविरुद्धोपलब्धि:। तथाहि—'बृहत्त्वात्बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते', स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्य: प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम्। नहि जातु कश्चिदत्र संदिग्धेऽहं वा नाहं वेति। नच विपर्यस्यति नाहमेवेति। नच—अहं कृश: स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद्देहालम्बनोऽयमहंकार इति—सांप्रतम्; तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसंधानं न भवेत्। नहि बालस्थविरयो: शरीरयोरस्ति मनागप प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत। तस्माद्येषु

व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम् । तथाच बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो विद्यते । अपिच स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान्भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीमात्मानं पश्यन् नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । अपिच योगव्याघ्रः शरीरभेदेऽप्यात्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः । अतएव नेन्द्रियाण्यप्यस्यालम्बनम्; इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव । बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः; कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यारोपे कथंचिन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका इति युक्तमुत्पश्यामः । तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः, स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् । अप्रयोजनत्वाच्च । तथाहि—संसारनिवृत्तिरपवर्ग इह प्रयोजनं विवक्षितम् । संसारश्चात्मयथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन निवर्तनीयः । स चेदयमनादिरनादिनात्मयाथात्म्यज्ञानेन सहानुवर्तते कुतोऽस्य निवृत्तिः, अविरोधात् । कुतश्चात्मयथात्म्याननुभवः; नह्यहमित्यनुभवादन्यदात्मयाथात्म्यज्ञानमस्ति । नचाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम्; अनुभवविरोधात् । नह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्श्याम इत्याशयवानाशङ्क्य परिहरति—युष्मदस्मत्प्रत्ययगोचरयोरिति । अत्र च युष्मदस्मदित्यादिर्मिथ्याभवितुं युक्तमित्यन्तः शङ्काग्रन्थः । तथापीत्यादिपरिहारग्रन्थः । तथापीत्यभिसंबन्धाच्छङ्कायां यद्यपीति पठितव्यम् । इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । तथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः; एते वयमिमे वयमास्महे इति बहुलं प्रयोगदर्शनादिति । चित्स्वभाव आत्मा विषयी, जडस्वभावा बुद्धीन्द्रियदेहविषया विषयाः । एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति, स्वेन रूपेण

निरूपणीयं कुर्वन्तीति यावत्। परस्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्तः तमःप्रकाशवं'दिति। नहि जातु कश्चित्समुदाचरद्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति, तदिदमुक्तम्—इतरेतरभावानुपपत्ताविति। इतरेतरभाव इतरेतरत्वम्, तादात्म्यमिति यावत्, तस्यानुपपत्ताविति। स्यादेतत्—माभूद्धर्मिणोः परस्परभावः; तद्धर्माणां परस्परभावः; तद्धर्माणां तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति, दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासः; यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम, इत्यत उक्तम्—तद्धर्माणामपीति। इतरेतरत्र धर्मिणि धर्माणां भावो विनिमयस्तस्यानुपपत्तिः। अयमभिसंधिः—रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्; चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति, यथाहुः—'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता' इति। तदिह परिशेष्याद्विषयविषयिणोरन्योन्यात्मसंभेदेनैव तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असंभिन्नाः सुतरां तयोर्धर्माः; स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात्, तदिदमुक्तं—सुतरामिति। तद्विपर्ययेणेति। विषयविपर्ययेणेत्यर्थः। मिथ्याशब्दोऽपह्नववचनः एतदुक्तं भवति—अध्यासो भेदाग्रहेण व्याप्तः, तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति। मिथ्येति भवितुं युक्तं यद्यपि, तथापीति योजना[१]।

**आक्षेपसमाधानम्–**

अहमर्थस्यात्मनः असन्दिग्धत्वात् निष्प्रयोजनत्वाच्च जिज्ञास्यत्वमाक्षिप्तमिदानीमुत्तरभामत्याम् नाहमर्थ आत्मेति प्रतिपाद्य संदेहप्रयोजनमुपपाद्य जिज्ञास्यत्वं समर्थितम्। तथहि—भवेदतदेवं यदि अहमित्यनुभवे आत्मतत्त्वं प्रकाशेत। नत्वेतदस्तीत्यादि सन्दर्भेण भामत्यां विस्तरेणाहमर्थस्य न श्रुति सिद्धात्मतत्त्वं विषय इति प्रतिपादितम्। तथाहि—

१. भामती-पृ.-५-८।

"समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मत्त्वं श्रुतिस्मृतीतिहास-पुराणेषु गीयते"। नचैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्; अभ्यासे हि भूयस्त्वमर्थस्य भवति; यथाहो दर्शनीयाहो दर्शनीयेति, न न्यूनत्वं, प्रागेवोपचरितत्वमिति। अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः[१]।

ननु ज्येष्ठप्रमाण प्रत्यक्षविरोधात् एकाद्वितीयात्मतत्त्वप्रतिपादकानि श्रुत्यादीन्येव उपचरितार्थनीति चेन्न श्रुतेरपौरुषेयतया निरस्तसमस्तदोषाशङ्कायाः स्वतःप्रामाणत्वात्। श्रुतेश्च तात्त्विकं प्रामाण्यं प्रत्यक्षस्य च सांव्यावहारिकमिति। न हि आगमज्ञानं प्रत्यक्षस्य सांव्यवहारिकं प्रामाण्यमुहन्ति अपि तु तात्त्विकं प्रामाण्यम्। प्रत्यक्षस्य तु सांव्यावहारिकप्रमाण्येनापि गतार्थता सम्भवतीति विरोधाभावादेव न प्रत्यक्षे श्रुतिबाधकता। अत एव नोपजीव्यविरोधोऽपि प्रत्यक्षस्य व्यावहारिकत्वमेवोपजीव्य प्रवर्तते श्रुतिः न च तद्विहन्ति। एवमर्थः भामत्यां विस्तरेण प्रतिपादितः। तथा चाहं प्रत्यये पूतिकुसुमाण्डी कृते भगवती श्रुतिरप्रत्यूहं कर्तृत्वभोक्तृत्वसुखदुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हति। तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहं प्रत्ययस्य स्वरूपनिमित्तफलैरूपव्याख्यानम्—"तथापीत्यादि भाष्यम्—तथाप्यन्योन्यस्मिन्नन्यो-न्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्या- ज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदं' 'ममेदमिति' नैसर्गिकोऽयं लोकव्यवहारः[२]।

पुतिकूष्माण्डी कृते इत्यस्य भामतीवाक्यस्य व्याख्यानम्—पूतिदुर्गन्धि कूष्माण्डफलमिव कृतस्तंथोक्तः। तत्र भामत्यां स्वरूपनिमित्तफलैरित्युक्तं, तस्य व्याख्यानम्।

---

१. भामती-पृ.-८-९।

२. भाष्य-पृ.-१५-१६।

स्वरूपम्=अन्योन्यात्मकतान्योन्यधर्माध्यासौ । निमित्तम्=इतरेतराविवेकः । फलं व्यवहारः । उपर्युक्तभाष्यं भामत्यां व्याख्यातम्—अत्र चान्योन्यस्मिन्धर्मिण्यात्मशरीरादौ अन्योन्यात्मकताम् अध्यस्याहमिदं शरीरादीति । इदमिति च वस्तुतः, न प्रतीतितः । लोकव्यवहारो लोकानां व्यवहारः, स चायमहमिति व्यपदेशः । इतिशब्दसूचितश्च शरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाणेन प्रमाय तदुपादानपरिवर्जनादिः । 'अन्योन्यधर्मांश्चाध्यस्य' अन्योन्यस्मिन्धर्मिणि देहादिधर्माञ्जन्ममरणजराव्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहादिभावे समारोप्य, तथा चैतन्यादीनात्मधर्मान्देहादावध्यस्तात्मभावे समारोप्य, ममेदं जरामरणपुत्रपशुस्वम्यादीति व्यवहारो व्यपदेशः, इति शब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः । अत्रचाध्यासव्यवहारक्रियाभ्यां यः कर्तोन्नीतः, स समान इति समानकर्तृकत्वेनाध्यस्य व्यवहार इत्युपपन्नम् । पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति—मिथ्याज्ञाननिमित्तः—व्यवहारः । मिथ्याज्ञानमध्यासस्तन्निमित्तः । तद्भावाभावानुविधानाद्व्यवहारभावाभावयोरित्यर्थः । तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह—इतरेतराविवेकेन । विवेकाग्रहेणत्यर्थः । अथाविवेक एव कस्मान्न भवति; तथा च नाध्यास, इत्यत आह—अत्यन्तविविक्तयोर्धर्मधर्मिणोः । परमार्थतो धर्मिणोरतादात्म्यं विवेको, धर्माणां चासंकीर्णता विवेकः । स्यादेतत्—विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यविभ्रमो युज्यते, शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः, इहतु परमार्थसतनिश्चदात्मनो न भिन्नं देहाद्यस्ति वस्तुसत्; तत्कुतश्चिदात्मनो भेदाग्रहः, कुतश्च तादात्म्यविभ्रम इत्यत आह—सत्यानृते मिथुनीकृत्य । विवेकाग्रहादध्यस्येति योजना । सत्यं चिदात्मा, अनृतं बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी मिथुनीकृत्य युगलीकृतयेत्यर्थः । न च संवृतिपरमार्थसतोः पारमार्थिकं मिथुनमस्तीत्य-भूतद्भावार्थस्य च्वेः प्रयोगः । एतदुक्तं भवति—अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुपयुज्यते न वस्तुसत्तेति । स्यादेतत्—आरोप्यस्य प्रतीतौ सत्यं पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति, दुर्वारं परस्पराश्रयत्वमित्यत आह—नैसर्गिक इति । स्वाभाविकोऽनादिरयं

व्यवहारः । व्यवहारानादितया तत्कारणस्याध्यासस्यानादितोक्ता, ततश्च पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्बीजाङ्कुरवन्न परस्पराश्रयत्वमित्यर्थः[१] । भाष्ये—मिथुनीकरणस्य व्यवहारहेतुत्वमानन्तर्याद्भाति, नतु मिथ्याभूतप्रतियोगिसंपादनेन विवेकाग्रहहेतुतेति शङ्कां व्युदस्यन्योजयति—सत्यानृते इति । मिथुनीकरणाद्विवेकाग्रहस्ततोऽध्यास इत्यर्थः । युगलीकरणं नामाधिष्ठानारोप्ययोः स्वरूपेण बुद्धौ भानम् । ननु मिथुनं कृत्वेति किमिति नोक्तमत आह—नच संवृतीति । 'अभूततद्भावे कृभ्वस्तियोगे संपद्यमानकर्तरि च्विः' । यस्य यो भावी न भूतः स तद्भावं चेत्संपद्यते तस्मिन्नभूततद्भावे वर्तमानात्प्रातिपदिकात्कृभ्वस्तीनां धातूनां योगे च्विप्रत्ययो भवति । 'अस्य च्वौ' इतीकारः । ततश्च मिथुनभावोऽप्यवास्तव इत्यर्थः । समारोपप्रतीत्योरितरेतराश्रयत्वे शङ्किते व्यवहारानादित्वमसांप्रतमित्याशङ्क्याह—व्यवहारानादितयेति । अनादितयेत्यत्रैके पर्यनुयुञ्जते—न मिथ्याज्ञानतत्संस्कारव्यक्त्योरनादित्वम्, तज्जात्योस्तु न निमित्तनैमित्तिकभावः; नच प्रवाहो वस्त्वस्ति—इति । तत्र ब्रूमः—'तदाकृत्युपरक्तानां व्यक्तीनामेकया विना । अनादिकालावृत्तिर्या सा कार्यानादिता मता ।' मिथ्याज्ञानत्वतत्संस्कारत्वजात्यालिङ्गितव्यक्तीनां मध्येऽन्यतमव्यक्त्या विना यदनादिकालस्याऽवर्तनमन्यतमयोगनियम इति यावत् । तासामनादित्वम् । अत्र च निमित्तनैमित्तकयोरनादित्वमुक्तम् । भ्रमोपादानं तु वक्ष्यति देवताधिकरणे[२] (ब्रह्म.अ.१पा.३सू.२४-३३)। स च तत्र भावरूपानाद्यनिर्वचनीयाविद्या उक्ता ।

---

१. भामती-पृ.-१५-१७।

२. कल्पतरू पृ.-१६-१७।

# द्वितीयोऽध्याय:

## अध्यासस्य मिथ्यात्वम्

अध्यासोऽविद्यया मिथ्याज्ञानस्वरूप: अनिर्वचनीय: इति सिद्धान्त: ।

अनिर्वचनीयत्वादेवाध्यासस्य मिथ्यात्वं सिद्ध्यति । अनिर्वचनीयत्वञ्च सत्त्वेनासत्त्वेनोभयत्त्वेन च निरूपयितुमशक्यत्वम् ।

मिथ्यात्वञ्च स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वम् । तथा च शुक्तिरजतादि मिथ्या अनिर्वचनीयत्वात् अज्ञानकार्यत्वात् दृश्यत्वात् जडत्वात् व्यतिरेकेणात्मवदित्यनुमानेन मिथ्यात्वं सिद्ध्यति । किञ्चोत्तर ज्ञानेन नेदं रजतमित्यादिना बाधादपि शुक्तिरजतादे: मिथ्यात्वं सिध्यति । सत्ये च कथं बाध: स्यात् । एवञ्चानेनैवानुमाने सर्वस्यापि प्रपञ्चताजस्य मिथ्यात्वं सिध्यति प्रपञ्चो मिथ्यादृश्यवात् शुक्तिरूप्यवदिति । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादि श्रुतिरपि प्रपञ्च मिथ्यात्वे प्रमाणम् । अद्वैतमिध्यादिग्रन्थे ब्रह्मव्यतिरिक्तानां भावानां सर्वेषां मिथ्यात्वम् प्रतिपादितम् ।

## जगन्मिथ्यात्वम्

ननु कुतो जगत् मित्या प्रमाणाभावात् सृष्टिप्रतिपादकवाक्यानां तस्माद् वा एतस्मादाकाश: सम्भूत इत्यादीनां विश्वसत्यत्वावगमात् विश्वसत्यमित्यादिश्रुतेश्च विश्वसत्यत्वावगमादिति चेत्, अत्रोच्यते—नेह नानास्ति किञ्चन अतोऽन्यदार्तम्, एकमेवाद्वितीयमित्यादिश्रुतिशतेभ्य: मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव, न मत्स्थानि भूतानि पश्यामि योगमैश्वरमित्यादि स्मृतिभ्यश्च जगन्मिथ्यात्वावगमात् । सृष्टिप्रतिपादकवाक्यानां विश्वसत्यत्वप्रतिपादकवाक्यानाञ्च व्यावहारिकसत्यत्वपरत्वात् । प्रत्यक्षावगतविश्वसत्यत्वस्य

व्यावहारिकत्वादेव न परमार्थसत्यत्वाभावलक्षणमिथ्यात्वश्रुतिविरोधः । प्रपञ्चो मिथ्या दृश्यत्वात् जडत्वाद् शुक्तिरूप्यवदित्यादि सदनुमानबाधितत्वादेव विश्वं सत्यं प्रमाणसिद्धत्वात् आत्मवदित्यादिविश्वसत्यत्व प्रतिपादकानुमानि निरस्तानि । किञ्च तेषामनुमानानामपि व्यावहारिकसत्यत्वे एव पर्यवसानं बोध्यम् । प्रपञ्चमित्यात्वञ्च अद्वैतसिद्ध्यादिग्रन्थेषु विस्तरेण प्रतिपादितम् । विस्तरभयान्नेहोपन्यस्यते ।

**त्रिविधसत्यत्वविमर्शः–**

व्यावहारिकत्वञ्च ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वम् । त्रिविधं सत्यत्वम् पारमार्थिकं व्यावहारिकं प्रातिभासिकञ्चेति । तदुक्तं संक्षेपशरीरके—

**आकाशादौ सत्यता तावदेका ।**
**प्रत्यङ्मात्रे सत्यता काचिदन्या ।**
**तत्सम्पर्कात् सत्यता तत्र चान्या ।**
**व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र[१] ।।**

त्रिकालाबाध्यत्वं परमार्थसत्यत्वम् । ब्रह्मप्रमातिरिक्तप्रमाऽबाध्यत्वं व्यावहारिकसत्यत्वम् । प्रतिभासमात्रशरीरत्वं प्रातिभासिकसत्यत्वमिति । इदं रजतमिति प्रतीतिबलात् रजतस्य प्रातिभासिकीसत्तास्वीकर्तव्या ।

सत्वमेकमेव ब्रह्मगतम् । अनुगतञ्च सर्वत्र । सद्रूपमेवानुगतं ब्रह्मप्रपञ्च दृश्यते न तु प्रपञ्चस्य व्यावहारिकस्य प्रातिभासिकस्य वा पृथक् सत्ता कल्पनीया । सति एव ब्रह्मणि सर्वप्रपञ्चस्य कल्पितत्वात् प्रतिपादितञ्चैतत् ''ना सतो विधते भावो नाभावो विधते सतः''[२] गीताभाष्ये भगवत् पादैः—इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात् नासत इति । नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता,

---

१. तत्रैव मधुसूदनी पृ. २२७ । संक्षेपशारीरके- १/१७८ ।
२. गी. २/१६ ।

नहि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तुसद्भवति, विकारो हि सः, विकारश्च व्यभिचरति, यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकार: कारणव्यतिरेकेणानुपलब्धेरसज्जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः, कार्यस्य घटादेर्मृदादिकारणस्य तत्कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न। सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति यद्विषया बुद्धिर्न व्यभिचरति तत्सत् यद्विषया व्यभिचरति सदसद् इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र। तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति, तथाच दर्शितं, न तु सद्बुद्धिस्तस्माद्घटादिबुद्धिविषयोऽसन्, व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात्। घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत् न, पटादावपि सद्बुद्धिदर्शनात्। विशेषणविषयैव सा सद्बुद्धिरतोऽपि न विनश्यति। अथ सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेन्न। पटादावदर्शनात्। सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेन्न, विशेष्याभावात् सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यात्। ननु पुनः सद्बुद्धिर्विषयाभावादेकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेन्न, सदिदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात्। तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति। तथा सतश्चात्मनोऽभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम्, एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः सत्सदेवाऽसदसदेवेति त्वनयोर्यथोक्तयोस्तत्त्व-दर्शिभिः, तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वन्द्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासत इति[१]।

---

१. भाष्य-पृ.-५४-५९।

तथा तत्रैव मधुसूदन्यां श्रीमधुसूदनसरस्वतीभिरपि ब्रह्मण: सत्त्वं प्रपञ्चस्य चासत्त्वं=मिथ्यात्वं प्रतिपादितम्—ननु भवतु पुरुषैकत्वं तथापि तस्य सत्यस्य जडद्रष्टृत्वरूप: सत्य एव संसार: । तथा च शीतोष्णादिसुखदु:खकारणे सति तद्भोगस्यावश्यकत्वात्सत्यस्य च ज्ञानाद्विनाशानुपपत्ते: कथं तितिक्षा कथं वा सोऽमृतत्वाय कल्पत इति चेत् । न कृत्स्नस्यापि द्वैतप्रपञ्चस्यात्मनि कल्पितत्वेन तज्ज्ञानाद्विनाशोपपत्ते: । शुक्तौ कल्पितस्य रजतस्य शुक्तिज्ञानेन विनाशवत् । कथं पुनरात्मानात्मनो: प्रतीत्यविशेषे आत्मवदनात्मापि सत्यो न भवेत् अनात्मवदात्मापि मिथ्या न भवेत् उभयोस्तुल्ययोगक्षेमत्वादित्याशङ्क्य विशेषमाह भगवान् । यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसत् यथा घटादि जन्मविनाशशीलं प्राक्कालेन परकालेन च परिच्छिद्यते ध्वंसप्रागभावप्रतियोगित्वात् कादाचित्कं कालपरिच्छिन्नमित्युच्यते । एवं देशपरिच्छिन्नमपि तदेव मूर्तत्वेन सर्वदेशावृत्तित्वात् । कालपरिच्छिन्नस्य देशपरिच्छेदनियमेऽपि देशपरिच्छिन्नत्वेनाभ्युपगतस्य परमाण्वादेस्तार्किकै: कालपरिच्छेदानभ्युपगमाद्देशपरिच्छेदोऽपि पृथगुक्त: । सच किंचिद्देशवृत्तिरत्यन्ताभाव: । एवं सजातीयभेदो विजातीयभेद: स्वगतभेदश्चेति त्रिविधो भेदो वस्तुपरिच्छेद: । तथा वृक्षस्य वृक्षान्तराच्छिलादे: पत्रपुष्पादेश्च भेद: । अथवा जीवेश्वरभेदो जीवजगद्भेदो जीवपरस्परभेद ईश्वरजगद्भेदो जगत्परस्परभेद इति पञ्चविधो वस्तुपरिच्छेद: । कालदेशापरिच्छिन्नस्याप्याकाशादेस्तार्किकैर्वस्तुपरिच्छेदाभ्युपगमात्पृथङ्निर्देश: । एवं सांख्यमतेऽपि योजनीयम् । एतादृशस्यासत: शीतोष्णादे: कृत्स्नस्यापि प्रपञ्चस्य भाव: सत्ता पारमार्थिकत्वं स्वान्यूनसत्ताकतादृशपरिच्छेदशून्यत्वं न विद्यते न संभवति, घटत्वाघटत्वयोरिव परिच्छिन्नत्वापरिच्छिन्नत्वयोरेकत्र विरोधात् । नहि दृश्यं किंचित्क्वचित्काले देशे वस्तुनि वा न निषिध्यते सर्वत्राननुगमात्, नवा सद्वस्तु क्वचिद्देशे काले वस्तुनि वा निषिध्यते सर्वत्रानुगमात्, तथाच सर्वत्रानुगते सद्वस्तुन्यननुगतं व्यभिचारि वस्तु कल्पितं रज्जुखण्ड इवानुगते व्यभिचारि सर्पधारादिकमिति भाव: । ननु व्यभिचारिण: कल्पितत्वे सद्वस्त्वपि कल्पितं स्यात्तस्यापि तुच्छव्यावृत्तत्वेन

व्यभिचारित्वादित्यत आह—नाभावो विद्यते सत इति । सदधिकरणकभेदप्रतियोगित्वं हि वस्तुपरिच्छिन्नत्वं, तच्च न तुच्छव्यावृत्तत्वेन । तुच्छे शशविषाणादौ सत्त्वायोगात् 'सदसद्भ्यामभावो निरूप्यते' इति न्यायात् । एकस्यैव स्वप्रकाशस्य नित्यस्य विभोः सतः सर्वानुस्यूतत्वेन सद्व्यक्तिभेदानभ्युपगमात् घटः सन्नित्यादिप्रतीतेः सार्वलौकित्वेन सतो घटाद्यधिकरणकभेदप्रतियोगित्वायोगात्, अभावः परिच्छिन्नत्वं देशतः कालतो वस्तुतो वा, सतः सर्वानुस्यूत सन्मात्रस्य न विद्यते न संभवति पूर्ववद्विरोधादित्यर्थः । ननु सन्नाम किमपि वस्तु नास्त्येव यस्य देशकालवस्तुपरिच्छेदः प्रतिषिध्यते । किं तर्हि सत्त्वं नाम परं सामान्यं यदाश्रयत्वेन द्रव्यगुणकर्मसु सद्व्यवहारः । तदेकाश्रयसंबन्धेन सामान्यविशेषसमवायेषु । तथाचासतः प्रागभावप्रतियोगिनो घटादेः सत्त्वं कारणव्यापारात् सतोऽपि तस्याभावः कारणनाशाद्भवत्येवेति कथमुक्तं 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति, एवं प्राप्ते परिहरति—उभयोरपीत्यर्धेन उभयोरपि सदसतोः सतश्चासतश्चान्तो मर्यादा नियतरूपत्वं यत्सत्तत्सदेव यदसत्तदसदेवेति । दृष्टो निश्चितः श्रुतिस्मृतियुक्तिभिर्विचारपूर्वकम् । कैः ? तत्त्वदर्शिभिर्वस्तयाथात्म्यदर्शनशीलैर्ब्रह्मविद्भिः, न तु कुतार्किकैः । अतः कुतार्किकाणां न विपर्ययानुपपत्तिः । तु शब्दोऽवधारणे । एकान्तरूपो नियम एव दृष्टो नत्वनेकान्तरूपोऽन्यथाभाव इति तत्त्वदर्शिभिरेव दृष्टो नातत्त्वदर्शिभिरिति वा । तथाच श्रुतिः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहरन्ती सदेकं सजातीयविजातीयस्वगतभेदशून्यं सत्यं दर्शयति, 'वाचारम्भणं विकारोनामधेयं कृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिस्तु विकारमात्रस्य व्यभिचारिणो वाचारम्भणत्वेनानृतत्वं दर्शयति, 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति श्रुतिः सर्वेषामपि विकाराणां सति कल्पितत्वं दर्शयति । सत्तवं च न सामान्यं तत्र मानाभावात् । पदार्थमात्रसाधारण्यात्सत्सदिति प्रतीत्या

द्रव्यगुणकर्ममात्रवृत्तिसत्त्वस्य स्वानुपपादकस्याकल्पनात् वैपरीत्यस्यापि सुवचत्वात् एकरूपप्रतीतेरेकरूपविषयनिर्वाह्यत्वेन संबन्धभेदस्य स्वरूपस्य च कल्पयितुमनुचितत्वात् विषयस्याननुगमेऽपि प्रतीत्यनुगमे जातिमात्रोच्छेदप्रसङ्गात् । तस्मादेकमेव सद्वस्तु स्वतः स्फुरणरूपं ज्ञाताज्ञातावस्थाभासकं स्वतादात्म्याध्यासेन सर्वत्र सद्व्यवहारोपपादकं सन्घट इति प्रतीत्या तावत्सद्व्यक्तिमात्राभिन्नत्वं घटे विषयीकृतम्, नतु सत्तासमवायित्वम् । अभेदप्रतीतेर्भेदघटितसंबन्धानिर्वाह्यत्वात् । एवं द्रव्यं सद्गुणः सन्नित्यादिप्रतीत्या सर्वाभिन्नत्वं सतः सिद्धम् । द्रव्यगुणभेदासिद्ध्या च न तेषु धर्मिषु सत्त्वं नाम धर्मः कल्प्यते किं तु सति धर्मिणि द्रव्याद्यभिन्नत्वं लाघवात्, तच्च वास्तवं न संभवतीत्याध्यासिकमित्यन्यत् । तदुक्तं वार्तिककारैः 'सत्तातोऽपि न भेदः स्याद्द्रव्यत्वादेः कुतोऽन्यतः । एकाकारा हि संवित्तिः सद्रव्यं सद्गुणस्तथा । इत्यादि । सत्तापि नासतो भेदिका तस्याप्रसिद्धेः । द्रव्यत्वादिकं तु सद्धर्मत्वान्न सतो भेदकमित्यर्थः । अतएव घटाद्भिन्नः पट इत्यादिप्रतीतिरपि न भेदसाधिका घटपटतद्भेदानां सदभेदेनैक्यात् । एवं यत्रैव न भेदग्रहस्तत्रैव लब्धपदा सती सदभेदप्रतीतिर्विजयते, तार्किकैः कालपदार्थस्य सर्वात्मकस्याभ्युपगमात्तेनैव सर्वव्यवहारोपपत्तौ तदतिरिक्तपदार्थकल्पने मानाभावात्तस्यैव सर्वानुस्यूतस्य सद्रूपेण स्फुरणरूपेण च सर्वतादात्म्येन प्रतीत्युपपत्तेः स्फुरणस्यापि सर्वानुस्यूतत्वेनैकत्वान्नित्यत्वं विस्तरेणाग्रिमश्लोके वक्ष्यते । तथा यथा कस्मिंश्चिद्देशे काले वाऽघटस्य पटादेर्न देशान्तरे कालान्तरे वा घटत्वं, एवं कस्मिंश्चिद्देशे काले वा घटस्यान्यत्राघटत्वं शक्रेणापि न शक्यते संपादयितुं पदार्थस्वभावभङ्गायोगात्, एवं कस्मिंश्चिद्देशे काले वा सतो देशान्तरे कालान्तरे वाऽसत्त्वं कस्मिंश्चिद्देशे काले वा सतोऽन्यत्रासत्त्वं न शक्यते संपादयितुं युक्तिसामान्यात्, उत उभयोर्नियतरूपत्वमेव द्रष्टव्यमित्यद्वैतसिद्धौ विस्तरः । अत सदेव वस्तु मायाकल्पिता-ऽसन्निवृत्त्याऽमृतत्वाय कल्पते सन्मात्रदृष्ट्या च तितिक्षाप्युपपद्यत इति भावः[1] ।

१. गीताभाष्य-मधुसूदनीव्याख्या-पृ.५३-५९ ।

ननु न व्यावहारिकसत्त्वं क्वचिदपि शाङ्करभाष्ये नोपात्तम्, केवलं व्याख्यातृभिरेव व्यावहारिकसत्यत्वं कल्पितमिति केषाञ्चित् मतम् तन्न युक्तम् तदनन्यत्वमारम्भणाधिकरणे भाष्यकारैः स्पष्टं व्यावहारिकसत्त्वस्योक्तत्वात्। तथाहि—"सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मता-विज्ञानात् सत्यत्वोपत्तेः स्वप्नव्यवहारस्येव प्राक् बोधात् यावद्धि न सत्यात्मैकत्व प्रतिपत्तिः तावत् प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृततत्वबुद्धिर्न कस्यचिदुत्पद्यते। विकारानेवत्वहं ममेत्यविधयात्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं व्रह्मात्मतां हित्वा। तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधात् उपपन्नः सर्वोलौकिकोवैदिकश्च व्यवहारः[१]।

यदि एकैव सत्ता ब्रह्मरूपा परमार्थतः तथापि उपाधिवशात् औपाधिकभेदात् त्रैविध्यमङ्गी क्रियते।

ननु प्रधानपरिणाम एव जगत् न विवर्तो न च मिथ्या। तथा च सृष्टि श्रुतयोऽपि संगता भवन्ति। न हि क्वचित् सृष्ट्यादि श्रुतौ प्रपञ्चस्य मिथ्यात्वं श्रुतम्। श्रुतञ्च सत्यत्वं मृत्तिकेत्येवसत्यं विश्वं सत्यमित्यादौ। इति चेन्न परिणामवादे प्रमाणाभावात् सृष्टिश्रुतय एव प्रमाणमिति चेन्न तत्र परिणाम शब्दाश्रवणात्। सत्यतोऽन्यथाभावः परिणामो ब्रह्मणोऽपि सत्यतः प्रपञ्चापत्तिं प्रतिपादयतीति चेत्, न; तासु सत्यशब्दाश्रवणात्। स्वतःप्रामाण्यात् तथाभूतैव सृष्टिरिति चेत्? किमिदं तथाभूतत्वं नाम? सत्यत्वमिति चेत्, न; 'मित्येदं रजतमि'ति विशिष्टेऽर्थे प्रमाणगम्ये स्वप्नसृष्टावपि सत्यबुध्यभावात्। स्वोपाधौ स्वविषाभाव-विरोधितेति चेत्, न; मायात्मकत्वेऽपि समानम्। सृष्टेश्च स्वोपाधावभावव्यावृत्तत्वान् सर्वे च सोपाधिकधर्माः स्वाश्रयोपाधावबाध्यतया सत्या भवन्ति, सृष्टिरपि स्वरूपेण न बाध्यते, किन्तु पारमार्थसत्यत्वांशेन।

ननु मिथ्यासृष्टिविषयत्वे वाक्यस्याप्रामाण्यं स्यात्, न तत्; प्रमाणव्यापारानभिज्ञो देवानां प्रियः। प्रमाणं हि प्रमेयाभावं न सहते, नाप्रमेयाभावम्। नच सृष्टिश्रुतिः परमार्थसत्यतां

१. शा.भा.-पृ.४५८।

प्रमिमीते; तदभिधानाभावात् । यथा 'घटः' इत्युक्ते भावाभावयोः साधारणोऽवभासते, अन्यतराभिधानाभावात्, तद्वत् । न हि स्वप्नविषया सृष्टिश्रुतिस्तत्सत्यतां प्रतिपादयति । प्रयोजनशून्यतया तात्पर्यहीनत्वाच्च न ब्रह्मणः प्रपञ्चापत्तिं प्रतिपादयति, अनर्थहेतुत्वाच्च दुःखतत्साधनपरिणामस्य । नच कर्मकाण्डस्य प्रत्यक्षादेर्वा सिद्धिः प्रयोजनम्; जगन्नित्यतयाप्युपपत्तेः, सृष्टिश्रुत्यवगमात्प्रागेव सिद्धत्वाच्च । अभेदस्यापि सत्त्वादिरूपेण सिद्धत्वान्न शब्दापेक्षेति चेत्, केयमतिव्याकुलता सर्वसंकरवादिनः । नहि नित्य-शुद्ध-बुद्ध-मुक्त-निरतिशयानन्द-प्रमाशमानसर्वज्ञाऽद्वितीय-प्रत्यगात्मभूतं ब्रह्मावगमात् प्रागेव सिध्यति ।

**सृष्टिप्रयोजनविमर्शः–**

किं तर्हि? सृष्टिश्रुतेः प्रयोजनम् । प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्माण्येवोत्पत्ति-विनाशवत्तयाऽन्यत्राभावमुपवर्ण्य, तत्रापि प्रतिषिध्य, मिथ्यात्वापादनेन प्रमाणान्तरा विरुद्धतयाऽद्वितीयब्रह्मस्वरूपसिद्धिः प्रयोजनम्; तेनैकवाक्यत्वात्, अन्यथा शेषिविरोधात् । सृष्ट्याभासत्वाद् रजताभासवत् तज्ज्ञानस्याप्रामाण्यमिति चेत्, न; सत्यरजतवन्मुख्य-सृष्ट्यन्तराभावात्, तस्या एव मुख्यसृष्टित्वात् तज्ज्ञानवत् प्रामाण्यात् । "देवदत्तो व्याघ्रोऽभवत्" "माया ह्येषा मया सृष्टे"त्यादौ मिथ्याकार्येऽपि तद्भावसृष्टिशब्दयोः श्रवणात् ।

कुतः पुनः सत्य-मिथ्यासाधारण्यां सृष्टौ मिथ्यात्वे पक्षपातः? 'नासदासीन्नो सदाऽसीत्तम आसीत्' "आसीदिदं तमोभूतम्" 'मायां तु प्रकृतिमि"त्यादौ सदसद्विलक्षणानिर्वचनीय-प्रकृतित्वश्रवणात् तदात्मकत्वाच्च विकारस्य 'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" । इति स्मृतेः, तमोऽविद्या मायानां पर्यायत्वात् । तदेवं श्रुत्यवगतायां मिथ्यासृष्टौ सत्यत्वकल्पनायां श्रुतिबाधप्रसङ्गात् । तथाच 'अस्ति घटः' इत्यस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेणैव बाधो दृश्यते, देश कालयोर्देशकालान्तराभावात्तयोर्द्वयोर्निरुपाधिकनिषेधात्, अस्त्यर्थस्यानुयायिनो निषेधाभावात् । अतो देश-काल-तदुपाधिघटानामस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव

बाधान्मिथ्यात्वसिद्धिः । एवं सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरूपोपाधावस्त्यर्थे कालाद्युपाधिभिः सहाभावप्रत्यक्षेण बाधान्मिथ्यैवेति सिद्धम् । अन्याभावविशिष्टवस्त्वन्तरज्ञानस्य प्रत्यक्षत्वात् ।

**अनुमानमपि**–सर्वे विकाराः, स्वानुस्यूत एकस्मिन् वस्तुनि परिकल्पिताः, प्रत्येकमेकस्वभावानुविरुद्धत्वे सति विभक्तत्वात् ; प्रतिषिध्यमानत्वात्; देहात्मभाववत् । विरोधिकारणस्वभावानुपमर्देन विरोधिकार्यापत्तिलक्षणत्वात्; मायाव्याघ्रवत् । प्रलयावस्थायां सह कालेन स्वोपाधौ शून्यत्वात्; देहात्मभाववत् ।

**अर्थापत्तिरपि**–प्रपञ्चजन्म-विनाशावनुपपन्नौ तस्य मिथ्यात्वमन्तरेण; अमिथ्याभूतयोर्ब्रह्म-शून्ययोरजन्म-विनाशित्वात् । नच ब्रह्मज्ञानस्यापि प्रपञ्चज्ञानवन्मिथ्यात्वानुमानम्; "तत्सत्यं स आत्मे'ति वचनविरोधात् । नचास्थूलादिवाक्यैः स्थूलादिभ्योऽन्यत्वमात्रमुच्यते; कार्य-कारणतादात्म्ये सत्येवंप्रतिषेधानुपपत्तेः । यथा शुक्लायां गव्यन्यत्वविवक्षयाप्यशुक्ला गौरिति प्रतिषेधो न दृश्यते; तथा च प्रतिषेधे शुक्लतास्वरूपमात्रनिषेधदर्शनात् । तर्काप्रतिष्ठानान्न मिथ्यात्वानुमानमिति चेत्, न; विचारशास्त्रानारम्भप्रसङ्गात् । शब्दमूलत्वाद् ब्रह्मणि न विरोधबुद्धिरिति चेत्, तर्हि— "असद्वा इदमग्र आसीत्" "सदेव सौम्येदमग्र आसीदि'त्यादि श्रुतिद्वयसामर्थ्यात् कारणस्य सदसत्त्वे स्याताम् । श्रुत्यर्थस्य तर्कागोचरत्वात् सर्वशक्तित्वाद् ब्रह्मणः सर्वमुपपन्नमिति चेत्, न; ब्रह्मणि विरोधपरिहाराय विचारानारम्भप्रसङ्गात् । अत एवासत्यतापि ब्रह्मणः कदाचित् किं न स्यात् । तस्मात्प्रत्यक्षानुमानार्थापत्तिभिः प्रपञ्चस्य मिथ्यात्वावगमात् प्रशान्तत्वाच्च ब्रह्मणो निष्प्रयोजना न सृष्टिश्रुतिर्विवर्त एवेति । नच सद्बुध्यनुगमविरोधः; अधिष्ठानत्वात्तस्य । घटादिविशेषाणामेव मिथ्यात्वादिति सिद्धम् ।

## अनिर्वचनीयत्वस्वरूपम्

**प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।**
**गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः ।।**

सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्वेन च यद् विचारं न सहते, तदनिर्वाच्यमित्यादिना प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमनिर्वाच्यत्वमिति अनिर्वचनीयताया लक्षणं कृतम्, ज्ञानबाध्यत्वं वाऽनिर्वाच्यत्वमिति वा ।

इदानीं ख्यातत्वे सति बाध्यत्वान्यथानुपपतितरूपामर्थापत्तिं प्रमाणत्वेन उपन्यस्यानुमानमुपस्थापयति—विमतमनिर्वचनीयं बाध्यत्वात्, यन्नैवम्, तन्नैवम्, यथात्मेति । अस्मिन्ननुमाने साध्याप्रसिद्धिः । नहि क्वचित् सत्त्वस्यासत्त्वस्य चैकत्राभावः प्रसिद्ध इति । तत्र साध्यप्रसिद्धावनुमानम्—विवादाध्यासिते सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात्, रूपरसवदिति । अनेन सामान्यतोऽनिर्धारितधर्मिणि साध्यप्रसिद्धिः । अत्र विभिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमादायार्थान्तरता स्यात्, अत एक धर्मीति । ननु प्रमेयत्वादेः केवलान्वयित्वात् तत्र धर्मत्वस्य सत्त्वात् साध्यस्य च एकधर्मिनिष्ठात्यन्ताभाव-प्रतियोगित्वस्याभावाद् व्यभिचारः स्यादिति चेत्, न, वेदान्तमते प्रमेयत्वादेर्ब्रह्मण्यसत्त्वात् केवलान्वयित्वाभावात् । तथा चानुमानम्—प्रमेयत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात्, रूपादिवदिति । अत आत्मनिष्ठात्यन्ताभावप्रतियोगित्वं प्रमेयत्वस्यापीति ।

किञ्च प्रमेयत्वं प्रमयेत्व एव नास्ति, सत्वे च आत्माश्रयः स्यादिति मिथ्यात्वे मिथ्यात्वं तु दृश्यत्वादिना बोध्यम् । एवञ्च प्रमेयत्वादौ न व्यभिचारः ।

ननु सदसत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी न धर्मत्वादिति विपरीतमेवानुमानं कथं नेति चेत्, न, रूपादौ व्यभिचाराद् धर्मत्वस्य सत्वात् तादृशप्रतियोगित्वाभावरूपसाध्यस्य चासत्वादिति ।

ननु चात्र विवादाध्यासिते सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनो न परस्पराभावरूपत्वाद् नित्यत्वानित्यत्ववदिति सत्प्रतिपक्ष इति चेत्, न, संयोगतदभावयोः परस्पराभावरूपत्वाद् व्यभिचारात् । एकस्मिन् वृक्षे धर्मिणि संयोगस्य तदभावस्य च परस्परविरहरूपस्य स्वीकारात् ।

प्रकृतानुमाने अत एव न परस्पराभावरूपत्वाभाव उपाधिः। यत्र परस्पराभावरूपत्वम्, तत्रैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इति उपाध्यभावसाध्याभावयोः सम्बन्धस्याव्यभिचरितत्वाभावात्। किञ्च सत्त्वासत्त्वं न परस्परविरहरूपमिति अद्वैतसिद्धौ प्रथममिथ्यात्वे साधितम्। तथाहि—तत्र प्रपञ्चो मिथ्यादृश्यत्वादित्यादौ किमिदं मिथ्यात्वं साध्यत इति जिज्ञासायां मिथ्याशब्दोऽनिर्वचनीयतावचन इति पञ्चपादिकावचनात् सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वम्। तच्च सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयम्। न च व्याहतिः। 'सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा परस्परविरहव्यापकतया वा परस्परविरहव्याप्यतया वा। तत्र नाद्यः, तदनङ्गीकारात्। तथा ह्यत्र त्रिकालाबाध्यरूपसत्त्वव्यतिरेको नाऽसत्त्वम्; किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्। तद् व्यतिरेकश्च साध्यत्वेन विवक्षितः। तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्। एवञ्च सति न शुक्तिरूप्ये साध्यवैयकल्यमपि, बाध्यत्वरूपासत्वव्यतिरेकस्य साध्याप्रवेशात्। नापि व्याघातः, परस्परविरहरूपत्वाभावात्। अत एव न द्वितीयोऽपि सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन व्यभिचारात्। नापि तृतीयः, तस्य व्याघाताप्रयोजकत्वात्। गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोरुष्ट्रादावेकत्र सहोपलम्भात्।

एवञ्च सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावाद् उक्तसत्प्रतिपक्षस्योपाधेश्च नावकाशः। साधनव्यापकत्वाच्च नोपाधिः।

एवमेव साध्याप्रसिद्धौ सत्त्वसत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वात्, रूपादिवदिति तु प्रयोगशरीरम्, इत्यपि अनुमानं द्रष्टव्यम्। तत्र असत्त्वं वा सत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वादित्यपि। अत्रापि सत्त्वं असत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगि न तत्प्रतिषेधरूपत्वादित्यादिसत्प्रतिपक्ष इति चेत्, न, सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावात्।

न च ब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनानिर्वाच्यत्वाभावोपपत्या अर्थान्तरम्,

सत्वरहितस्य प्रपञ्चस्य सद्रूपत्वे मानाभावेन बाधाद् ब्रह्मणि च शून्यतापत्तिरेव सद्रूपत्वे प्रमाणम् ।

न च असदभावस्य प्रपञ्चे सिद्धत्वाद् अंशतः सिद्धसाधनमिति वाच्यम्, गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्, यन्नैवम्, तन्नैवम्, यथा घट इति मीमांसकप्रयुक्ते अनुमाने भेदवादिना तार्किकेण गुणगुणिनोः भेदस्य सिद्धत्वात् अंशतः सिद्धसाधनदोषो न दीयते । तत्र मिलितसिद्धेरुद्देश्यत्वात्, तथैव प्रकृतेऽपि मिलितसिद्धिरुद्देश्या ।

एवञ्च सत्त्वसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अनात्मनिष्ठात्यन्ताभाव-प्रतियोगित्वाद् रूपादिवदित्यपि अनुमानम् । नयनप्रसिदिन्यां त्वेतदनुमानमसमीचीनमिवेत्युक्तम् । तत्र इव पदेन न कश्चिद् अत्र दोषः, अपि तु मूलानुमानस्य रूपान्तरकरणमयुक्तमिति तस्याभिप्रायः । तत्र आत्मनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरतानिवृत्त्यर्थमनात्मनिष्ठेत्युक्तम् ।

एवमेव प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्वं सत्त्वासत्त्वोभयवृत्ति प्रपञ्चनिष्ठव्यतिरेकप्रतियोगि-मात्रवृत्तित्वाद् व्यवहार्यत्वदिति । सदसदुभयवृत्तित्वं प्रपञ्चानिष्ठव्यतिरेकप्रतियोगित्ववृत्ति सत्त्वासत्त्वोभयवृत्त्यशेषवृत्तित्वाद् भेदप्रतियोगित्ववद् इत्यादिना अद्वैतसिद्धौ उक्तानुमानेनापि साध्यप्रसिद्धिर्बोध्या ।

## ख्यातिविमर्शः

ख्यातिपञ्चविधेत्युक्तम्—

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।**
**तथानिर्वचनख्यातिरत्येतत्ख्यातिपञ्चकम् ।**
**योगाचारोमाध्यमिकस्तथा मीमांसकोऽपि च ।**
**नैयायिकोऽद्वैतिनश्च ख्यातीरेताः क्रमाजजगुः ।**

आत्मख्यातिरसत्ख्यातेरख्यातेरन्यथाख्यातेश्च । चतुर्णां मतानामध्यासलक्षणेनैव खण्डनं भवति पञ्चमी ख्यातिरनिर्वचनीया सिद्धान्तरूपेणाङ्गीकृता भाष्यभामत्यादिषु । भाष्ये

तं केचिदित्यनेन त्रीणि मतानि प्रदर्शितानि । तेषां व्याख्यानं भामत्यां कृतं विधत्ते । तं केचित् अन्यत्रान्यधर्माध्यास इति वदन्ति । तमध्यासं केचित् आत्मख्यातिवादिनोयोगाचारा: अन्यधर्मस्य ज्ञानधर्मस्य रजतस्य ज्ञानाकारस्य अन्यत्र वाह्ये अध्यास: इति वदन्ति । विज्ञानवादिन: विज्ञानमेवं साकारं सत् वाह्यं वस्तु असत् विज्ञानविषययो: सहोपलम्भनियमादिति वदन्ति । एवञ्च दोषादिवशात् ज्ञानाकारस्य रजतस्यैव पुरोवर्त्तित्वेनावभास: एवञ्च सदेव विज्ञानस्थं रजतं वाह्ये भासते । सौत्रान्तिक वैभाषिक मतोरपि वाह्यं वस्तु प्रत्यक्षमनुमेयं वाऽस्ति तत्र विज्ञानाकारस्य रजतस्यारोप: । विज्ञानवादिनये यद्यपि वाह्यं वस्तु नास्ति सत् तथापि अनाद्यविद्यावासनारोपितमलीकं वाह्यमस्ति तत्र विज्ञानाकारस्य रजतस्यारोप: एवं सौत्रान्तिकवैभाषिकयोगाचाराणां त्रयाणां बौद्धानामतमत्र प्रदर्शितम् ।

केचित् व्याख्याकारास्तु तं केचिदित्यादि भाष्येणान्यथाख्यातिमाहु: । भामत्यां विज्ञानवाद एव व्याख्याप्रस्तुता ।

पुन: एतं विज्ञानवादमुपपाद्य यत्र यदध्यास: तद्विवेकाग्रह: निबन्धनो भ्रम इति मीमांसकमतसिद्धारख्यातिवादेन निरस्य तन्मतञ्च सम्यगुपपाद्य तृतीयेन वाक्येन यत्र यदध्यासस्तस्यैव विपरीतधर्मकल्पनामाचक्षतत्यनेनान्यथाख्यातिप्रतिपादकेन निरस्यते । अन्यथाख्याति वादश्च पूर्वमेवानिर्वचनख्यातिप्रतिपादनावसरे भामत्यां निरस्त: । एवञ्चानिर्वचनत्वपक्ष एव भामतीसंमत: नान्यथाख्यातिवाद: । अत्र विस्तरभयात् सकलानां ख्यातीनामुपस्थानं तत् खण्डनञ्च नोपस्थाप्यते । भामत्याम् उपपादनखण्डनेया: स्पष्ट कृतत्वाच्च ।

भाष्ये सिद्धान्तलक्षणेनैव लक्षणपदसमन्वयबलाद् पञ्चापि ख्यातयो निरस्ता । विशेषमतप्रदर्शनञ्च ख्यातेरनिर्वचनीयत्वसिद्धये । सर्वत्र च ख्यातिमते अन्यस्य अन्यधर्मावभासस्य प्रदर्शनार्थञ्च ।

अयमध्यास अविद्यापदेनोच्यते । तमेतमध्यासमविद्येति पण्डिता मन्यन्ते इति भाष्यवचनात् ।

**असत्ख्यातिखण्डनम्–**

शून्यवादिनः खल्वेवं विवेचयन्ति शून्ये एव सम्बृतिबलाद्रजतादिविभ्रमोऽन्यान्यपि सर्वाणि घटपटादिज्ञानानि भ्रमरूपाण्येव यतो विचार्यमाणाः घटपटादयो न सत्त्वेन व्यवतिष्ठन्ते, 'तत्र तदुक्तयुक्तयः पूर्वप्रदर्शिताः, आत्माप्यसन्ने, वत्शून्य एव, अविद्यया हि शून्ये एवात्मत्वविभ्रमो भवति, यथाच वेदान्तिनः स्वप्नावस्थामधिकृत्य जगतोमिथ्यात्वं व्यवस्थापयन्ति तथा सुषुप्त्यवस्थामधिकृत्य जगतः शून्यत्वमेव सम्पद्यते, सुषुप्त्यवस्थायां हि आत्मनोऽसत्त्वाच्छून्यत्वं तस्मिन्नेव शून्ये आत्मनि अविद्यया जाग्रदाद्यवस्थाय प्रपञ्चविभ्रमो जायते, दृश्यते च शून्ये एवाकाशे नेत्रे उपमृद्यालोचिते नीलपीतादिकं रेखोपरेखादिकं च, एवञ्च बीजादिनाशे एव चाङ्कुरादिकं जन्यतेऽतोऽसदेव कारणमास्थेयम् कारणस्यासत्त्वे च कार्यस्य सत्त्वासम्भवस्तस्मादखिलमेव विश्वमसत् शून्योपादानकत्वाच्च शून्यं सिध्यति ।

नचात्मनोऽप्यसत्त्वे कथं निरधिष्ठानको भ्रमः स्यादिति वाच्यम् शून्ये एव हि नभसि नीलिमादिभ्रमस्य गन्धर्वनगरादिभ्रमस्य चान्यैरपि वादिभिर्निरधिष्ठानकस्यैवानीयस्याऽभ्युपेयत्वात्, नच शून्यत्वाभावनया जायमानस्य प्रपञ्चबाधस्य निरवधित्वासंभवाद्बाधावधिरात्माऽभ्युपेयः रजतादिविभ्रमोत्तरं जायमाने बाधनिश्चये शुक्त्यादेरवधेः सत्त्वादिति वाच्यम् नासौ सर्प इत्याप्तवाक्यजन्येन ज्ञानेन बाधकेन जनिते बाधे निरवधित्वदर्शनादिति ।

तदेतन्न विचारपदवीमधिरोहति तथा हि यद्यविद्यायाः कश्चिद्विषयो नापेयेत तदा निर्विषयिकास्तस्य निःस्वरूपत्वमेव, अविद्या हि सनिरूपकः सविषयकः, पदार्थः ईश्वरं न जानामीत्याद्यनुभवात् निःस्वरूपा च सा कथं जगन्मण्डलं रजयेत्, यदिचात्मा तस्या विषय उपगम्येत तदा तद्विषयतया सिद्ध एवायमात्मेति कुतो नैरात्म्यवादः शून्यवादापरनामा सिध्यतीति, आकाशस्य च नासत्त्वमसतः शब्दाश्रयत्वानुपपत्तेरतः सन्नेवाकाशो गृहाद्याकारतामापन्नस्य मेघस्य गन्धर्वनगरपदव्यपदिश्यमानस्याश्रयोऽतो न नभोभवति दृष्टान्तो भवतः । एवं बीजस्य विनाशेनैवाङ्कुरोत्पत्तिरित्यपि न, तत्राऽप्यङ्कुरोत्पादकस्य

बीजावयवस्याङ्कुरेऽनुवर्त्तमानस्य विद्यमानत्वात् योहि तदंशोऽङ्कुरे नानुवर्तते तस्यैव विनाशः स च न कामपि क्षतिमासादयति, सर्वयैव विनाशे तु नाङ्कुरमुत्पादयति, प्रदर्शितचैतद्भगवता भाष्यकृतां तर्कपादे छान्दोग्योपनिषदः षष्ठाध्यायभाष्ये च । एवं सुषुप्त्यवस्थायामसत एवात्मनः सकाशाज्जाग्रदवस्थाकालिकाः पदार्थाः जायन्ते इत्यपि न, सुषुप्त्यवस्थायामपि स्वयम्प्रकाशस्याविद्योपाधिकस्यात्मनो विद्यमानत्वात् कथं वां पूर्वदिनारब्धकार्यमपूर्णं पूर्णं कर्तुं तूर्णमेव प्रयतेत, तस्मादविद्याया एवायं महिमा न भवतोदोषः । किं चेदमसत्त्वम्भवताऽऽपाद्यमानं प्रमाणसिद्धमसिद्धस्वभावं वा स्वतःसिद्धं वाऽऽद्येऽसत्त्वस्याभावरूपस्य सत्प्रतियोगिकतया तद्ग्राहकप्रमाणस्य सप्रतियोगिविषयकत्वनियमेनात्मनोऽसत्त्वानुपपत्तिः, न द्वितीयः असिद्धस्यापादकाप्रसिद्धवांऽऽपत्तिरशक्यैव, तृतीये तु आत्मन एव स्वतःसिद्धत्वमस्तु किमत्त्वस्य स्वतःसिद्धत्वेन, आत्मन एव वा नामान्तरकरणे भवति पर्यवसानम् यदेव हि स्वतः सिद्धं तदेवात्मा । किंचेदमात्मानोऽसत्त्वमात्मना ज्ञायतेऽनात्मना वा नान्त्यः अनात्मनो ज्ञातृत्वाभावात्, नाद्यः व्याघातात् आत्मा हि स्वसत्ताकाले स्वासत्त्वं जानाति स्वासत्ताकाले वा आद्ये स्वसत्ताकाले स्वासत्तां कथं जानीयात् विषयस्यैव स्वासत्तारूपस्याभावात्, द्वितीये कथं जानीयात् स्वस्यैवाभावात् स्वसत्ताकाले आत्मैव कालान्तर भाविनीं स्वासत्तां जानातीतिचेत् एवमपि आत्मनः सत्त्वमधिगतमेव केवलं विनाशित्वमवशिष्टं तत्र कृतहान्याद्योदोषाः, प्रसज्यन्त एवेति न शून्यवादिमतं सिध्यति ।

इदमपि विचारमर्हति आत्मनोऽसत्त्ववादी स्वात्मानं निराकरोति परात्मानं वा आद्ये निराकर्त्ता स्वयं विद्यमान एवात्मानं निराकुर्यात् तथाच व्याघातः पर्यवस्यति, द्वितीये निराकर्ता स्वयंपरमार्थः एव स्थित इति कथं तस्यात्मनोऽसत्त्वम् । तदेतदाह श्रुतिः आसन्नेव स भवति असद्ब्रह्मेति चेद्वेद अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः, इति ।

आत्मनोऽसत्त्वे च सर्वो लोको नाहमस्मीति प्रतीयात्, एवमहं देहः अहं देहो नवेत्यादिप्रत्यया अपि आत्मनः सत्त्वं साध्यन्ति, एतेषां देहादिरूपे प्रकारांशे भ्रमत्वेऽपि

धर्म्यंशे आत्मांशे भ्रान्तत्वात् । सर्वमेव हि ज्ञानं धर्म्यंशेऽभ्रान्तं भवति तदुक्तं धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः, इति तस्माद्देहादिरूपताया बाध्यमानत्वेऽपि आत्मनो धर्मिणोऽबाधनान्न शून्यत्वम् अतएवोक्तं वार्तिककृद्भिः ।

**प्रमाणमप्राणं च प्रमाऽऽभासस्तथैव च ।**

**कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ।।इति ।**

अत्र प्रमाणं लौकिकं प्रमात्मकं ज्ञानम् अहं स्थूल इत्यादिः अप्रमाणम् स्थूलस्य पुंसो नाहं स्थूल इत्यादि लौकिकं भ्रमात्मकं ज्ञानम् प्रमाऽऽभास; संशयः अहं स्थलोनवेत्यादिः, एते च प्रत्ययाः धर्मांशे भ्रान्त्या अप्यात्मनि धर्मिणि प्रमैवेति तदाशयः । एवं न निरबधिर्बाधः नासौ सर्पं इत्युदाहृताप्तवाक्यस्याऽपि किन्तु रज्जुरित्येतत्पर्यवसायितया सावधिकत्वात् तस्मान्न निरधिष्ठानको भ्रमः नवा निरवधिश्च कश्चिद्बाधीऽतो न शून्यं जगदुपादानं किन्तु सद्ब्रह्मैवेति सिद्धम् । सदुपादानकत्वे एव सन्पटः सन्घट इत्यादयः प्रत्यया अप्युपपद्यन्तेतमाम् शून्योपादानकत्वे तु शून्यः पट इत्यादय एव प्रत्ययाः समुत्पद्येरन् यदि च सदिति प्रतीयमानं शून्यमेवेत्युच्यते तदा नाममात्रे विवादः, तस्मात्केवलेनागमनिरपेक्षेण तर्केण न शक्यते आत्मनः स्वरूपं निर्णेतुं तदुक्तं नैष्कर्म्यसिद्धौ

**अनादृत्य श्रुतिं मोहादनुमानैकचक्षुषः ।**

**आपेदिरे निरात्मत्वं हता बौद्धास्तपस्विनः ।।**

वक्ष्यत्याचार्यः तर्काप्रतिष्ठानादिति सूत्रभामत्याम्—

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।**

**अभियुक्ततरैरन्यैरन्यथैवापपाद्यते ।इति ।**

**तस्मान्न शून्यवादः श्रेयोऽर्थिभिरादर्त्तव्य इति ।।**

**अन्यथाख्याति निरासः–**

रजतं साक्षात्करोमीति प्रत्ययः सच न देशान्तरस्थरजतभानोपगमेनोपपादयितुं

शक्योदेशान्तरस्थेन रजतादिना चक्षुरादेरसन्निकर्षात् विशेष्यविशेषणोभयसन्निकर्षस्य विशिष्टप्रत्यक्षं प्रति हेतुत्वात्, नच तत्प्रकारकजन्यप्रमात्मकसाक्षात्कारं प्रत्येव विशेषणेन सन्निकर्षो हेतुः तत्प्रकारकभ्रमात्मकसाक्षात्कारं प्रति तु दोषविशेषो हेतुः उक्तस्थले च दोषस्य चाकचिक्यादेः सत्त्वेन भवति तस्य साक्षात्काररूपता, साक्षात्कारित्वव्यञ्जकविषयतां प्रति च लौकिकसन्निकर्षस्यैव दोषस्यापि प्रयोजकतया दोषप्रयोज्यायास्तादृशविषयतायाः सत्त्वेनापपद्यत एव रजतं साक्षात्करोमीत्याद्यनुभव इति वाच्यम् लाघवेन तद्विषयकचाक्षुषं प्रति तेन सह चक्षुः संनिकर्षस्य हेतुत्वरत्, उक्तस्थले देशान्तरस्थरजतस्यासन्निकृष्टस्य प्रत्यक्षसंभवात् दोषस्य च भ्रमात्मकानुमित्यादिकं प्रत्यपि जनकत्वेन तस्योपदर्शितविषयता-प्रयोजकत्वासंभवात् अन्यथा भ्रमानुमिथ्यादावपि साक्षात्कारत्वप्रसङ्गात्, नच दोषविशेषस्यैव साक्षात्कारित्वव्यञ्जकविषयताप्रयोजकत्वमतो न काचिदुपपत्तिरिति वाच्यम्, दोषत्वसयानुगतान-तिप्रसक्तस्य दुर्वचत्वेन दोषविशेषत्वस्य सुतरां दुर्वचत्वात्, नच सन्निकर्षभिन्नसाक्षात्कारित्व-व्यञ्जकविषयताप्रयोजकत्वमेव दोषविशेषत्वमिति वाच्यम् उक्तविषयतायाः प्रयोजकस्यैव पृच्छषमानत्वेनात्माश्रयात्, सिद्धान्ते तु रजतादेः प्रत्यक्षत्वेऽपि तस्य चाक्षुषत्वानभ्युपगमात् रजताकारवृत्तेश्चक्षुरजन्यत्वस्य वक्ष्यमाणतया तद्द्वारकचाक्षुषत्वस्य तत्प्रत्यक्षे विरहेण न भवति चाक्षुषे चक्षुः संयोगस्य व्यभिचारः भवता तु रजताद्यंशेऽपि चाक्षुषत्वस्यैवाभ्युपगतत्वेन भवन्मते सन्निकर्षं विना तदुत्पत्तेरसंभव एव, नच सिद्धान्ते चक्षुषा रजतं पश्यामीतिकथम-नुभवोपपत्तिरिति वाच्यम् इदमाकारायाश्चाक्षुषवृत्तेस्तादात्म्यस्य रजताकाराविद्यावृततावविद्यायो-त्पत्तिस्वीकारेणोपपादनादिति ।

ननु सन्निकर्षस्य लौकिकालौकिभेदेन द्वैविध्यात् लौकिकस्य सन्निकर्षस्य विरहेऽप्यलौकिकस्य तस्य ज्ञानलक्षणस्य रजतादिना सत्त्वेन रजतादेश्चाक्षुषत्वमेव कुतो नोपयते इति चेन्न योगजातिरिक्तेऽलौकिकसंन्निकर्षे मानाभावात्, नच तदसत्त्वे सुरभिचन्दनमित्यादौ सौरभभानं कथं स्यादिति वाच्यम्, उदबुद्धसंस्कारेण तद्भानात्, नचैवं तज्ज्ञानस्य सौरभांशे

सति ज्ञातैकसत्त्वं वा दृष्टिसृष्टिः, दोषप्रयुक्तत्वनिबन्धज्ञातैकसत्त्वं वा । तेन च सुखादौ सिद्धसाधनम्, सुखादेर्ज्ञातैकसत्त्वस्य परैरुपेतत्त्वेऽपि तस्य दोषप्रयुक्तत्वानङ्गीकारात् । अस्मिंस्तु पक्षे ज्ञातैकसत्त्वं प्रति दोषतथाऽप्यविद्याया: कारणत्वेन ततो वैलक्षण्यात् । प्रथमलक्षणे व्याप्यत्वव्यापकत्वयोरवच्छेदक: संबन्ध: कालिकोबोध्य: । पूर्वं प्रतिपादितप्रतिकर्मव्यवस्थाया: सृष्टिदृष्टिपक्षांभिप्रायकतया दृष्टिसृष्टिपक्षे च प्रतिपरुषं संसारभेदस्याभ्युपगततया भवति घटपंटादेर्द्रष्ट्रन्तरावेद्यत्वम् ।

अथ 'सोऽयं घट' इति प्रत्यभिज्ञा पूर्वापरदर्शनगोचरस्य घटस्यैकत्वे प्रमाणीभवन्ती मध्ये दर्शनाभावेऽपि घटस्य स्थितिं साधयति । एवमेव पटादिप्रत्यभिज्ञाऽपीत्यनुपपन्नोऽयं दृष्टिसृष्टिवाद इति चेन्मैवम्, घटादे: प्रत्यक्षकाल एव सृष्टिमुपगच्छद्भि: सूक्ष्मदर्शिभिर्दृष्टिसृष्टि-वादिभि: प्रतयभिज्ञाकाले पूर्वदृष्टघटादिना सहैतस्मिन् प्रत्यभिज्ञाविषयीभूते घट ऐक्यस्योतपत्ति-स्वीकारेणानुपपत्तिविरहात् । किञ्च प्रत्यभिज्ञा न पूर्वदृष्टपदार्थेनैक्यं साधयितुं क्षमते, तथा हि यत्र यं घटादिकं साक्षात्कृत्य य: कश्चिन्निमीलिताक्षोऽवस्थित: तदा केनचित्तं घटमपनीय तत्स्थाने तत्सदृशं घटान्तरमवस्थापितमनन्तरमुन्मीलिताक्षस्य तस्य भवति प्रत्यभिज्ञा 'सोऽयं घट' इति । नचैतया भ्रमरूपया प्रत्यभिज्ञया तयोर्घटयोर्भवत्यैवद्यम्, एवमस्यापि प्रत्यभिज्ञा नैकत्वं साधयितुमुत्सहतेऽपि तु तत्समकालं पूर्वापरपदार्थयोरैक्यमविद्ययोत्पद्यमानं गोचरयतीत्यकामेनापि प्रतिवादिनोमेयमिति न प्रत्यभिज्ञानुरोधाद्वस्तुन: स्थैर्यं सिध्यतीति ।

ननु यत्रास्ति बाधकं तत्रास्तु प्रत्यभिज्ञाया भ्रमत्वेनैक्यासाधकत्वं सर्वत्र तु न तस्या भ्रमत्वमतोऽन्येषां स्थिरत्वे न बाधकमिति चेन्न, 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतिभिर्मिथ्या-त्वानुमानैश्च प्रपञ्चस्य मिथ्यात्वे निश्चिते रज्जुसर्पादिवत्प्रतिभासमात्रशरीरत्वस्यैव प्रतिभासकालातिरिक्तकालसत्त्वे बाधकस्य सत्त्वान्न प्रतिभासकालभिन्नकाले घटपटादीनां वर्त्तमानत्वम् ।

अथ कुलालेन निर्मितो मयाक्रीतो दृष्टश्च चैत्रेण यो दृष्टो मयाऽपि स एवेत्यादिप्रत्यय:

स्थैर्यसाधको न दृष्टिसृष्टिवादे कथञ्चिदुपपत्तुमर्हतीति चेन्न, उक्तप्रतीतेर्भ्रमत्वेन स्थैर्यासाधकत्वात्, यथा हि मन्दालोके युपदनैकपुरुषाणां रज्जौ सर्पभ्रमेण पलायमानानां य एव सर्पस्त्वया दृष्टः स एव मयाऽपीति परस्परं संवादेऽपि तत्तत्पुरुषीयभ्रमविषयः सर्पः प्रातिभासिकत्वेन व्यवस्थितो नैको भवति प्रतीतेः प्रातिभासिकस्य च प्रतिपुरुषं भिन्नत्वात्, भवति च तत्रैकत्वप्रत्ययो भ्रमरूप एव, तथा प्रकृतेऽपि समानः, चैत्रदृष्टमैदृष्टयोरभदोऽपि हि तदानीमवियोत्पद्यमानो गृह्यत इति न काचिदनुपपत्तिः, इत्थं चैतत्पक्षे प्रतिपुरुषं संसारभेद एव भवतीति व्यवतिष्ठते । अत एव चैतस्य दृष्टिसृष्टिवादस्याचार्यं वाचस्पतिमिश्र-मतानुवर्त्तित्वमाचक्षते, तन्मते हि प्रतिपुरुषमज्ञानभेदेन संसारभेदः शक्यते समर्थयितुम् । एकाज्ञानैकजीववादे तु न प्रतिपुरुषं संसारभेदः शक्यते वर्णयितुं येन तन्मतानुवर्त्तित्वमपि भवेत् ।

# तृतीयोऽध्यायः

## अथशब्दार्थविचारः

एवं अथातो ब्रह्मजिज्ञासेत्यादि शास्त्रारम्भः कर्त्तव्य इति निर्णये जाते अथशब्दार्थः क इति भवति जिज्ञासा ।

तत्राथशब्द आनन्तर्यार्थः । नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वात् । मङ्गलस्य च वाक्यार्थे समन्वयाभावात् । अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गल प्रयोजनो भवति । पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् इत्यादि (भाष्यम् पृ.४७)

अथातो ब्रह्मजिज्ञासेति सूत्रघटकीभूत प्रथमतयोपात्तमथशब्दार्थं निर्धारयितुं प्रवृत्तो भाष्यकाराः ।

पदच्छेदः पदार्थोक्ति र्विग्रहो वाक्ययोजना आक्षेपस्तत् समाधानं व्याख्यानं पञ्चलक्षणम् । इति व्याख्यानलक्षणम् । तदनुसृत्यैव भाष्यकाराः बादरायणसूत्राणि व्याचिख्याषितानि व्याख्यातुं प्रवृत्तः । तथाहि—तत्राथशब्द आनन्तर्यार्थो गृह्यत इति पदच्छेदपूर्वकं पदार्थोक्तिं करोति । तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्येति वाक्ययोजनाम् करोति । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति विग्रहं, तत् पुनब्रह्म प्रसिद्धमप्रसिद्धं वेत्यादिना आक्षेप पुरःसरं समाधानञ्च करोतीति सम्यक् व्याख्यानलक्षणमत्र घटते एवं सूत्रान्तरव्याख्यानेऽपि एतत् समञ्जसम् ।

तत्र पदार्थोक्तिविधौ प्रथमतया बुद्ध्युपारूढं अथ शब्दमेवोपादाय विवृणोति ।

अथ शब्दस्य लोके चत्वारोऽर्थाः प्रसिद्धाः, आनन्तर्यम्, अधिकारः, मङ्गलम्, प्रकृतादर्थात् अर्थान्तरत्वञ्च ।

उक्तञ्च—अभिधत्तेऽथ शब्दो हि चतुरोऽर्थान् प्रयोगतः । आनन्तर्यञ्चाधिकारं पूर्वपिक्षञ्च मङ्गलम् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' कोशाद् अनेकेऽर्थाः प्रसिद्धाः ।

तद्यथा—आनन्तर्ये लोके—अथानुमानं निरूप्यते अथ शब्दो निरूप्यते इत्यादि । वेदेऽपि—हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथवक्षसः इति । अधिकारे यथालोके अथ शब्दानुशासनम् अथ योगानुशासनम् । वेदे—अथैष ज्योति रथैष विश्वज्योतिरथैष सर्वज्योतिरिति । एवं मङ्गलेऽपि मङ्गले तावत् अथ शब्दः सर्वत्रैवास्ति अर्थान्तरप्रयुक्तस्यैव तस्य मङ्गलार्थत्वात् ।

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ । इति स्मृतेः, ओंकारस्याथशब्दस्य च माङ्गलिकत्वं ज्ञायते ।

पूर्वप्रकृतापेक्षार्थान्तरेऽपि दृश्यते यथात्रैव सौत्रमथशब्दं विषयीकृत्य "किमयमथशब्दः आनन्तर्यार्थः अथाधिकारार्थः इति विचारणायाम् । तत्र द्वितीयोऽथ शब्दः पूर्वप्रकृतापेक्षः । ननु आनन्तर्ये पूर्वप्रकृतापेक्षे च को भेदः । पूर्वापेक्षाया उभयत्र समानत्वात् इति चेन्न आनन्तर्यं स्वकारणत्वेन पूर्ववृत्तमपेक्षते । पूर्वप्रकृतापेक्षत्वञ्च पूर्वं प्रकृतमेव किञ्चित् अपेक्षते कारणं वा अकारणं वेति । प्रथमकोटिमपेक्ष्य प्रवर्तमानत्वात् । आनन्तर्यस्य च कोटिमनपेक्ष्य प्रवृत्तत्वात् । अतः प्रथमकोटिव्यवधानेन प्रवृत्तत्वात् न पूर्व प्रकृतापेक्षरूपार्थस्य आनन्तर्येण सहैक्यम् । फलतस्तु अव्यतिरेकः पूर्ववृत्तस्योभयत्राप्यपेक्षणाद् इति । अथ गौरित्यत्र कः शब्दः इत्यादौ एवमन्यदप्यूह्यम् । प्रसिद्धिवशात् टीकाग्रन्थेषु चत्वारोऽर्थाः निर्दिष्टाः सन्ति । भाष्यकारोऽपि चतुर एवार्थान् प्रदर्शयति ।

अत्र प्रयुज्यमानस्याथ शब्दस्य चत्वारोऽप्यर्थाः सम्भवन्ति । तथाहि—अत्र ब्रह्मात्मैकत्वसाक्षात्कारस्य तद्विषयस्य ब्रह्मणो वा अधिकारः प्रस्तावः प्रारम्भो वा सम्भवति—उत्तराधिकरणे ब्रह्मतज्ज्ञानसाधनादीनां विचारात् । न च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायः । पदार्थत्वञ्च पदजन्य प्रतीति विशेष्यत्वम् । अथ पदार्थस्य समानाधिकरण्येन जिज्ञासापदार्थेनान्वयो वक्तव्यः । जिज्ञासापदार्थे तु ज्ञातुमिच्छाजिज्ञासेति व्युत्पत्त्या

प्रत्ययसनर्थेच्छाया प्रत्ययार्थत्वात् प्राधान्यात् तत्रैवान्वयो वाच्यः। तथा च ब्रह्मज्ञानेच्छाधिक्रियते इति वाक्यार्थः सम्पद्यते। न च तथा सम्भवति। इच्छाया अनधिकार्यत्वात्। यच्चाधिकारयोग्यं ब्रह्म तज्ज्ञानं तत्र प्राधान्येन निर्दिष्टं प्रकृतिप्रत्ययोः प्रत्ययार्थस्यैव प्राधान्यात्। तत्र प्रारम्भो द्विविध; कर्तव्यतया प्रतिपाद्यतया च। वस्तु सौन्दर्यादिबलात् स्वतः प्रवर्तमानाया इच्छायाः कृतिसाध्यत्वाभावात् कर्तव्यत्वाभावः प्रत्यधिकरणञ्चात्र इच्छाया प्रतिपाद्यत्वाभावात् न द्वितीयोऽपि प्रारम्भः सम्भवति।

अत एव भामत्यामुक्तम् "जिज्ञासा तावदिह सूत्रे ब्रह्मणश्च तज्ज्ञानाच्च शब्दतः प्रधानं प्रतीयते इति।"[१]

ननु नायं नियमः प्रधानपदार्थेनैव पदार्थान्तरस्यान्वय इति। बहुशः नियमव्यभिचारोपलम्भात्। तथाहि दण्डीप्रैषानन्वाह, लोहितोष्णीषा ऋत्विजः प्रचरतीत्यादिषु गुणभूतैरपि दण्डलोहितोष्णीषादिभिः विधेरन्वयदर्शनात्। एवमिहापि गुणभूतेनापि ब्रह्मणा तज्ज्ञानेन वाऽथशब्दार्थान्वयोभविष्यति को दोष इति चेन्न दृष्टान्तवैषम्यात्। तथाहि—इष्टिषु प्रैषस्याध्वर्युः कर्ता अनुवचनस्य च होता तद्विकृतौ पशुयागे प्रैषानुवचनयोरूभयोरपि मैत्रावरूणः कर्ताऽभिधीयते "मैत्रा वरूणः प्रेष्यति चान्वाह" इति वाक्येन। अनेन वाक्येन मैत्रावरूण कर्तृकयोः प्रैषानुवचनयोः प्राप्तत्वात् दण्डीप्रैषानन्वाहेति वाक्यतस्तयोर्विध्यन्वयित्वेन न विवक्षा अपि तु तदङ्गभूते दण्डग्रहणे एवाप्राप्ते विवक्षा। अतस्तत्र गुणीभूतेऽपि दण्डे विध्यन्वयः। एवमेव लोहितोष्णिषाश्चरन्तीत्यत्रापि ऋत्विजां तत् प्रचारस्य विवक्षास्ति चोदकवाक्येनोभयोरपि प्राप्तत्वात् किन्तु अप्राप्तलोहितोष्णीषत्वमात्रे विवक्षा। एवं विवक्षावशात् तत्र प्रधानार्थं परित्यज्य तद्विशेषणे विधिः संक्रामति। न च तद्वदत्र व्यवस्था। गुणीभूत ब्रह्मतज्ज्ञानयोः विवक्षास्ति। ननु अथशब्दार्थान्वयानुरोधात् प्रधानेऽपि जिज्ञासापदार्थे अविवक्षास्त्विति चेत् न तस्या जिज्ञासायाः विचाराङ्गभूत संशयप्रयोजनसूचकत्वेन विवक्षणात्।

---

१. भामती ब्र. १/१/१।

संदिग्धस्य सप्रयोजन सूचकत्वेन विवक्षणात्। संदिग्धस्य सप्रयोजनस्यैव जिज्ञास्यमानत्वात् अन्यथा काकदन्तपरीक्षादिवत् कृतकरणवच्चाजिज्ञासामानत्वात् ब्रह्ममीमांसायां प्रेक्षावन्तो न प्रवर्तेरन् इति। ननु जिज्ञासाशब्दो बहुषु स्थलेषु मीमांसापरयर्याय: प्रयुक्तोऽभियुक्तैः। तथाहि, इदमतीजिज्ञासन्ते (मीमांसन्ते) किं क्रतु गुणकमुपासनं स्वामिकर्म, उत ऋत्विककर्मेति। इदन्तु जिज्ञास्यम् (विचार्यम्) किं नु खलु इमौ तप्यतापकौ एकस्यात्मनो भेदौ, उत जात्यन्तरमिति। धर्ममीमांसाभाष्यकारोऽपि संघातमेव प्रायुक्त—धर्मं जिज्ञासितुमिच्छेत्। ब्रह्ममीमांसायामपि भाष्यकारो वक्ष्यति "तस्माद् ब्रह्म जिज्ञासितव्यम्" वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते" इति। अतः जिज्ञासाशब्दस्य मीमांसार्थेऽपि प्रयुज्यमानत्वात् योगाद् रुढिर्बलीयसीति न्यायाद् अवयवार्थस्य विलम्बनेन बुद्ध्यारोहात् रूढ्यर्थस्य च झटिति तदारोहात् बलवत्त्वात्—जिज्ञासा शब्दस्य मीमांसारूपार्थ एव ग्राह्य तथा च तस्या ब्रह्ममीमांसायाः प्रत्यधिकरणमधिकृतत्वात् अधिकारार्थोऽथशब्दो युज्यत एवेति चेत्। अत्रोच्यते—न जिज्ञासा शब्दः मीमांसावचनः। प्रमाणाभावात् पूर्वोक्तस्थलेषु लक्षणयाऽपि निर्वाहात्। न चात्रापि लक्षणयाजिज्ञासाशब्दो मीमांसावचनो भवेदिति वाच्यम्। अवयवार्थग्रहणे बाधाभावात्। ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्याद् अवयवार्थस्यैव भाष्यकाराभिप्रेतत्वात्। क्लृप्ता रूढिः योगापहारिणी न तु कल्प्येत्युक्त न्यायस्य तात्पर्यात्। अत्र तु जिज्ञासाशब्देन मीमांसाया अभिधानाभावात्। उक्तञ्च भामत्याम्—"न च जिज्ञासा मीमांसा येन योगानुशासनवदधिक्रियेत"। पूजितविचारवचनोमीमांसा शब्दः। नान्तत्वं निपात्य माङ्माने इत्यस्माद् वा मानपूजायामित्यस्माद् वा धातोः मानबधदान् शान्भ्ययोदीर्घश्चाभ्यासस्येति सूत्रेण मीमांसाशब्दो निष्पद्यते। तत्र सूत्रे मान् इति माङ्धातो र्नान्तत्वं निपातनात्। मान् पूजायामिति धातोर्वा स्वार्थे सनि द्वित्वेऽभ्यासकार्ये कृतेऽभ्यासस्य दीर्घत्वे रूपम्। अस्य मानित्यस्य पूजितविचारवचनत्वं प्रसिद्धिबलात्। यद्यपि तस्य पूजितविचारवचनत्वं न व्याकरणस्मृतिप्रसिद्धम्। मान् पूजायामिति धातोः पूजामात्रवाचित्वात्,

नच मान विचारे इति चुरादिपाठस्य तथा प्रसिद्धिः, तस्य विचार मात्रवचनत्वात् इति तथापि तयोरन्यतरस्य ग्रहणे विशेष्यविशेषणान्यतरलाभोऽस्ति। पूजार्थमान् ग्रहणे पूजितविचारार्थे विशेषणीभूतपूजाग्रहणम्। चौरादिकस्य विचारार्थकस्य मान् ग्रहणे च विशेष्यस्य विचारस्य ग्रहणम्। अन्यतरग्रहणेऽपि अन्यतरस्य लाभो भवत्येव। मान् वधेत्यादिसूत्रे सन् नेच्छायामपि तु स्वार्थे इति स्वार्थश्च पूजितविचारः। अतः मीमांसाशब्दो न जिज्ञासा वचनः। जिज्ञासेत्यत्र सनर्थ इच्छा। तस्माद् अवयवर्थेनार्थवत्त्वात् जिज्ञासाशब्दो ज्ञानेच्छावाची, एतदर्थे बाधाभावान्नलक्षणा, न च विचारार्थे क्वचिद् रूढिरिति।

अतः भाष्ये सुष्ठूक्तम् ब्रह्मजिज्ञासाया अनधिकार्यत्वात् इति।

ननु जिज्ञासाया विचारार्थकत्वाभावे अनधिकार्यत्वात् तस्याः वस्तुविषयसौन्दर्य-बलाल्लभ्यत्वात् पुरुषकृतिव्याप्यत्वाभावाच्च कथमुक्तं भगवता भाष्यकारेण—"तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति। अनेन च भाष्येण स्पष्टमेव जिज्ञासा शब्दस्य विचारार्थः प्रतीयतेऽन्यथा कर्तव्येति न ब्रूयात्। विचारार्थत्व ग्रहणे च जिज्ञासाया अनधिकार्यत्वादिति भाष्यविरोधः स्यात् इति चेद् अत्रोच्यते कर्तव्येतिपदाध्याहार इष्यमाणस्य ज्ञानस्यार्थतः प्रधानस्य विचारसाध्यत्वात् विचारस्यापि कर्तव्यत्वमाक्षितीतिसूचनार्थः। न तु जिज्ञासाशब्दार्थ एव विचारोऽत्र ग्राह्यः।

अत एव भामत्याम् उक्तम्—"**अतः स्वर्गादीनां क्षयिताप्रतिपादकात् ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकात् आगमात् यथोक्तसाधनसम्पत्। ततश्च जिज्ञासेति सिद्धम्**"[१]। अतएव तस्मात् ब्रह्म विजिज्ञासितव्यमिति भाष्यप्रतीकमादाय भामतीकल्पतरूपरिमले चाचार्यैः ब्रह्मजिज्ञासा कर्त्तव्या, ब्रह्मविजिज्ञासितव्यमित्यस्य तात्पर्यं वर्णितम्। तथाहि—तत्रत्याभामती—"तस्मात् ब्रह्म विजिज्ञासितव्यम्" उक्तलक्षणेन मुमुक्षुणा। न खलु तज्ज्ञानं विना सवासनविविधदुःखनिदानमविद्योच्छिद्यते। न च तदुच्छेदमन्तरेण

१. भामती-पृ.-७५।

विगलितनिखिलदुःखानषङ्गानन्दघन ब्रह्मात्मता साक्षात्काराविर्भावो जीवस्य। तस्माद् आनन्दघनम् ब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम्। तच्च न केवलेभ्यो वेदान्तेभ्यः, अपितु ब्रह्ममीमांसोपकरणेभ्य इति इच्छानिभेन ब्रह्ममीमांसायां प्रवर्त्यते। न तु वेदान्तेषु तदर्थविवक्षयां वा। तत्र फलवदर्थावबोधपरतां स्वाध्ययनविधेः सूत्रयता अथातोधर्मजिज्ञासा इत्यनेनैव प्रवर्त्तितत्वात्। धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवद् ब्रह्मणोऽपि उपलक्षणाच्च। यद्यपि धर्ममीमांसावद् वेदार्थमीमांसया ब्रह्ममीमांसाऽप्याक्षेप्तुं शक्यते, तथापि प्राच्यामीमांसया न तद्व्युत्पाद्यते नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यान्तर्यप्रदर्शनाय चेदं सूत्रमारम्भणीयमित्यपौनरूक्त्यम्''[१]। तत्रैव कल्पतरौ उक्तम्—''नन्विच्छाया विषयसौन्दर्यलभ्यत्वात्किं तत्कर्तव्यतोपदेशेन ? तत्राह—इच्छानिभेनेति। ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय भवति, निर्णयश्च विचारसाध्य इति तत्कर्तव्यतार्थाद्गम्यत इत्यर्थः।आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहारः। श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्ता इत्येष एव। तथा चाधिकारार्थत्वमथशब्दस्य निषेद्धुं ज्ञानेच्छा जिज्ञासाशब्दार्थ इत्युपपादनेन न विरोध इति। ननु धर्मग्रहणाद्विधीनामर्थविवक्षा तत्र कृता, न वेदान्तानाम्, नेत्याह—धर्मग्रहणस्येति। उपलक्षणता वेदान्तानामर्थविवक्षाप्रतिज्ञावद्विचारप्रतिज्ञापि तत्रैवास्त्वित्याशङ्क्योपरि प्रतिपादनादर्शनान्नेत्याह—यद्यपीति। ब्रह्मविचारप्रतिज्ञायास्तत्र संभवमङ्गीकृत्य परिहार उक्तः, इदानीं संभव एव नास्तीत्याह—नापीति। अविरक्तस्य ब्रह्मविचारे प्रवृत्त्ययोगादित्यर्थः। ब्रह्ममीमांसारम्भायेति प्राचा तन्त्रेणागततोक्ता। नित्यादिविवेकानन्तर्यायेति। तत्रत्यप्रथमसूत्रणेहत्यप्रथमसूत्रस्य।''[२] तत्रैव कल्पतरूपरिमले उक्तम्—''आर्थिके चास्मिन्निति। टीकायामेषितव्यमित्युक्त्या सूत्रे जिज्ञासा कर्तव्येति कर्तव्यपदाध्याहारः सूचितः, स तु जिज्ञासापदस्य कृतियोग्यविचारार्थकत्वाभिप्रायो न भवति; ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्ये जिज्ञासाशब्दस्यानधिकार्य-

१. भामती- पृ.-७८।

२. कल्पतरू-पृ.७८।

ज्ञानेच्छापरत्वस्याङ्गीकृतत्वात्, किंत्वार्थिकविचारकर्तव्यत्वाभिप्राय इत्यर्थः। अर्थविवक्षाप्रतिज्ञावदिति। ननु—अर्थविवक्षाप्रतिज्ञा विचारप्रतिज्ञेति नास्ति प्रतिज्ञाद्वय धर्मजिज्ञासासूत्रे,(जै.सू.अ.१पा.१सू.१) येनाद्यप्रतिज्ञायां धर्मग्रहणं वेदार्थमात्रोपलक्षणं, न द्वितीयप्रतिज्ञायामिति विभज्येत, किं त्वेकैव तत्र विचारप्रतिज्ञा वेदस्य; विवक्षितार्थत्वं स्वतःशब्देन तत्र हेतुतयोच्यते, तद्धेतुकरणसामर्थ्याच्च वेदस्याध्ययनविनियोगशेषत्वेन विषनिर्हरणादिमन्त्रवदविवक्षितार्थत्वशङ्का निरस्यत इति—चेत्, सत्यम्; धर्ममात्रस्य तत्र विचार्यत्वप्रतिज्ञायामपि विशिष्य धर्मपरवेदभागमात्रस्य विवक्षितार्थत्वं न हेतुः, तथा सति वेदान्तभागस्य अविवक्षितार्थत्वशङ्कायां न्यायतौल्येन पूर्वभागस्यापि तद्वदविवक्षितार्थत्वमस्त्विति शङ्कायाः स्थिरीकरणापत्तेः, किंतु कृत्स्नवेदाध्ययनानन्तर्यस्यार्थशब्दार्थत्वादधीतस्य कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतुतयोच्यते इत्यत्र तात्पर्यम्। एवं च धर्मग्रहणस्य वेदार्थमात्रोपलक्षणत्वादिति टीकायां धर्मस्य यद्ग्रहणम् अतः शब्दोक्तविवक्षितार्थत्वे हेतावर्थशब्देनोपादानं तस्य वेदार्थमात्रोपलक्षणत्वादित्यर्थो दर्शितो भवति। टीकायामपि स एवार्थः प्रकृतोपयोगी[१]।

अस्यैव भामतीग्रन्थस्य प्रकाशटीकायां श्रीलक्ष्मीनाथझा शर्ममहोदय कृतायाम् व्याख्यानं कृतम्—"उक्तलक्षणेन भाष्योक्तसाधनचतुष्टयसम्पन्नेन। ननु ब्रह्मविजिज्ञासितव्यमिति भाष्यमसङ्गतमिच्छायां तव्यप्रत्यार्थस्य कृतिसाध्यत्वस्य बाधात् इच्छया हि पुमान् प्रवर्त्तते न तु कृत्या इच्छतीत्याशंकां जिज्ञासितव्यमित्यस्य विचार्यमित्यर्थकतामुपपादयन् निराकरोति नखल्वित्यादिना। प्रथमं वृत्त्यात्मकः साक्षात्कारस्ततोऽविद्योच्छेदस्ततो ब्रह्मात्मक-साक्षात्काराविर्भाव इत्याह नच तदुच्छेदमन्तरेणेति। तस्मादिति यस्मान्नाविद्योच्छेदे विना ब्रह्मात्मताऽऽविर्भावस्तस्मादित्यर्थः। एषितव्यम् इच्छाविषयः। विचारं विना उपनिषन्मात्रेणात्मतत्वनिश्चरूपं ज्ञानं न भवतीत्याह तच्चेति। न केवलेभ्य इति संशयादिना

१. कल्पतरुपरिमले- पृ.-७८।

प्रतिबन्धादितिभावः। मीमांसोपकरणेभ्यः मीमांसाविचार सहितेभ्यः, अतो ब्रह्मविजिज्ञासितव्यमित्युक्तं भाष्यकृतेति शेषः। नन्विच्छायामलंकर्तव्यतोपदेशेन तस्याः कृत्ययोग्यत्वादित्याशंकामिच्छासाध्ये विचारे तदन्वयोपगमेन परिहरति—इच्छानिभेनेत्यादिना अत्रेदंबोध्यम् संदिग्धे विषये जिज्ञासा निर्णयाय भवति निर्णयश्च विचारसाध्योऽतो विचारस्य कर्तव्यताऽर्था ल्लभ्यते इत्थं च जिज्ञासाविचारयोरुभयोरेवाभिमतत्वेन साधनचतुष्टय-सम्पत्त्यनन्तरं ब्रह्मजिज्ञासा भवतीत्येकः सूत्रस्याक्षरार्थः, जिज्ञासापदस्य विचारे लक्षणामुरीकृत्य कर्तव्यपदं चाध्याहृत्य उक्तसम्पत्त्यनन्तरं ब्रह्मविचारः कर्तव्य इत्यपरश्च विवक्षितोऽर्थः एवंच यथा जिज्ञासा पुमांसं विचारे प्रवर्त्तयति तथा विचारकर्तव्यतोपदेशकम् अथातो ब्रह्मजिज्ञासा इति सूत्रमपीतीच्छासूत्रयोर्द्वयोः समानं प्रवर्त्तकत्वमायातमित्यभिप्रेत्येच्छानिभ (सदृश)त्वमस्य सूत्रस्योक्तमिति। नच प्रदर्शितलक्षणापक्षको द्वितीय एव सूत्रस्यार्थ इति वाच्यम्, जिज्ञासापदस्य स्वार्थ विवक्षायाः प्रयोजनस्य 'ब्रह्मजिज्ञासाया अनधिकार्यत्वात्, इति भाष्यव्याख्याने प्रागेव भामत्यां प्रदर्शितत्वेन वाच्यार्थस्याप्यावश्यकत्वात्। एवं सति यत्र जिज्ञासितव्यमिति भाष्याद्युक्तिस्तत्र मीमांसितव्यमित्यर्थोबोध्योऽतो भवति सर्वमवदातम्[१]। क्वचिच्च भामत्यामिच्छानिभेनेत्यत्र इच्छामुखेनेति पाठः। तस्यार्थः ब्रह्मजिज्ञासामुखेनेति। तथा च ब्रह्ममीमांसारम्भाय ब्रह्मजिज्ञासेति सूत्रमारम्भणीयमिति भावः। एतावान् ग्रन्थसन्दर्भः विषयस्पष्टतायै उदाहृतः। एतेन ग्रन्थसंदर्भेण भामतीकार मते न जिज्ञासा पदार्थो मीमांसा।

पञ्चपादिकाविवरणव्याख्यानेतु सूत्रवाक्यार्थो दर्शित इच्छाप्रधानेन। तां प्रधानीभूतामिच्छामनतिक्रम्य विचारञ्चलक्षणयादाय जिज्ञासा कर्त्तव्येत्युक्तम्। अत एव पञ्चपादिकाविवरणे उक्तम्—**"तत्रावयवार्थ व्युत्पादनेनापरोक्षावगमेच्छाया वाक्यर्थत्वम्। इष्यमाण ज्ञानफलोपदेशमुखेनान्तर्णीत तत् साधनं विचारं कर्तव्यतया वाक्यार्थं प्रतिपादयत्युत्तरभाष्यम्"**[२]।

१. प्रकाशटीका-पृ.-२८८।

२. पञ्चपादिकाविवरण-पृ. ७७८।

अस्य विवरणग्रन्थस्य तात्पर्यमुक्तं तत्त्वप्रदीपेन "**इच्छाया वाक्यार्थत्वे विषयसौन्दर्य-लभ्यत्वात् कर्तव्योपदेशोनुपविपत्तिः। तथा च साङ्काक्षत्वेन वैयर्थ्यमित्याशङ्क्याह इष्यमाणेति। अन्तर्णीतमित्यस्यायमर्थः–इष्यमाणज्ञानं प्रति साक्षाद् इच्छायाः साधनत्वासम्भवाद् इच्छानन्तरभावीज्ञानात् प्राक्कालसम्बन्धी विचारो लक्ष्यते। तत्र ब्रह्मज्ञानस्यान्यत उत्पत्त्यसम्भवात् वेदान्तेभ्य एवोत्पत्तिर्वक्तव्या। न चानिर्णीतशक्तितात्पर्याणां वेदान्तानामप्रतिबन्धापरोक्षप्रत्ययजनकत्वम् इति शक्तितात्पर्यविचारः कर्त्तव्यो मुमुक्षणा**"[१]। एवमत्र उभयमते इच्छाप्रधान एव सूत्रार्थः जिज्ञासा कर्तव्येत्यत्रभाष्ये कर्तव्येति पदप्रयोगात् विचाराक्षेपो युक्तः।

प्रकृतमनुसरामः। जिज्ञासाया अनधिकार्यत्वात् नाथशब्दार्थोऽधिकार इति।

**मङ्गलार्थत्व विचारः–**

नन्वस्तु मङ्गलार्थत्वमथशब्दस्य। मङ्गलादीनि हि शास्त्राणि प्रथन्त इति शिष्टशास्त्राभ्युपगमात्। मङ्गलवाची चायमथ शब्दः। ओंकारश्चाथ शब्दश्चेति स्मृतेरिति चेन्न मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। पदार्थ एव वाक्यार्थैः समन्वीयते। स च वाच्ये वा लक्ष्यो वा। नचेह मङ्गलमथशब्दस्य वाच्यो वा लक्ष्यो वा। नच शक्तिग्राहककोश विरोधः मङ्गलनन्तराम्भेत्यादि कोश वाक्यात् मङ्गलेऽपि अथ शब्दस्य शक्तिग्रहादिति वाच्यम्। उक्तकोशस्य अथशब्द श्रुत्या मङ्गलप्रयोजनत्व प्रतिपादकत्वात्। तस्माद् भेरीमृदङ्गादिशब्दश्रवणेन यथा मङ्गलं तथा अथ शब्दश्रवणमात्रेण मङ्गलप्रयोजनसिद्धेः तत्र न शक्तिकल्पनं वैयर्थ्यात्। अतः अर्थान्तरप्रयुक्त एवाथशब्दः श्रुत्या मङ्गलप्रयोजनोभवतीतिभाष्यं सुवचम्। अन्यार्थं नीयमानस्य दध्यादेः यथा दर्शनमात्रेण, यथा वा अन्यार्थं बोद्धयमानस्य वीणामृदङ्गादेः श्रवणमात्रेण मङ्गलं तथा प्रकृतेऽपि बोध्यम्।

मङ्गलार्थत्वे, प्रत्यहं ब्रह्मजिज्ञासा कर्त्तव्या मङ्गलहेतुत्वात् इति सूत्रार्थः सम्पद्येत।

---

१. तत्त्वप्रदीप-पृ.-६६८।

स चापि न सम्भवति मङ्गलस्य वाच्यत्व लक्ष्यत्वान्यतरत्वाभावाद् ।

अत्र विवरणम्—न तावन्मङ्गलं ब्रह्मजिज्ञासाया: कर्तृकरणकर्मभावेन वाक्यार्थेऽन्वेति । कर्त्राद्यन्यतमभावे प्रमाणाभावात् । कारकान्तराणां विद्यमानत्वाच्च । अथशब्दोपात्ताधिकारिण: कर्तृत्वम्, वाक्यानां करणत्वम् ब्रह्मण: कर्मत्वमिति । नापि समानाधिकरण्येनान्वय: ब्रह्मजिज्ञासामङ्गलमिति । प्रशंसापरतयाऽर्थवादत्व प्रसङ्गादिति ।

उभयो र्विशेष:—अत्र भामती व्याख्याने मङ्गलस्य वाच्यत्व लक्ष्यत्वाभावात् वाक्यार्थे समन्वयाभाव उक्त: । विवरणे—समन्वय एव न सम्भवति वैयधिकरण्येन सामानाधिकरण्येन वा आकाङ्क्षाभावात् । सूत्रस्य चार्थवादत्व प्रसङ्गात् । अनेन व्याख्यानेन मङ्गलं न वाच्यं न लक्ष्यमिति नायाति । किन्तु मङ्गलस्याभिधेयत्वेऽपि समन्वय एवासम्भव: । ननु ब्रह्मजिज्ञासा मङ्गलम् । मङ्गलहेतुत्वात् प्रत्यहं ब्रह्मजिज्ञासाकर्तव्येति समन्वयो जायत एवेति चेन्न सत्यप्येवमन्वये समन्वयाभावादेव सम्यगन्वय: समन्वय: । अन्वये सम्यक्त्वञ्च न्यायसिद्धत्वम्, न्यायश्च पदार्थ एव वाक्यार्थेऽन्वेति न तु अपदार्थोऽपीति । अन्यथा गुड इत्युक्तौ माधुर्यमपि प्रकारतया गम्येत । घट इत्युक्तौ कुलालाकाशादेपि शाब्दत्वं प्रज्येत । अथवा सम्यक्त्वं वाक्यार्थतात्पर्याविघातकत्वम् । तथाविधान्वये क्रियमाणे सूत्रावाक्यार्थस्य अथातो ब्रह्मजिज्ञासेत्यस्य तत् संगृहीत तद्विजिज्ञासस्वेत्यादि विषयवाक्यार्थस्य स्वार्थतात्पर्यस्य विघात: स्यात् । जिज्ञासा मङ्गलमिति स्तुतिमात्रार्थप्रतिपादनात् उभयो: वाक्ययोरर्थवादत्वप्रसङ्गात् ।

तस्मात् समन्वयाभावात् नाथ शब्दस्य मङ्गलार्थत्वम् । ननु मास्तु इह मङ्गलार्थत्वं श्रुतिमात्रेण मङ्गलार्थत्वसिद्धे: । एतावता अथशब्दस्य मङ्गलार्थाभिधायकत्वं कथं विहन्यते इति चेन्न यत्रापि अथशब्दस्य मङ्गलार्थ प्रयोग: तत्र सवर्त्रापि श्रुत्यैव मङ्गलप्रयोजनत्वे सिद्धे: तत्र शक्तिकल्पनाया अयुक्ते: अनन्यलभ्यस्य शब्दार्थत्वात् । अत एव अर्थान्तरप्रयुक्त एवाथशब्दोमङ्गलप्रयोजनो भवतीति भाष्योक्ति: संगच्छते । अतोऽत्र भामतीविवरणयो: मङ्गलं न वाच्यं लक्ष्यम् अथ शब्दस्येत्येतस्मिन्नर्थे न मतभेद: । अत्रेदं बोध्यम्—“अस्तु

तर्हि मङ्गलार्थ इति, नेत्याह—मङ्गलस्य च वाक्यार्थे समन्वयाभावादिति भाष्ये। चोऽप्यर्थः। अधिकारवन्मङ्गलस्यापि प्रधानपदार्थरूपवाक्यार्थे सम्यगन्वयाभावात्, शक्ति-लक्षणाभ्यां पदोपस्थापितपदार्थस्यैव वाक्यार्थान्वयित्वात्। नच मङ्गलमथशब्देन शक्त्या लक्षणया वोपस्थाप्यते, येन तस्य तदन्वयित्वं स्यात्, स्वातन्त्र्येण मङ्गले तदविनाभूते वा लोकेऽथशब्दप्रयोगादर्शनात्। नह्यधिकाराद्यर्थान्तरमविवक्षित्वा मङ्गले तदविनाभूते वृद्धव्यवहारेऽथशब्दस्य प्रयोगो दृष्टः। एतेन चतुर्ष्वर्थेष्वथशब्दो लोके प्रयुज्यत इति—प्रत्याख्यातम्; मङ्गलार्थत्वासिद्धेः। ननु मङ्गलेऽथशब्दो न प्रयुज्यते चेत्, कथं तस्य लोके स्मृतौ च माङ्गलिकत्वप्रसिद्धिः? तथाच स्मृतिः—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ"। इति तत्राह—अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवतीति। हि यस्माद् अधिकाराद्यर्थान्तरे प्रयुक्त एव सन् अथशब्दः श्रुत्या—श्रवणमात्रेण, श्रोत्रेन्द्रियजन्यज्ञानविषयतयोपास्थापित इति यावत्। श्रोतुर्मङ्गलप्रयोजनो भवति=मङ्गलं प्रयोजनं कार्यं यस्य श्रूयमाणस्य, स तथा; मङ्गलजनको भवतीत्यर्थः। तथाचान्यार्थतया प्रयुक्तस्याथशब्दस्य श्रूयमाणत्वेन मङ्गलजनकत्वात् स्मृति-लोकयोर्माङ्गलिकत्वप्रसिद्धिः, न तदर्थतयेत्याशयः। अपि च अस्तु वाऽथशब्दस्य मङ्गलेऽपि प्रयोगः, तथापि प्रकृतवाक्यार्थे न समन्वयः संभवति। ननु—उक्तं ब्रह्मजिज्ञासा मङ्गलम्, अतः प्रत्यहं सा कर्तव्येति कुतोऽसमन्वय इति—चेत्, न; इच्छायाः पुरुषतन्त्रत्वाभावेन विधानानुपपत्तेरुक्तत्वात् तन्मङ्गलत्वख्यापनस्य क्षेपिष्ठा देवते'तिवत् प्रसिद्धानुवादेन स्तुतिरविरुद्धेति चेत्, न; अस्य वाक्यस्य विधिपरत्वाभ्युपगमात्, स्तुतिपरत्वेऽपि कल्प्यमाने वाक्यभेदप्रसङ्गात्। रात्रिसत्रवाक्यवदुभयपरत्वमविरुद्धमिति चेत्, न; तत्राप्यर्थवादवाक्येन विधिवाक्यानुमानादेकस्योभयपरत्वाभावात्, अन्यथा "अर्थैकत्वादेकं वाक्यमि"ति न्यायविरोधापत्तेः। एतेन—'वसन्ताय कपिञ्जलानालभते" इति मन्त्रस्य विध्यर्थवादोभयपरत्वम् प्रत्याख्यातम्। तत्रापि विधि सामर्थ्यादेवार्थवादकल्पनात्। तस्मान्नाथशब्दस्य मङ्गलानुवादद्वारा

स्तुतिपरत्वम्। अपिच यद्यथशब्दो मङ्गलमभिदध्यात्, तर्ह्यधिकारिणोऽलाभाद् नियोज्यरहितो विधिर्निरर्थक एव स्यात्। नच—मङ्गलमेवात्र प्रयोजनम्, तत्कामोऽधिकारी, इति कुतस्तदलाभ इति—वाच्यम्; वेदान्तप्रयोजनस्यैवात्रान्वयात्, मङ्गलमात्रप्रयोजनात्प्रवृत्त्यनुपपत्तेः। अभ्युपेत्यैतदुक्तम्। वस्तुतस्तु—मङ्गलं न स्वतः प्रयोजनम्; अभिमतप्रतिबन्धनिरासिनि मङ्गलशब्दप्रयोगात्। ननु—जिज्ञासापदेन प्रयोजनसूचनात् तेनैवाधिकारिलाभो भविष्यतीति—चेत्, न; सामान्यतस्तेन प्रयोजनसूचनेऽपि प्रयोजनविशेषालाभादधिकारिविशेषसिध्यनुपपत्तेः। तस्मादर्थशब्देनैवाधिकारिविशेषः सूचनीयः। तच्च मङ्गलार्थत्वेऽथशब्दस्य नोपपद्यत इति। ननु—मङ्गलमपि शास्त्रादावपेक्ष्यते, सत्यम्; अत एव "श्रुत्या मङ्गलप्रयोजनो भवती"त्युक्तम्। सर्वथाऽप्यत्राथशब्दो न मङ्गलार्थ इति सिद्धम्।

**अथ शब्दस्य पूर्वप्रकृतापेक्षत्वार्थविमर्शः-**

अथ शब्दो नाधिकारार्थः, न मङ्गलार्थः तर्हि पूर्वप्रकृतापेक्षोभविष्यति। पूर्वं यत् प्रकृतं तदपेक्षा यस्य सः पूर्वप्रकृतापेक्षोऽथ शब्दः।

**अत्र भामतीकाराणामभिप्रायः-**

आनन्तर्यार्थत्वं विनैव पूर्वप्रकृतापेक्षोऽथ शब्दो भविष्यति। क्व उदाहरणमस्य लोके इति चेत्, उच्यते यथा प्रकृतमेवाथशब्दं विमृश्यते—किमयमथशब्द आनन्तर्ये अथाधिकारे इति। अत्र विमर्शवाक्ये 'अथाधिकारे' इत्यत्र अथशब्दपूर्वप्रकृतापेक्षः। यथा वा हृदयेऽवद्यति अथ जिह्वायामित्यादौ अथशब्दः पूर्वप्रकृतापेक्षः। यथा वा अर्थान्तरेऽभिहितेऽर्थान्तर विवक्षया ब्रवीति—"अथैवं मन्यसे" इत्यादौ अथ शब्दः पूर्वप्रकृतापेक्षः।

न चात्राथ शब्दस्य अनन्तर्यमर्थः पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवधानात् आनन्तर्याभावात्। ननु मास्तु पूर्वप्रकृतापेक्षेति चेन्न पूर्वप्रकृतानपेक्षायाम् असमानविषयतया विकल्पानुपपत्तेः। नहि जातु भवति किं नित्य आत्मा प्रकृत सूत्रे अथ शब्द पूर्वप्रकृतापेक्षोभवितुमर्हतीति शङ्का।

समाधानन्तु पूर्वप्रकृतापेक्षाया फलतः आनन्तर्याव्यतिरेकात् । न वयं व्यसनितया आनन्तर्यं रोचयामहे किन्तु ब्रह्मजिज्ञासाहेतुभूतपूर्वप्रकृतसिद्धये । सा च पूर्वप्रकृतापेक्षत्वेऽपि सिध्यतीति नानन्तर्यार्थत्वाग्रहोऽस्माकमिति भावः । हेतुफलभावेनानन्तर्यं फलं तच्चो यथा सिध्यतीति फलतोऽव्यतिरेकः ।

परमार्थतस्तु कल्पान्तरोपन्यासे पूर्वप्रकृतापेक्षा न चेह कल्पान्तरोपन्यास इति पारिशेष्याद् आनन्तर्यार्थ एव गृह्येत ।

पूर्वप्रकृतजिज्ञासयोरूभयपक्षे हेतुफलभावस्य सिद्धावपि अत्र कल्पान्तरोपन्यासाभावात् न पूर्वप्रकृतापेक्षार्थः अपि तु आनन्तर्यार्थ एवं ।

अत्र पञ्चपादिका—ननु प्रक्रियमाणात् पूर्वप्रकृतमपि किञ्चिद् नियमेन प्रतीयतेऽथ शब्दात् । ततस्तत् प्रतिपत्त्यर्थं किमिति न गृह्यते । उच्यते नैतदानन्तर्याद् व्यतिरिच्यते । कथम्? एवम्—तत् प्रक्रियमाणस्य नियमेन पूर्ववृत्तं भवति; यदि तस्यानन्तरं तन्मात्रापेक्षं तत् प्रक्रियेत, एवं सति प्रक्रियमाणस्य हेतुभूतोऽर्थः पूर्वनिर्वृतो भवति अन्यथा यस्मिन् कस्मिंश्चित् पूर्ववृत्तापेक्षायाम् अनुवादादृष्टार्थत्वयोरन्यतरत्वप्रसङ्गात् । अतः हेतुभूतोऽर्थः अपेक्षितव्यः'' अतः फलत आनन्तर्याव्यतिरेकारिति भाष्यवचनम् ।

तत्र विवरणम्—''ननु प्रकृतादर्थादर्थान्तरविवक्षाऽप्यथशब्दः प्रयुज्यते, यथाऽर्थान्तरेऽभिहितेऽर्थान्तरविवक्षया ब्रवीति—'अथैवं मन्यसे ?' इति, तदर्थोऽथशब्द इति चोदयति—ननु प्रक्रियमाणादिति । हेतु फलभावेनानन्तर्याभिधाने प्रकृतादर्थादर्थान्तरत्व-मन्तर्णीततया सिध्यति, इति न पृथग्वक्तव्यमिति परिहरति—नानन्तर्याद् व्यतिरिच्यत इति । ननु अर्थान्तरत्वमेवाभिधायानन्तर्यमन्तर्णीतं किमिति न गृह्यते ? इति चोदयति—कथमिति तत्र किं नियमेन पूर्ववृत्तयया हेतुभूतो वस्तुविशेषोऽवद्योत्यते? किं वा यत्किंचिद्वस्तु पूर्ववृत्तमपेक्ष्यत इति ? तत्र न तावत् प्रथमः कल्पः ; आनन्तर्याभिधानमन्तरेण हेतुतया पूर्ववृत्तवस्तुविशेषनियमासिद्धेरित्याह—एवम् तत्प्रक्रियमाणस्य नियमेन पूर्ववृत्तमिति । अथोत्तरः

कल्पः, तत्राह—अन्यथा यस्मिन् कस्मिंश्चिदिति । ननु आनन्तर्येऽपि हेतुतया पूर्ववृत्तं नावगम्यते, सत्यम्; पुष्कलकारणात् फलस्यानन्तर्यमेव मुख्यं भवति; अव्यवधानात् अव्यभिचाराच्च, अहेतुफलयोस्त्वानन्तर्यं कदाचित् व्यभिचरति कदाचिद् व्यवधीयते च, इति गौणमेव स्यात् । तस्माद् मुख्यानन्तर्याभिधानेन पूर्ववृत्ते पुष्कलकारणेऽवद्योतिते, अर्थान्तरभवोऽप्यन्तर्भवति, नार्थान्तराभिधाने मुख्यमानन्तर्यमन्तर्भवतीत्युपसंहरति—अतो हेतुभूतोऽर्थोऽपेक्षितव्य इति[१] ।

अत्रोभयोः विशेषः—पूर्वप्रकृतं यत् किञ्चिदपेक्ष्य अर्थान्तरत्वमथशब्दस्य, उत पूर्वप्रकृतं हेतुमपेक्ष्येति वक्तव्यम् । आद्यपक्षे अथशब्दवैयर्थ्यम्, अवश्यमेव किञ्चित् कृत्वा किञ्चित् करोतीति । द्वितीयपक्षः सम्भवति । तत्र हेतुहेतुमद्भावस्य आनन्तर्य गर्भितत्वात् आनन्तर्यार्थकत्वपक्ष एव लाघवाद् युक्तः इति विवरणाभिप्रायः ।

भामतीकाराणामयमाशयः—पूर्वप्रकृतापेक्षायामथशब्दः कल्पान्तरोपन्यासेऽपि भवति यथा आत्मा नित्यः अथानित्य इति । तदनुपन्यासेऽपि भवति "अथैष ज्योतिरित्यादौ । यत्र च कल्पान्तरानुपन्यास स्तत्रानन्तर्यार्थक एव भवति अथ शब्दः नार्थान्तरपरः । प्रकृते कल्पान्तरानुपन्यासाद् आनन्तर्यार्थकत्वपक्षे एव पर्यवसानम्' इति पूर्वप्रकृतापेक्षत्वमानन्तर्यार्थकत्वञ्चेत्यनर्थान्तरमेव इति नानन्तर्यार्थकत्वविरोधी अयं पक्ष इति विवृण्वते ।

अत्र च मते—नापि पूर्वप्रकृतापेक्षत्वमित्यादि पूरणं कर्त्तव्यं भाष्ये । एतन्मतरीत्या पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् आनन्तर्यार्थः परिगृह्यते इत्यन्वयात् आनन्तर्यार्थः अथशब्द इत्युपसंहारः फलति । सति चैवमानन्तर्यार्थक एवेति शेषपूरणमत्राभिप्रेतम् इति गम्यते । "सति चानन्तर्यार्थत्वे" इत्युत्तरभाष्य ग्रन्थोऽपि स्वरसत उपपद्यते ।

**स्वाध्यायानन्तर्यविचारः–**

स्वाध्यायानन्तर्यं तु समानम् इति भाष्यम् । धर्मब्रह्मजिज्ञासयोः स्वाध्यायस्य आनन्तर्यं

१. पञ्चपादिकाविवरणम्-पृ. ६४५-६५० ।

समानमेव । साधारणमेव । ननु धर्मजिज्ञासा यथा स्वाध्यायाध्ययनादनन्तरं प्रवर्तते एवं ब्रह्मजिज्ञासापि स्वाध्यायानन्तरं प्रवर्ततां योग्यत्वात् यथा हि स्वाध्याययनं विनां धर्ममीमांसा अशक्या तथा ब्रह्ममीमांसापि । उभयोर्धर्मब्रह्मणोराम्नायैकगम्यत्वात् । आम्नायस्य च अगृहीतस्य स्वविषये धर्मे ब्रह्मणि च विज्ञानाजननात् । आम्नायाध्ययनं तु स्वाध्यायोऽध्येतव्य इति विधिनैव गृहीतम् । अध्ययनं नाक्षर ग्रहणमात्रमपि तु फलवदर्थाबोधपरम् । स्वाध्यायः सकलोवेदराशिः । कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थपरत्वं बोधितमध्ययनविविधाना । तस्मात् वेदाध्ययनादनन्तरं ब्रह्मजिज्ञासेति । भाष्ये स्वाध्यायानन्तर्यमित्यत्र स्वाध्यायपदेन तदध्ययनं बोध्यते । स्वाध्यायस्य नित्यत्वात् तदानन्तर्याभावात् । अतः स्वाध्यायशब्दस्तदध्ययनपर्यन्तः । एवञ्च अथातोब्रह्मजिज्ञासेत्यत्रापि स्वाध्ययानन्तर्यमेवाथशब्दार्थ इति चेन्न तस्य उभयजिज्ञासयोः समानत्वात् साधारण्यात् । अतएवात्यन्तमनपेक्षत्वात् पुष्कलकारणत्वाभावाद् वा ।

अत्र भामत्यामुक्तम्—

अथातो धर्मजिज्ञासा इत्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम् । धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया वेदार्थत्वाविशेषेण वेदान्ताध्ययनानन्तर्योपदेशसाम्यात् इत्यर्थः'' इति ।

अस्यायं भावः । स्वाध्यायाध्ययनान्तर्यार्थे परिगृहीते ब्रह्मजिज्ञासासूत्रं नारब्धव्यं स्यात् । कुतो नारब्धव्यं यतः धर्ममीमांसासूत्रे धर्मशब्देनधर्मवद् ब्रह्मणोऽपि वेदार्थत्वाविशेषात् ग्रहणम् । तत्र धर्मशब्दोवेदार्थमात्रोपलक्षकः । तथा च तत्र सूत्रघटाथशब्देन वेदाध्ययनानन्तर्यं गृह्यते । वेदाध्ययानन्तरं धर्मब्रह्मोभयजिज्ञासयोः तत् सूत्रेणैव गतार्थत्वात् अत्रत्याथशब्दो व्यर्थः किं वा सूत्रमेव व्यर्थमतोनारब्धव्यं स्यात् । किञ्च कर्मधर्ममीमांसयोरेकशास्त्रत्वप्रसङ्ग स्यात् । तस्मात् वेदाध्ययनं मानं साधारणम् । न च वेदाध्ययनमात्रात् ब्रह्मजिज्ञासा नियमतः प्रवर्तते इंति । कश्चिद् विशेषनियतं ब्रह्मजिज्ञासोपपादक वक्तव्य इति भावः ।

ननु समानत्वे तदेव वेदाध्ययनानन्तर्यं गृह्यताम् किमर्थं विशेषाकाङ्क्षा । नहि

वेदराशेरधिगमं विना धर्ममीमांसां ब्रह्ममीमांसा वा कर्तुं पार्यत इति चेन्न । अथातो ब्रह्मजिज्ञासेति सूत्र वैयर्थ्यप्रसङ्गात् ब्रह्मजिज्ञासायां वेदाध्ययनस्य पुष्कलकारणत्याभावाच्च । अधीतवेदस्यापि पूरुषस्याविरक्तस्य मुमुक्षोर्ब्रह्मजिज्ञासायां प्रवृत्त्यदर्शनात् ।

भामतीकारमते यद्यपि धर्मजिज्ञासयैव धर्मपदस्य वेदार्थमात्रोपलक्षणतया ब्रह्ममीमांसागतार्था तथापि इदं शास्त्रमथातो ब्रह्मजिज्ञासेति इत्यादि सूत्रात्मकमारब्धव्यमेवेति पूर्वं प्रतिपादितमेव । ननु उभयोर्जिज्ञासयोः वेदाध्ययनस्य समानत्वे यथा ब्रह्मजिज्ञासा स्वोपपादकं विशेषमाकाङ्क्षते तथा धर्मजिज्ञासापीति । कथं नाम धर्मजिज्ञासा वेदाध्ययनं पूर्ववृत्तं प्राप्य संतुष्येदिति चेन्न धर्मजिज्ञासाया अध्ययनविधिमूलकत्वात् । स्वाध्यायोऽध्यतेव्य इत्यध्ययनविधि प्रयुक्ता एव धर्ममीमांसा । अध्ययनविधेः फलवदर्थपरत्वात् । ननु तर्हि ब्रह्ममीमांसा अध्ययनविधिमूलैव स्यात् इति चेत् अत्रोच्यते ब्रह्ममीमांसाया अध्ययन विधिमूलत्वेऽपि ब्रह्ममीमांसाशास्त्रं पृथगारब्धव्यं पूर्वतन्त्रे ब्रह्ममीमांसाया अकृतत्वात् । अधिकार्यादिनिर्णयार्थत्वाच्च । विवरणमते च ब्रह्ममीमासासूत्रवैयर्थ्य प्रसङ्गात् ब्रह्ममीमांसा नाध्ययनविधिमूला अपि तु श्रोतव्य इत्यादिविधिमूलैवेति शास्त्रारम्भः कर्त्तव्यः ।

भामतीमते श्रोतव्य इत्यादौ कस्यापि विधेरभावात् ब्रह्मजिज्ञासा अचोदिता स्यात् इत्यध्ययनविधिमूलैव ।

श्रीभाष्ये तु अध्ययनविधेः स्वाध्यायस्य सम्पूर्णस्य वेदराशेरक्षरग्रहणं प्रयोजनम् । अध्ययनगृहीतस्य साङ्गस्य वेदस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात् स्वाध्यायात् अवगम्यमानान् प्रयोजनवतो अर्थान् आपाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषफलके वेदवाक्यविचाररूपश्रवणेऽधीतवेदः पुरुषः स्वयमेव रागतः प्रवर्तते । वेदवाक्यविचार-रूपमीमांसायां श्रवणरूपायां रागतः प्रवृत्तिर्न तु अध्ययनविधिमूलेति । भामतीकाराणां तात्पर्यं तु कष्टं कर्मेति न्यायात् काम्यातिरिक्तकर्मणि रागादेरभावात् अध्ययनविधिमूलैव धर्ममीमांसा न रागतः । अध्ययनविधेश्च फलवदर्थावबोधपरत्वमाश्रयितव्यम् ।

एवञ्चोभयोरेकशास्त्रत्वेऽप ब्रह्ममीमांसा आरब्धव्यै धर्ममीमांसायामकृतत्वात् अधिकार्यादि-विशेषनिर्णयार्थत्वाच्च । विवरणमते च भिन्नमेवेदं शास्त्रमारम्भणीयं ब्रह्ममीमांसाख्यं नाध्ययनविधिमूलमतो न पूर्वतन्त्रेण गतार्थम् अपि तु श्रवणविधिमूलमेवेति विवेकः ।

यद्यपि स्वाध्यायाध्ययनं समानं तथापि न तत् पुष्कल कारणं नात्यन्ताय अपेक्षणीयम् इति विवरणम् स्वाध्यायाद्यनं समानम् उभयोर्धर्मब्रह्ममीमांसयोः एवञ्चैकशास्त्रत्वात् ब्रह्ममीमांसाशास्त्रस्यानारम्भणीयताप्रसङ्गः स्यात् । तस्मात् अत्र विशेषो वक्तव्यः यदानन्तर्यात् भवन्ती ब्रह्मजिज्ञासा भवत्येवेति भाष्यतात्पर्यं भामतीकाराः प्राहुः । विवरणादौ अध्ययनविधिरक्षरग्रहणान्तः न तु अर्थावबोधपर्यन्तः । अधीतवेदोऽवश्यकर्तव्यानि नित्यनैमित्तिकानि अकरणेप्रत्यवायजनकानि कर्माणि प्रतिपद्यते । तान्यनन्तरमेवावश्य विचारणीयानि कथमेतानि अनुष्ठेयानीति । अतः प्रागध्ययनादप्रतिपत्तेरयोग्यत्वात् अधीतवेदत्वमेवान्यनिरपेक्षमर्थावबोधहेतुरिति जायते । न तथा ब्रह्मज्ञानमयवश्यकर्त्तव्यम् । अकरणे प्रत्यवायहेतुरिति प्रमाणमस्ति । तस्मादधीत वेदेनावश्यकर्तव्याधर्मजिज्ञासा नैवं ब्रह्मजिज्ञासेति पञ्चपादिका । एवञ्च स्वाध्यायविधिरक्षरग्रहणान्तः अर्थावबोधः कारणान्तरात् । एवमधिगतवेदः आपातप्रतिपन्नानामुत्तरविधीनामनुष्ठेयज्ञानसापेक्षत्वात् तन्निर्णयाय विचारप्रयोजनकत्वम् । एवञ्च स्वाध्याययनविधिः न साक्षात् धर्ममीमांसा प्रयोजनकः परम्परया तु प्रयोजकोभवत्येव । अयं भावः—स्वाध्यायोऽध्येतव्य तव्य प्रत्ययो विध्यर्थः । स च विधिः शाब्दभावनारूपः । शाब्दीभावना च भाव्यं करणमितिकर्त्तव्यताञ्चापेक्षते । तत्र पुरुषप्रवृत्तिरूपामार्थीं भावनां भाव्यत्वेन, स्वज्ञानं करणत्वेन पित्रादीनां घृतकुल्याद्युपजीवन-रूपस्तुतिश्चेति कर्त्तव्यतात्वेन गृह्णाति । एवमसौ शाब्दभावना रूपोऽध्ययनविधिः एवमाव्याया अप्यार्थ भावनायाः अंशत्रयवत्त्वात् तदंशत्रयमपि एव सिध्यर्थमपेक्षते । तत्र शाब्दभावना-भाव्यार्थभावनाभाव्यं किमिति जिज्ञासायां स्वाध्यायः अध्ययनं वा प्रत्यासत्त्या भाव्येत्वेनोपस्थितं किन्तु न तद्भाव्यमपुरुषार्थत्वात् । नहि पुरुषप्रवृत्तिरूपार्थभावनायाः अपुरुषार्थ भूतस्वाध्याध्ययनं

भाव्यम् । अतः शब्दानुपात्तमप्यर्थतः प्राप्तं पुरुषापेक्षितं वाक्यार्थावगमं भाव्यत्वेन, अध्ययनं कारणत्वेन प्राङ्मुखत्वशुचित्वादिनियममितिकर्त्तव्यतात्वेन विधिर्गृह्णाति । तथाचोक्तनियमादीतिकर्त्तव्यताकाध्ययनकरणकार्यावबोधमाव्यकार्थभावनाभाव्यकतव्यप्रत्ययबोध्यशाब्दभावनाविधिः । तत्र अर्थावबोधोभाव्यम् पुरुषार्थत्वात् पुरुषापेक्षितत्वात् । नच स पुरुषापेक्षितो वाक्यार्थावबोधः निर्विचिकित्सः स्वाध्यायविचारं विना अक्षरग्रहणमात्रेण सम्भवति । तस्माद् अध्ययनविधिरेव भाव्यत्वेन वाक्यार्थ ज्ञानमनुजानन् तदुपपादकं स्वाध्यायविचारमपि अनुजानातीति । नच स विचारोऽध्ययनं विना सम्भवति । अध्ययनेन गृहीतस्यैव विचार्यमाणत्वात् । अन्यथा विचारस्य निर्विषयत्वापातात् । तथा च विचारस्य नियमेनाध्ययनापेक्षत्वे सिद्धे यथा धर्ममीमांसा नियमेन पूर्ववृत्तं स्वाध्यायाध्ययनमपेक्ष्यप्रवर्तते । तथैव ब्रह्ममीमांसापि । स्वाध्यायार्थविचारत्वाविशेषात् । अन्यथा अनधीतोपनिषर्थविचारत्वाविशेषात् । अन्यथा अनधीतोपनिषत्कस्यापि ब्रह्मविचारापत्तेः ।

एतद् दूषयति भाष्यकारः स्वाध्यायानन्तर्यं तु समानम् इति ।

अस्यायं भावः । यद्यपि उक्तरीत्या वेदाध्ययनं द्वयो र्मीमासयोः समानमपेक्षितं तथाप्यत्र ब्रह्ममीमांसायां एकशास्त्रत्वे भिन्नशास्त्रत्वे वा तदानन्तर्यं नाथशब्देन अभिधातव्यम् । अथातोधर्मजिज्ञासेत्यादिनैव प्राप्तत्वात् । भिन्नशास्त्रत्वे यदि इहापि अथशब्देन तदेवाभिधातव्यं तर्हि भिन्नशास्त्रत्वमेवानुपपन्नं स्यात् ।

अतस्तेनैव गतार्थत्वात् पौनरूक्तयाच्च । अत्राथ शब्दस्य किं वा सूत्रस्य वैयर्थ्यप्रसङ्गात् । तस्माद् अधिकारिविशेषादिनिर्णयार्थमत्र अथशब्देन विशेषो वक्तव्यः ।

विवरणाभिप्रायस्तु—ब्रह्ममीमांसाधर्ममीमांसा वा नाध्ययनविधिप्रयुक्ता । अध्ययनविधेरक्षरावाप्तिमात्रेगतार्थत्वात् । ब्रह्ममीमांसा श्रवणविधिप्रयुक्ता । धर्ममीमांसा नाध्ययनविधिप्रयुक्ता । अध्ययनविधेरक्षरावाप्तिमात्रफलकत्वात् । नार्थावबोधः तत् फलम् । अर्थावबोधस्तु कारणान्तरात् भवति । अर्थावबोधस्य फलत्वाभावात् तत् प्रयोजकधर्मविचारस्यापि

नाध्ययनविधिनाग्रहणम् । अत एव कात्यायनोऽपि अध्ययनात् पृथक् व्यापारं वाक्यार्थज्ञाने विधत्ते—"साङ्गोवेदाऽध्येयो गेयश्चे"ति भगवान् पाणिनिरपि ब्रवीति—तदधीते तद्वेदेति । तस्मात् सम्पाठमात्राधिगतिः अध्ययनविधिफलम् । एवञ्च धर्ममीमांसापि नाध्ययनविधिप्रयुक्तेति ब्रह्ममीमांसायां तत् प्रयोज्यत्वं दूरापास्तम् । ननु तर्हि कथं भाष्यकारो ब्रवीति—स्वाध्यायाध्ययनं तु समानमिति चेन्न धर्ममीमांसायाः अध्ययनविध्यप्रयोज्यत्वेऽपि अस्य भाष्यस्य संगतेः । तथाहि धर्मविचारस्य तदप्रयोज्यत्वेऽपि विचारस्य स्वाध्यायावाप्त्यधीनत्वात् अध्ययनेनैव तदवाप्तिनियमात् तदानन्तर्यसिद्धेः । अवाप्तवेदः आपातदर्शनेन धर्मविशेषं जिज्ञासत इति परम्परया अध्ययनविधेः धर्मविचारप्रयोजकत्वम् न तु साक्षात् । तस्मात् न धर्ममीमांसापि साक्षात् वेदाध्ययविधिमूला । भवेन्नाम कथञ्चिद् धर्म विचारस्य उक्तविधिप्रयोज्यत्वं तथापि ब्रह्मविचारस्तु नाध्ययनविधिमूलाऽपि तु श्रवणादि विधिमूल इति ।

तथा चोभयोर्नैकशास्त्रत्वम् ।

**नन्विह कर्मावबोधानन्तर्यं विशेषः** इति भाष्यम्

अत्र भामतीकाराणाम् आशयः—

ननु तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादौ यज्ञेनेत्यादौ तृतीया श्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मवेदने एव विनियोगः । ज्ञानस्यैव कर्मतया इच्छां प्रतिप्राधान्यात् । यद्यपि शब्दतः प्राधान्यमिच्छायास्तथापि ज्ञानस्य सनर्थेच्छां प्रति कर्मत्वेन प्राधान्यात् तत्रैव यज्ञादीनामन्वयो न्याय्यः । प्रधानपदार्थस्य प्रधानपदार्थेऽन्वयस्य न्याय्यत्वात् ।

**वाक्यार्थज्ञाने कर्मानुपयोगः-**

तत्रापि न वेदान्तवाक्यार्थज्ञानोत्पत्तौ यज्ञादीनाम् अङ्गत्वे नान्वयः, वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तेः । नच वाक्यं सहकारितया कर्माणि अपेक्षते । अकृतयज्ञादिकर्मणामपि विदितपदपदार्थसंगतीनां समधिगतशब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षा-संनिधियोग्यतानुसन्धानवतां पुरुषाणां निर्विघ्नं वाक्यार्थज्ञानोत्पत्तेः ।

न च वेदान्तवाक्यानामेव स्वार्थावबोधे कर्मापेक्षा नेतर कर्मप्रतिपादकवाक्यानामन्योन्याश्रयत्वप्रसङ्गादिति वाच्यम् । विशेषहेतुरभावात् ।

नन्वस्ति विशेषहेतुस्तथाहि तत्त्वमसीत्यादिवाक्यैः त्वं पदार्थस्य कर्तृभोक्तृरूपस्य जीवात्मनः नित्यशुद्धबुद्धमुक्तस्वरूपेणोदासीनेन परमात्मना तत् पदार्थेन ऐक्यमशुद्धसत्त्वैः कर्मानुष्ठानं विनाऽशक्यं योग्यताविरहनिश्चयात् । अशुद्धसत्त्वस्य नाहं ब्रह्म कर्ताभोक्ताहमिति भेदनिश्चयः ऐक्ययोग्यताविरहनिश्चयः । यज्ञादिभिरनुष्ठितैस्तु तनूकृतान्तर्मलाः विशुद्धसत्त्वाः श्रद्धानाः ऐक्ययोग्यतानिश्चयात् शुद्धेनपरमात्मनैक्यं अवगमिष्यन्तीति अयमेव कर्मवाक्येभ्यः वेदान्तवाक्यानां विशेषहेतुरिति चेत् न तत्त्वमस्यादिवाक्यंप्रतिपाद्य जीवब्रह्मणोरैक्यरूपतत्त्वावधारणस्य प्रमाणगम्यत्वात् । तस्य कर्मसाध्यत्वायोगात् । नच कर्मपिप्रमाणम् प्रत्यादिप्रमाणातिरिक्ते कर्मणि प्रमाणत्वे प्रमाणाभावात् । तस्माद् न वाक्यार्थज्ञाने कर्मणां विनियोगः ।

**तत्त्वज्ञाने कर्मान्वयः–**

अपितु तत्त्वमसीत्यादिना श्रुतमयेन ज्ञाने न जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलया चोपपत्त्या मत्वाः व्यवस्थाप्य तदुपासनायां भावनापराभिधानायां निदिध्यासनरूपज्ञानात्मिकायां दीर्घकालनैरन्तर्यसेवितदृढभूम्यां ब्रह्मसाक्षात्कारफलायां यज्ञादीनामुपयोगः अतएवोक्तम्—**"स तु दीर्घकालनैरन्तर्यसत्कारासेवित दृढभूमिः"**[१] । तत्र ब्रह्मचर्यादयः श्रद्धायज्ञादयश्च सत्कारः । अतएव श्रुतिः तमेवधीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति । विज्ञाय=तर्कोपकरणेन शब्देन । प्रज्ञां भावनां कुर्वीतेत्यर्थः एवञ्च यज्ञादीनां ब्रह्मज्ञाने विनियोगः सिध्यति ।

तत्र च केचित् कर्मणां श्रेयःपरिपन्थिकल्मषनिर्वहणद्वारेण ज्ञाने विनियोगः । केषाञ्चित् मते पुरुषसंस्कारेण । यज्ञादिसंस्कृतः पुरुषः "दीर्घकालनैरन्तर्येणासेवमानः असम्भवनाविपरीत-

१. योगसूत्रम् ।

भावनाञ्च समूलकाषं कषतीति । पुरुषसंस्कारश्च ब्रह्मज्ञानकरणयोग्यतापादनम् । अतएव स्मृति: प्राह—महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु: । ब्राह्मी=ब्रह्मप्राप्तियोग्यताम् । महायज्ञै:=ब्रह्मदेवर्षिपितृभूतयज्ञै: । यज्ञै:=अग्निष्टामादिभि: ।

यस्येते अष्टाचत्वारिंशत् संस्कारा: अष्टौ चात्मगुणा: स ब्रह्मण: सायुज्यं गच्छतीति—

अष्टाचत्वारिंशत् संस्कारा:—गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णुबलि-जातकर्म-नामकरणोपनिष्क्रमणान्नप्राशनचौलोपनयनानि, चत्वारिवेदव्रतानि, देवपितृभूतमनुष्यब्रह्म-यज्ञलक्षणा: पञ्चमहायज्ञा: । अष्टका-पार्वणश्राद्धश्रावण्याग्रहायणीप्रौष्टपदी-चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्था: । अग्न्याधेयाग्निहोत्रदर्शपूर्णमासाग्रायण-चातुर्मास्य निरूढपशुबन्ध-सौत्रामण्य: सप्तहविर्यज्ञसंस्था: । अग्निष्टामात्यग्निष्टोमोकथ्यषोडिशि वाजपेयातिरात्राप्तोर्याम-लक्षणा; सप्त सोमसंस्था: । इत्येते चत्वारिंशत् संस्कारा: । दयान्दाक्षिण्यानसूया शौचानायास मङ्गलाकार्पण्यास्पृहतालक्षणा: अष्टावात्मगुणा: इत्येते अष्टचत्वारिंशत् संस्कारा: एतैर्युक्तस्य ब्रह्मैक्यरूपसाज्युजयप्राप्तिरिति भाव: ।

अन्ये वदन्ति—ऋणत्रयायाकरणे ब्रह्मज्ञानोपयोगमाहु: । तथा च स्मृति:—ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् इति । ऋणत्र्यञ्च दैवपैत्र्यार्षरूपम् ।

अन्ये तु विविदिषन्ति यज्ञेनेत्यादि श्रुतिभ्य: तत् तत् फलाय चोदितानामपि कर्मणां संयोगपृथकत्व न्यायेन ब्रह्मभावनां प्रत्यङ्गभावमाचक्षते । अयं भाव:, कर्ममीमांसायां चतुर्थेऽध्याये चिन्तितम् । 'खादिरे पशुं वध्नाति' खादिरं वीर्यकामस्य यूथं कुर्वीतेति विधि: श्रूयते । तत्र संशय:—किं खादिरं वीर्यकामस्य, इति वीर्यफलश्रवणाद् अनित्या काम्यैव खादिरता? किं वा पशुबन्धनार्थतया क्रत्वर्थे नित्ययूपे खादिरत्वश्रवणाद् नित्येति? तत्र वीर्यफलार्थकत्वेन काम्यतयाऽनित्याया नित्यप्रयोगाङ्गतया नित्यता न युक्ता । यत्तु नित्येऽपि यूपे खादिरत्वश्रवणाद् नित्या खादिरतेति, तन्न; नित्ये तच्छ्रवणस्य काम्याया एव खादिरताया: पशुबन्धप्रयुक्त-यूपाश्रयदानार्थत्वात् । तस्माद् न नित्या खादिरता, इति प्राप्ते राद्धान्त:—खादिरता

क्रत्वर्थतया नित्या, पुरुषार्थतयाऽनित्या च । नच नित्यानित्यसंयोगविरोधः ; एकस्यैव खादिरत्वस्य "खादिरे पशुं बध्नाति" इति वचनेन क्रत्वर्थतायाः "खादिरं वीर्यकामस्य यूपं कुर्वीत" इति वचनेन पुरुषार्थतायाश्च श्रूयमाणतया वचनद्वयबलेन क्रत्वर्थतया नित्यत्वस्य पुरुषार्थतयाऽनित्यत्वस्य च संयोगभेदात् संभवेन नित्यानित्यसंयोगविरोधाभावात् । नच— यूपाश्रयदानाय नित्यवाक्यमित्युक्तमिति—वाच्यम् ; सन्निधानबलादेवाश्रयलाभात् । तत उभयार्थतया नित्या चानित्या च खादिरतेति । क्रत्वर्थत्वेनावश्यकत्वं नित्यम्, पुरुषार्थत्वेन काम्यतया कामनाविरहदशायामवश्याननुष्ठेयत्वमनित्यत्वमिति द्रष्टव्यम् । 'एकस्य तूभयार्थत्वे संयोगपृथक्त्वमि''त्यस्यैवमर्थः पर्यवसन्नः—एकस्य=खादिरत्वस्य, वचनद्वयबलाद् उभयार्थत्वे=क्रत्वर्थत्वे पुरुषार्थत्वे च, संयोगपृथक्त्वम्=संयोगः=शेषत्वबोधनम्, तस्य पृथक्त्वम्=भेदः, क्रतुशेषत्वबोधनं फलशेषत्वबोधनं चेति । खादिरत्वदृष्टान्तेनान्यार्थत्वेन चोदितानामपि कर्मणां यज्ञश्रुत्या ब्रह्मोपासनायामुपयोग उक्तः[१] ।

तत्र पारमर्षं सूत्रम्—'**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्**'[२] । यज्ञादिश्रुतिः यज्ञेन दानेन इत्यादिः । सर्वापेक्षा यज्ञदानाद्यपेक्षा । अश्ववदित्यस्यायमभिप्रायः । अश्वेन जिगमिषतीत्यादौ यथाश्वस्य जिगमिषा द्वारा ग्रामादिप्राप्तावुपयोगः । तथा विविदिषन्ति यज्ञेनेत्यादौ विविदिषा द्वारा परम्परया यज्ञदानादीनां ब्रह्मप्राप्तिलक्षणमोक्षापराभिधान साक्षात्कार हेतुब्रह्मोपासनायां विनियोग इति । एवञ्चास्मिन् पूर्वपक्षे—उक्तश्रुतिस्मृतिप्रामाण्यात् यज्ञादिकर्मसमुच्चिता दीर्घकालनैरन्तर्यसत्काररूपविशेषणत्रयवती अनाद्यविद्या तद्वासनासमुच्छेदक्रमेण ब्रह्मसाक्षात्-काराय मोक्षापरनाम्ने कल्पते इति । तदर्थं ब्रह्मसाक्षात्काररूपमोक्षार्थं कर्माणि अनुष्ठेयानि । न चैतानि दृष्टादृष्टसमवायिकारादुपकारहेतुभूतौपदेशिकातिदेशिक क्रमपर्यन्ताङ्ग ग्रामसहित परस्पर विभिन्नकर्मस्वरूपतदधिकारिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुम् । न च धर्ममीमांसाशीलनं

---

१. ऋजुप्रकाशिका पृ.६६२ ।
२. ब्र.३-४-२६ ।

विना तत् परिज्ञानम् । तस्मात् साधूक्तम्—कर्मावबोधानन्तर्यं विशेष इति[१] । अस्य ग्रन्थस्यायं भावः । पूर्वो रूपेण तत्त्वसाक्षात्कारे कर्मानुष्ठानस्यापेक्षिततत्वे कर्मावबोधं विना तदनुष्ठानासम्भवः । तदवबोधश्च कर्ममीमांसाशास्त्रपरिशीलनं विनाऽसम्भव इति । कर्मावबोधरूपानन्तर्यार्थं कर्ममीमांसापेक्षास्तीति । दृष्टादृष्टेत्यादि भामती ग्रन्थेन सम्पूर्णमेव कर्ममीमांसाशास्त्रमुक्तम् । तथाहि व्याख्यातं कल्पतरौ—दृष्ट उपकारस्तुषविमोकादिः, अदृष्टः प्रोक्षणादिजः प्रयाजादिजश्च । स चासौ यथायोगं सामवायिकः क्रतुस्वरूपसमवायी, आराद् दूरे फलापूर्वसिद्धावुपकारश्च; तस्य हेतुभूतानि औपदेशिकानि प्रत्यक्षविहितानि आतिदेशिकानि प्रकृतेर्विकृतावतिदेशप्राप्तानि क्रमपर्यन्तानि क्रमेणाप्यवच्छिन्नान्यङ्गानि तेषां ग्रामः समूहस्तत्सहितं परस्परविभिन्नं कर्मस्वरूपं, तदपेक्षिताधिकारिविशेषश्च, तयोः परिज्ञानं विना कर्माणि न शक्यान्यनुष्ठातुमित्यन्वयः । औपदेशिकातिदेशिकेति शेषलक्षणादारभ्योपरितनतन्त्रस्यापेक्षोक्ता । क्रमपर्यन्तेति पञ्चमनयस्य अङ्गग्रामेतितार्तीयस्य । सहितेति चातुर्थिकस्य प्रयोज्यप्रयोजक-विचारस्य । परस्परविभिन्नस्येति द्वितीयलक्षणार्थस्य । तदधिकारीति षष्ठाध्यायार्थस्य । दृष्टादृष्टेति संस्कारकर्मत्वगुणकर्मत्वप्रधानकर्मत्वादिचिन्तायाश्च द्वितीयाध्यायगताया अपेक्षेत्युक्तम्[२] । तस्मात् कर्मावबोधानन्तर्यमिति विशेषः । इति पूर्वपक्षः ।

**उत्तरपक्षः—**

तदेतन्निराकरोति भाष्यकारः । न, प्रागप्यधीत वेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति ।

अत्र भामतीकाराणामाशयः—ब्रह्मभावना कर्माण्यपेक्षन्ते इत्युक्तम् । क्व पुनरस्याः कर्मापेक्षा । किं कार्ये किं वा स्वरूपे इति विकल्प्य उभयत्रापि कर्मापेक्षा नास्तीत्युक्तम् । तथा हि—यथा आग्नेयादीनां षण्णां यागानां परमापूर्वे चरमभाविफलानुकूले जनयितव्ये समिधापेक्षा । यथा वा स्वरूपे यथा तेषामेव आग्नेयादीनां यागानां द्विरवत्तपुरोडादि

१. भामती.पृ.६६३ ।

२. कल्पतरौ-पृ.५३-५४ ।

द्रव्याग्निदेवताद्यपेक्षा आग्नेययागः स्वरूपोत्पत्तये। 'द्व्यवदानं जुहोति' इति वचनात्। 'द्विर्हविषोऽवद्यति' इति विहित द्विरवत्त पुरोडाशद्रव्यमपेक्षते एवमग्निदेवतामप्यक्षते। द्रव्यदेवते हि यागस्वरूपमित्यभियुक्तवचनात्। एव न तावत् कार्ये ब्रह्मभावना कर्माणि अपेक्षते। विकल्पासहत्वात्। तथाहि तथासति ब्रह्मभावना ब्रह्मसाक्षात्काररूपः कार्यमभ्युपेयः कर्मणाम्। सच ब्रह्मसाक्षात्कारः कर्मकार्यत्वेनाभ्युपेयः उत्पाद्यो वा विकार्यो वा संस्कार्यो वा प्राप्यो वा स्यात् सर्वथाऽपि नोपपद्यते। तथाहि—

यथा 'पिष्टं संयौति' इति विहित संयवनस्य यथा पिण्ड उत्पाद्यो भवति तथा ब्रह्मसाक्षात्कार उत्पाद्यः। तस्य नित्यत्वात् उत्पाद्यत्वानुपपत्तेः। यथा घटसाक्षात्कारः यथा जडस्वभावेभ्यः घटादिभ्यो भिन्नः इन्द्रियाद्याधेयो भवति तथा ब्रह्मसाक्षात्कार कर्मोपेतभावाधेयो न भवति। ब्रह्मणोऽपराधीनप्रकाशतया तत् साक्षात्कारस्तत्स्वभावभूतः नित्यः। तत्र उत्पाद्यत्वं नास्ति 'अनित्यत्वापत्तेः। ननु ब्रह्मभिन्न एव ब्रह्मसाक्षात्कारः, स च कथं न घटसाक्षात्कार इवात्पाद्यः इति चेन्न, ब्रह्मभिन्नस्य ब्रह्मसाक्षात्कारस्य भावनाधेयस्य प्रामाण्यायोगात्। तस्य संशयाक्रान्तत्वादेवा अप्रामाणिकस्य अविद्या निवर्तनाक्षमस्याकिंचित् करत्वात्। तादृश विषयस्य भावना सामग्री कस्य नष्टपुत्रस्त्रीसाक्षात्कारादेः बहुलं विषयस्य व्यभिचारोपलब्धेः। तथा च ब्रह्मभिन्नस्य साक्षात्कारस्य चक्षुरादि बहिरिन्द्रयाजन्यत्वात् कर्तृत्वादिविशिष्टात्मसाक्षात्कारस्यान्तरिन्द्रियमनोजन्यत्वेऽपि शुद्धब्रह्मसाक्षात्कारस्य अविद्यानिवर्तकस्य तदजन्यत्वात्। तथा च श्रुतिर्यतो वाचो निवर्तन्ते अप्राप्य मनसा अहेति' एवञ्च भावना कर्मणोरप्रमाणत्वात्। शब्दस्य च परोक्षज्ञानजनकत्वात् उत्पाद्यो ब्रह्मसाक्षात्कारो न प्रमा स्यादिति भावः

ननु प्रमाणान्तरेणानुमानेन शुद्धिं गतं ब्रह्मलक्षणमर्थं भावयतः शब्दलक्षणप्रमाणान्तरेण तद्विषयलक्षणः साक्षात्कारः प्रमारूपः सम्पद्यते इति चेन्न, तस्यापि अन्यत्र निदर्शनाभावात्। न खलु अनुमानविबुद्धं वह्निं भावयतः शीतातुरस्य शिशिरमरमन्थकायकाण्डस्य

स्फुरज्ज्वालाजटिलानलसाक्षात्कारः प्रमाणान्तरेण संवाद्यते। विसंवादस्य बहुलमुपलम्भात्। तस्मात् ब्रह्मसाक्षात्कारस्य कार्यत्वाभावात् नोपासनायाः उत्पाद्ये कर्मापेक्षा।

न च कूटस्थनित्यस्य व्यापकस्य शुद्धस्य ब्रह्मणः नित्याप्तस्य, उपासनातः विकारसंस्कारप्राप्तयः सम्भवति। एवञ्च सति विकारादिकार्येष्वपि ब्रह्मोपासना न कर्माणि अपेक्षते इत्युक्तं भवति। ब्रह्मसाक्षात्कारस्य ब्रह्मस्वभावस्य उत्पाद्यत्वादि सम्भवे हि कर्माणामपेक्षा। न तथाऽस्तीति भावः।

ननु उपासनाया; उत्पाद्यो विकार्यः प्राप्यश्च मा भूत् साक्षात्कारः संस्कार्यस्तु भविष्यति। यथा प्रतिसीरापनये पारिषदानां नर्तकीसाक्षात्कारः एवमत्रापि अनिवचनीयानाद्यविद्यापिधानापनयनेन उपासनया ब्रह्मसाक्षात्कारः सम्भवतीति। अत्र च संस्कारोऽभिव्यक्तिलक्षणो न तु गुणाधान दोषापहारलक्षणः इति विशेषः इति चेत् न ब्रह्मोपासनास्वरूपानवगमात्। तथाहि—का पुनरियं ब्रह्मोपासना? किं शाबदज्ञानमात्रसंततिः, आहो निर्विचिकित्सशाब्दज्ञानसंततिः। यदि शाब्दज्ञानमात्रसंततिः, किमियमभ्यस्यमानाप्यविद्यां समुच्छेत्तुमर्हति। तत्त्वविनिश्चयस्तदभ्यासो वा सवासनं विपर्यासमुन्मूलयेत्, न संशयाभ्यासः, सामान्यमात्रदर्शनाभ्यासो वा। नहि स्थाणुर्वा पुरुषो वेति वा आरोहपरिणाहवत् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तं, ऋते विशेषदर्शनात्। ननूक्तं श्रुतमयेन ज्ञान जीवात्मनः परमात्मभावं गृहीत्वा युक्तिमयेन च व्यवस्थाप्यत इति। तस्मान्निर्विचिकित्सशाब्दज्ञानसंततिरूपोपासना कर्मसहारिण्यविद्याद्वयोच्छेदहेतुः। नचासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता; साक्षात्काररूपो हि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते, न तु परोक्षावभासेन; दिङ्मोहालातचक्रचलद्वृक्षमरुमरीचिसलिलादि-विभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्त्वप्रत्ययैर्निवृत्तिदर्शनात्, नो खल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्त्वानां दिङ्मोहादयो निवर्तन्ते। तस्मात् त्वंपदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः। एतावता हि त्वंपदार्थस्य दुःखिशोकित्वादि-

साक्षात्कारनिवृत्तिः नान्यथा । नचैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलं, अपि तु प्रत्यक्षस्य; तस्यैव तत्फलत्वनियमात् । अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । नचायमनुभवो ब्रह्मस्वभावो, येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । नचैतावता ब्रह्मणोनापराधीनप्रकाशता । नहि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति; सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, न तूपहितमपि । यथाह स्म भगवान् भाष्यकारः— 'नायमेकान्तेनाविषय' इति । नचान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः; तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । अन्यथा चैतन्यच्छायापत्तिं विनाऽन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । नचानुमितभावितवह्निसाक्षात्कारवत् प्रतिभात्वेनास्याप्रामाण्यं, तत्र वह्नित्वलक्षणस्य परोक्षत्वात्, इह तु ब्रह्मरूपस्योपाधिकलुषितस्य जीवस्य प्रागप्यपरोक्षत्वात् । नहि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते, जीव एव तु तत्तदुपाधिरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते । नच तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कार-सचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति, एवं वेदान्तार्थज्ञानाभ्यासा-हितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति । अन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेति चेत्, न; तस्याः कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्तेः । न खलु 'तत्त्वमसि' इत्यादेर्वाक्यान्निर्विचिकित्सं शुद्धबुद्धोदासीनस्वभावं अकर्तृत्वाद्युपेतं अपेतब्रह्मणत्वादिजातिं देहाद्यतिरिक्तं एकमात्मानं प्रतिपद्यमानः कर्मस्वधिकारमवबोद्धुमर्हति । अनर्हश्च कथं कर्ता वाधिकृतो वा । यद्युच्येत—निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते, यथा गुडस्य माधुर्यविनिश्चयेऽपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिः, आस्वाद्य थूत्कृत्य त्यागात्, तस्मादविद्यासंस्कारानुवृत्त्या कर्मानुष्ठानं,

तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते। नच—कर्माविद्यात्मकं कथमविद्यामुच्छिनत्ति, कर्मणो वा तदुच्छेदकस्य कुत उच्छेदक इति—वाच्यम्, सजातीयस्वपरविरोधिनां भावानां बहुलमुपलब्धेः। यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति। यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति। यथा वा कतकरजो रजोऽन्तराविले पाथसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोमि। एवं कर्माविद्यात्मकमपि अविद्यान्तराण्यपगमयत् स्वयमप्यपगच्छंतीति। अत्रोच्यते—सत्यं, 'सदेव सोम्येदम्' इत्युपक्रमात् 'तत्त्वमसि' इत्यन्ताच्छब्दात्, ब्रह्ममीमांसोपकरणादसकृदभ्यस्तात्, निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्तद्व्यवहाराश्च; तथापि तानप्ययं व्यवहारप्रत्ययान्मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम्। तथाचायं क्रियाकर्तृकरणेतिकर्तव्यताफलप्रपञ्चमतात्त्विकं विनिश्चिन्वन्कथमधिकृतो नाम, विदुषो ह्यधिकारः, अन्यथा पशुशूद्रादीनामप्यधिकारो दुर्वारः स्यात्। क्रियाकर्त्रादिस्वरूपविभागं च विद्वस्यमान इह विद्वानभिमतः कर्मकाण्डे। अतएव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयांबभूव भाष्यकारः। तस्माद्यथा राजजातीयभिमानकर्तृके राजसूये न विप्रवैश्यजातीयाभिमानिनोरधिकारः। एवं द्विजातिकर्तृक्रियाकरणादिविभागाभिमानिकर्तृके कर्मणि न तदनभिमानिनोऽधिकारः। नचानधिकृतेन समर्थेनापि कृतं वैदिकं कर्म फलाय कल्पते; वैश्यस्तोम इव ब्राह्मणराजन्याभ्याम्। तेन दृष्टार्थेषु कर्मसु शक्तः प्रवर्तमानः प्राप्नोतु फलं, दृष्टत्वात् अदृष्टार्थेषु तु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति नोपासकार्ये कर्मपेक्षा। स्यादेतत्—मनुष्याभिमानवदधिकारिके कर्मणि विहिते यथा तदभिमानरहितस्यानधिकारः, एवं निषेधविधयोऽपि मनुष्याधिकारा इति तदभिमानरहितस्तेष्वपि नाधिक्रियेत, पश्वादिवत्। तथाचायं निषिद्धमनुतिष्ठन् न प्रत्यवेयात्, तिर्यगादिवदिति भिन्नकर्मतापातः। मैवम्; न खल्वयं सर्वथा मनुष्याभिमानरहितः, किं त्वविद्यासंस्कारानुवृत्त्यास्य मात्रया तदभिमानोऽनुवर्तते। अनुवर्तमानं च मित्येति मन्यमानो

न श्रद्धत्त इत्युक्तम् । किमतो यद्येवम्, एतदतो भवति—विधिषु श्राद्धोऽधिकारी नाश्राद्धः । ततश्च मनुष्याद्यभिमानेनाश्रद्दधानो न विधिशास्त्रेणाधिक्रियते । तथा च स्मृतिः—'अश्रद्धया हुतं दत्तम्' इत्यादिका । निषेधशास्त्रं तु न श्रद्धामपेक्षते, अपि तु निषिध्यमानक्रियोन्मुखो नर इत्येव प्रवर्तते । तथा च सांसारिक इव श्रद्धावगतब्रह्मतत्त्वोऽपि निषेधमतिक्रम्य प्रवर्तमानः प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगमः । तस्मान्नोपासनायाः कार्ये कर्मापेक्षा । अतएव नोपासनोत्पत्तावपिः निर्विचिकित्सशाब्दज्ञानोत्पत्त्युत्तरकालमनधिकारः कर्मणीत्युक्तम् । तथा च श्रुतिः—'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।' तत्किमिदानीमनुपयोग एव सर्वथेह कर्मणाम्, तथा च 'विविदिषन्ति यज्ञेन' इत्याद्याः श्रुतयो विरुध्येरन् । न; आरादुपकारकत्वात्कर्मणां यज्ञादीनाम् । तथाहि—तमेतमात्मानं वेदानुवचनेन नित्यसाध्यायेन ब्राह्मणा विविदिषन्ति वेदितुमिच्छन्ति, नतु विदन्ति । वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्, इच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्रधानेन च कार्यसंप्रत्ययात् । नहि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधानोपि राजा पुरुषविशेषणतया शब्दत उपसर्जन आनीयतेऽपितु पुरुष एव, शब्दतस्तस्य प्राधान्यात् । एवं वेदानुवचनस्येद यज्ञस्यापीच्छा-साधनतया विधानम् । एवं तपसोऽनाशकस्य । कामानशनमेव तपः, हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति, नतु सर्वथाऽनश्यन्तो मरणात् । नापि चान्द्रायणादितपःशीलस्य, धातुवैषम्यापत्तेः । एतानि च नित्यान्युपात्तदुरितनिबर्हणेन पुरुषं संस्कुर्वन्ति । तथा श्रुतिः—'स ह वा आत्मयाजी यो वेद इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति । अनेनेति प्रकृतं यज्ञादि परामृशति । स्मृतिश्च—'यस्यैतेष्टाचस्वारिंशत्संस्काराः' इति । नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य च विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयत्याथर्वणी श्रुतिः—'विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति । स्मृतिश्च—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिका । कल्प्तेनैव च नित्यानां कर्मणां नित्येहितेनोपात्तदुरितनिबर्हणेन पुरुषसंस्कारेण ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन

साक्षादङ्गभावो युक्तः; कल्पनागौरवापत्तेः। तथाहि—नित्यकर्मानुष्ठानाद्धर्मोत्पादः, ततः पाप्मा निवर्तते, स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति, अतः पापनिवृत्तौ प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य अनित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते, ततोऽस्य अस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते, ततस्तज्जिहासोपावर्तते, ततो हानोपायं पर्येषते, पर्येषमाणश्चात्मतत्त्व ज्ञानमस्योपाय इत्युपश्रुत्य तज्जिज्ञासते, ततः श्रवणादिक्रमेण तज्जानातीत्यारादुपकारकत्वं तत्त्वज्ञानोत्पादं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम्। इममेवार्थमनुवदति भगवद्गीता—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते।' एवंचाननुष्ठितकर्मापि प्राग्भावीयकर्मवशाद्यो विशुद्धसत्तवः संसारासारतादर्शनेन निष्पन्नवैरागयः, कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः। इममेव च पुरुषधौरेयभेदमधिकृत्य प्रववृते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति। तदिदमुक्तम्—कर्मावबोधात्—प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति। अत एव न ब्रह्मचारिण ऋणानि सन्ति; येन तदपाकरणार्थं कर्मानुतिष्ठेत्। एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते' इति, गृहस्थः संपद्यमान इति व्याख्येयम्; अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेव' इति श्रुतिर्विरुध्येत। गृहस्थस्यापि च ऋणापाकरणं सत्त्वशुद्ध्यर्थमेव। जरामर्यवादो भस्मान्ततावादोऽन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्वपण्डितान्। तस्मात्तस्यानन्तर्यमथशब्दार्थः, यद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव। नचेत्थं कर्मावबोधः। तस्मान्न कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम्[१]।

अत्रोदाहृतभामतीग्रन्थे अनेकं वैशिष्ट्यम्—

**मनसः ब्रह्मसाक्षात्कारहेतुत्वम्–**

तद्यथा—निर्विचिकित्सशाब्दज्ञानसंततिः ब्रह्मोपासना तत्त्वसाक्षात्कारवती

१. भामती पृ.५४-६४।

अविद्याद्वयोच्छेदहेतुः । साक्षात्काररूपो हि अध्यास साक्षात्कार ज्ञानेनैव निवर्तते । न परोक्षज्ञानेन । त्वं पदार्थे न हि जीवेन तत्पदार्थस्य ब्रह्मणः साक्षात्कार एषितव्यः । सच साक्षात्कारः मीमांसासहितस्यापि शब्दस्य प्रमाणस्य न फलम् अपि तु प्रत्यक्षस्येति । यद्यपि स्वतोऽपरोक्षस्यापि ब्रह्मणः परोक्षता भ्रमगृहीता । तत्र अपरोक्षप्रमाकरणादेव तत्साक्षात्कारः । न तत्र वाह्येन्द्रियमुपयुजयते । अन्तःकरणं तु सोपाधिके आत्मनि जनयति अहं वृत्तिमपरोक्षां धियम् ।

तत्तु निर्विचिकित्सः शब्दजनितब्रह्मात्मैक्यधी संततिवासितं तत्पदलक्ष्यब्रह्मात्मतां जीवस्य साक्षात्कारयति । यथा पूर्वभावनावासितमक्षं तत्तेदन्तोपलक्षितैक्यविषयप्रत्यभिज्ञाहेतु तथा । न खलु केवलमन्तःकरणं शुद्धब्रह्मसाक्षात्कारयितुमलम् । अपितु तादृशशब्दजन्य-ब्रह्मभावनावासितमेव ।

उक्तश्च गीताभाष्ये भाष्यकारैः—शास्त्राचार्योपदेश शमदमादिसंस्कृतमनआत्मदर्शने करणमिति । मनसैवानुद्रष्टव्यमित्यादिश्रुतेः । यन्मनसा न मनुते इत्यादि वाक्यं तु असंस्कृतमनसेत्यभिप्रायपरम् । मनश्चापरोक्षज्ञानजननसामर्थ्यं क्लृप्तम् सोपाधिकआत्मनि अहं प्रत्यय जनकम् । शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः ।

**शब्दापरोक्षवादखण्डनम्–**

शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः । लोके तथानुभवात् । ननु—अभिव्यक्तचैतन्या-भिन्नत्वमर्थस्यापरोक्ष्यं, तत्तु नित्याभिव्यक्तजीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम् । अतएव 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतिः । घटादीनामपरोक्षचैतन्याभेदाध्यासोपाधिकं तदेव प्रत्यक्षोऽयं घटः प्रत्यक्षं घटं पश्यामीत्यादिव्याहारालम्बनम् । ज्ञानस्यापरोक्ष्यमपरोक्षार्थव्यवहारानुकूलज्ञानत्वं तत्स्वस्य सुखादेश्च प्रकाशरूपे नित्याभिव्यक्तसाक्षिचैतन्ये वानुगतं स्वाभाविकं, चाक्षुषादिवृत्तिषु तत्तदभिव्यक्तचैतन्याभेदाध्यासोपाधिकं, नतु जातिरूपम् इन्द्रियजन्यत्वाद्युपाधिरूपं वा ज्ञानानामापरोक्ष्यम् । अपरोक्षज्ञानविषयत्वमर्थापरोक्ष्यमिति न युक्तम्; तत्तांशविषयप्रत्यभिज्ञायां

तत्तांशे चातिप्रसक्तेः, साक्ष्यव्यापन्नाच्च। एवं च तत्त्वमस्यादिशब्दजन्यम् अपरोक्षजीवभिन्न-ब्रह्मज्ञानमपरोक्षमेव भवति। न चैवं सति—अनुमितेरप्यपरोक्षपर्वतादावापरोक्ष्यं स्यादिति—वाच्यम्; इष्टापत्तेरिति।

एवञ्च शब्दस्यैव प्रथमं श्रवणजन्ये ब्रह्मज्ञाने क्लृप्तकरणस्य भावस्य अविद्यानिवर्तके चरमसाक्षात्कारेऽपि करणत्वोपपत्तेर्न तत्र कारणान्तरं कल्पनीयम्। न च शब्दादपरोक्षप्रमा लोके न दृश्यते इति वाच्यम् दशमस्त्वमसीत्यादौ सन्निहितार्थस्थले दशमस्त्वमसीति वाक्यादेव दशमोऽहमस्मीति प्रत्यक्षप्रमोदयात् इति चेत्। अत्रोच्यते—"अभिव्यक्त-चैतन्याभिन्नत्वमर्थापरोक्ष्यमिति तावन्न, युक्तम्; स्वरूपसदभेदमात्रविवक्षायां चाक्षुषवृत्त्य-भिव्यक्तपर्वतावच्छिन्न चैतन्येन व्यवहितवह्न्यवच्छिन्नचैतन्यस्य तेन व्यवहितवह्नेश्च स्वाभाविकाध्यासिकाभेदसत्त्वेन व्यवहितवह्नेरप्यपरोक्षत्वापत्तेः, निरस्तभेदोपाधिकाभेदविवक्षायां चरमसाक्षात्कारनिवर्त्याविद्योपाधेः चरमसाक्षात्कारोत्पत्तिदशायामपि सत्त्वेन ब्रह्मणस्तदानीमा-परोक्ष्याभावापत्तेः, स्फुरदभेदविवक्षायां ताद्धर्म्याभ्यासविषये दुःखशोकादौ तदानीं सद्रूपब्रह्माभेदास्फुरणादापरोक्ष्याभावापत्तेः, स्वव्यवहारानुकूलं यदभिव्यक्तचैतन्यं तदभेदविवक्षायामनुमेयवह्न्यादिव्यवहारानुकूलेन जीवचैतन्येन प्रागुक्तरीत्यैवाभिन्नस्य वह्न्यादेरापरोक्ष्यापातात्, स्वव्यवहारानुकूलो योऽभिव्यक्तचैतन्याभेदस्तद्वत्त्वविवक्षायां तत्तदाकारधीवृत्तिसमुल्लासमात्रादपि भवति व्यवहारे चैतन्याभेदस्यानपेक्षितत्वेनासंभवापत्तेः, स्वावरणनिवृत्त्यनुकूलचैतन्याभेदवत्त्वविवक्षायामावरणनिवर्तकत्वग्रहणाधीनमापरोक्ष्यग्रहणम् आपरोक्ष्यग्रहणाधीनमावरणनिवर्तकत्वग्रहणमिति परस्पराश्रयापत्तेः, एवमुक्तरूपार्थापरोक्ष्य-निर्वचनायोगात् तदपेक्षमपरोक्षार्थव्यवहारानुकूलज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वचनमप्ययुक्तम्; तस्मात्स्वाविषयविषयकज्ञानाजन्यज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वक्तव्यम्। तच्चाक्षुषादिवृत्त्य-भिव्यक्तचैतन्येषु चानुगतम्, अनुमितिशाब्दज्ञानादिभ्यश्च तत्तदविषयलिङ्गशब्दादिज्ञानजन्येभ्यो व्यावृत्तम्। नच विशिष्टज्ञानं विशेषणज्ञानजन्यमित्यभ्युपगमे दण्डकुण्डलोभयस्मृतिजन्य-

दण्डिप्रत्यक्षाव्याप्तिः, वस्तुगत्या यः स्वाविषयः तद्विषयत्वं यस्य ज्ञानस्य जनकतायामवच्छेदककोटिप्रविष्टं तदजन्यत्वस्य विवक्षितत्वात्, उक्त स्मृतेर्दण्डिप्रत्यक्षे तदविषयकुण्डलविषयत्वेनाजनकतया तत्रापि लक्षणसत्त्वात्। यदीश्वरज्ञानमुपादानगोचरज्ञानतया 'बहुस्यां प्रजायेये'तिवदिदं ज्ञानमस्य स्यादिति संकल्परूपतया वा कारणमिष्यते, तदा तज्जन्येषूक्तज्ञानेष्वव्याप्तिवारणाय समानाधिकरणत्वं ज्ञाने विशेषणं देयम्। न च कोलाहले बुभूत्सितशब्दग्रहो बुभुत्साजन्यस्तन्मूलबोधेष्टसाधनताज्ञानेनापि जन्य इति तत्राव्याप्तिः, बुभुत्सयान्यथासिद्धस्य तस्य शब्दग्रहणे कारणत्वाभावाद्, बुभुत्सयेतरशब्दग्रहप्रतिबन्धे सति क्लृप्तकारणादेव बुभुत्सितशब्दग्रह इति तत्र बुभुत्साया अप्यकारणत्वाच्च। नच व्याप्तिज्ञानत्वावच्छिन्नं सर्वमनुमितिजनकं व्याप्तिज्ञानत्वादित्यनुमितावतिव्याप्तिः; तत्रानुमितेः सामान्यतः सर्वव्याप्तिविषयायाः स्वकारणज्ञानविषयव्याप्तिविषयत्वसत्त्वेऽपि स्वकारणव्याप्तिज्ञानवत् प्रकृतहेतुसाध्यविशेषोपरक्ततया तद्विषयत्वाभावेन तस्याः स्वाविषयविषयकज्ञानजन्यत्वात्। नचैवमपि हेतुतावच्छेदकसाध्यतावच्छेदकविशेषावच्छिन्नहेतुसाध्योपरक्ताव्याप्तिज्ञानत्वावच्छिन्नसर्वपक्षीकरणे सत्युक्तानुमितावतिव्याप्तिः, सामान्यधर्ममात्रानवच्छिन्नतया यः स्वविषयो न भवति तद्विषयत्वस्य विवक्षितत्वात्, तस्यामनुमितौ हेतुतावच्छेदकसाध्यतावच्छेदकयोः सामान्यधर्ममात्रावच्छिन्नत्वेन विषयतया सामान्यधर्ममात्रानवच्छिन्नतया तदविषयत्वस्य सत्त्वात्। नचानुपलब्धिप्रमाणजन्याभावज्ञानेऽतिव्याप्तिः; योग्यानुपलब्धेः प्रमाणत्वात्, योग्यतायाश्च यद्यत्राधिकरणे प्रतियोग्यभविष्यत्, तदा भूतलमिवाद्रक्ष्यतेति तर्करूपत्वेनानुपलब्धिज्ञानस्य स्वाविषयकतर्करूपज्ञानजन्यत्वात्, स्मृतौ स्वसमानविषयपूर्वानुभवसंस्कारजन्यायामतिव्याप्तिवारणार्थमग्निमज्ञानपदमनुभवपरं बोध्यम्। एवंच प्रत्यभिज्ञायास्तत्तांशेऽपि नातिव्याप्तिः; तस्यास्तदंशे स्मृतित्वाङ्गीकारात्। एवमपरोक्षज्ञानलक्षणव्यवस्थितौ तज्जन्यव्यवहारयोग्यत्वमर्थापरोक्ष्यमिति तन्निर्वचनं द्रष्टव्यम्। एवं च शब्दप्रमाणं स्वाविषयविषयकज्ञानजन्यां परोक्षप्रमामेव जनयतीति नापरोक्षप्रमाहेतुरिति भावः[१]।

१. पृ. ५५से५६ कल्पतरूपरिमल।

कल्पतरुरपि—दशमस्त्वसीत्यादौ तु शब्दसचिवादक्षादेव साक्षात्कारः अन्धादेस्तु परोक्षधीरेव ।

अपि च—

**वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।**

**मूलप्रामाण्यदार्ढ्येन न भ्रमत्वं प्रपद्यते ।**

नच प्रामाण्यपरतस्त्वापातः, अपवादनिरासाय मूलशुद्ध्यनुरोधात् । दृश्यते त्वग्रया बुद्ध्येत्यादेर्नयवृंहितवचनादित्थमुरीकारः । साक्षाद्अपरोक्षाद् इत्येवमाकारैवधीः शब्दादुदेति न तु परोक्षं ब्रह्मेति । सा तु कारणस्वभावात् परोक्षावतिष्ठते न भ्रमः इति सर्वमवदात् ।

एवञ्च तं त्वौपनिषदं पुरुषमित्यत्रापि उपनिषद्वाक्य जन्यशाब्दज्ञानसंतति वासितान्तःकरणगम्यमित्यर्थः इति न शब्दोऽपरोक्षप्रमाहेतुः ।

विवरणमते तु दशमस्त्वमसीत्यादि प्रत्यक्षवद् शब्दादपि अपरोक्षज्ञानं मन्यते । एवञ्च मनननिदिध्यानाङ्गपूर्ण वेदान्तवाक्यश्रवणादेव साक्षात्कारः इति ।

एतदुभयमतं वेदान्तपरिभाषाकारैरूपपादितम्—तत्त्वमस्यादि वाक्योत्थं ज्ञानं मोक्षस्यसाधकमिति नारदीयवाचनादित्युक्रम्य—तच्च ज्ञानमपरोक्षरूपम् । परोक्षत्वेऽपरोक्षभ्रम-निवर्तकत्वानुपपत्तेः । तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादिति केचित् । मनननिदिध्यासन-संस्कृतान्तःकरणादेवेत्यपरे ।

तत्र पूर्वाचार्याणामयमाशयः—संविदापरोक्ष्यं न करणविशेषोत्पत्तिनिबन्धनम्, किन्तु प्रमेयविशेषनिबन्धनमित्युपपादितम् । तथा च ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यज्ञानमप्यपरोक्षम् । अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति **'प्राणोऽस्मि प्रज्ञात्मानं मायायुरमृतमुपास्व'**[१] इतीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति मामुपास्वेत्यस्मच्छब्दानुपपत्तिमाशङ्क्य तदुत्तरत्वेन प्रवृत्ते **'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'**[२]

१. कौ.३-२ ।

२. ब्र.सू. १/१/३१ ।

इत्यत्र सूत्रे शास्त्रीया दृष्टिःशास्त्रदृष्टिविरिति तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति ।

अन्येषां त्वयमाशयः—करणविशेषनिबन्धनमेव ज्ञानानां प्रत्यक्षत्वम्, न विषयविशेषनिबन्धनम् । एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात् । तथा च संवित्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्दजन्यज्ञानस्यापरोक्षत्वम् ।

ब्रह्मसाक्षात्कारेऽपि मननिदिध्यासनसंस्कृतं मन एव करणम् 'मनसैवानुद्रष्टव्यः' इत्यादिश्रुतेः । मनोऽगम्यत्वश्रुतिश्चासंस्कृतमनोविषया । न चैवं ब्रह्मण औपनिषदत्वानुपपत्तिः, अस्मदुक्तमनसो वेदजन्यज्ञानानन्तरमेव प्रवृत्तया वेदोपजीवित्वात् । वेदानुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधित्वात् ।

शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोजकत्वादुपपद्यते । तदुक्तम्—

**अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा ।**

**शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः ।।इति ।**

तच्च ज्ञानं पापक्षयात् । स च कर्मानुष्ठानादिति परम्परया कर्मणां विनियोगः । अत एव **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'**[१] इत्यादिश्रुतिः 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इत्यादिस्मृतिश्च सङ्गच्छते[२] ।

**ब्रह्मणो वृत्तिविषयत्वविचारः-**

निर्विचिकित्सवाक्यार्थभावना परिपाकसहितमन्तः करणं त्वं पदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । न चायमनुभवो ब्रह्मस्वभावो येन न जन्येत । अपितु अन्तःकरणस्यैव वृत्तिभेदे ब्रह्मविषयः इत्यादि भामतीग्रन्थः ।

---

१. बृ.४/४/२२ ।

२. वेदान्तपरिभाषा-पृ.-१५७-१६० ।

अत्रेदं विचार्यते ब्रह्म वृत्तिविषयो भवति। तच्चोपहितमनुपहितं वेति।

ननु ब्रह्मणो वृत्तिविषयत्वे स्वप्रकाशत्वहानिः। ब्रह्म न स्वप्रकाशो वृत्तिविषयत्वाभ्युपगमात् सर्वोपाधिरहितं ब्रह्मसवयं ज्योतिरिति गीयते। भगवान् भाष्यकारोऽपि ब्रवीति—नायमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात् अस्यार्थो भामत्यां स्पष्टीकृतः—"अयमर्थः—सत्यं प्रत्यगात्मा स्वयं प्रकाशत्वादविषयोऽनंशश्च; तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पित-बुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्तापि कर्तेव, अभोक्तापि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव, जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविध-धर्मकमिवेति। नहि चिदेकरसस्यात्मनः चिदंशे गृहीते अगृहीतं किंचिदस्ति। न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन्। गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति। नचात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत्; बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वचनीयत्वात्। तस्माच्चिदात्मनः स्वयंप्रकाशस्यैव अनवच्छिन्नस्य अवच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात्, तदध्यासेन जीवभाव इति। तस्य चानिदमिदमात्मनोऽस्मत्प्रत्यय-विषयत्वमुपपद्यते। तथाहि—'कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते। न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा संभवति यस्य च बुद्ध्यादेः कारणसंघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम्। तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितो लब्धक्रियाभोगशक्तिः, स्वयं प्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात्, कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च, जन्तुरिति च, क्षेत्रज्ञ इति चाख्यायते। न खलु जीवश्चिदात्मनो भिद्यते। तथा च श्रुतिः—'अनेन जीवेनात्मना' इति। तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहं-प्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते, नच-अध्यासे सति विषयत्वं विषत्वे चाध्यास, इत्यन्योन्याश्रयत्वमिति—सांप्रतं, बीजाङ्कुरवदनादित्वात्,

पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादित्युक्तम्—नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्यग्रन्थेन । तस्मात् सुष्ठूक्तम्—न तावदयमेकान्तेनाविष इति । जीवो हि चिदात्मया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः[१] ।

ननु उपहितं यदि वृत्तिविषयः, तच्च न स्वप्रकाशः तर्हि अविद्योपहितो जीवः कथं स्वप्रकाश स्यात् इति चेत् न उपाधनकालेऽपि स्वरूपतः ब्रह्मणः स्वप्रकाशत्वं उपहितरूपेण तु तस्यास्वप्रकाशत्वमित्यभ्युपगमात् ।

ननु शुद्धं ब्रह्मनिरूपधिकमिति वृत्तिरूपसाक्षात्कारस्याकार इष्यते । न चोपाधौ विद्यमाने तदाकारः सम्भवति । तत् कथमुच्यते उपहितं वृत्तिगोचर इति । तादृश साक्षात्कारे शुद्धस्यैव विषयत्वात् इति चेन्न, अन्तःकरणवृत्तिरूपसाक्षात्कारे सर्वोपाधिविनिर्मोकाभावात् तस्यैवान्तःकरणवृत्तिरूपस्य निनश्यदवस्थस्योपाधेः स्वपरोपाधिविरोधिनो विद्यमानत्वात् । उक्तञ्च कल्पतरौ तत्रत्ये निरूपाधिब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधि निवृत्तिहेतुरूदयते । स्वस्या अप्युपाधित्वाविशेषाद् । ततः स्वसत्तायां विनाशहेतु सांनिध्यात् विनश्यदवस्थत्वम् । एवञ्च नानुपहितस्य वृत्तिविषयता । न चोपाधेर्निवर्तकान्तरापेक्षेति भावः । तादृशवृत्तौ सत्यामन्ततः तद्वृत्तिरूपोपाधिसद्भावाद् नानुपहितस्य विषयता ।

ननु वृत्त्युपहितं ब्रह्मविषय इत्यत्र वृत्तिविशिष्टं वृत्त्युपलक्षितं वेति कोऽर्थोऽभिप्रेतः । आद्ये वृत्तिविशिष्टस्य शबलतया न तत्त्वसाक्षात्गोचरता । वृत्त्यवच्छिन्नात्मविषयत्वे च वृत्तेः स्वस्याः स्वविषयत्वापातः । विशेषणाग्रहे विशिष्टाग्रहाद् । न द्वितीयः, उपलक्षितस्य वृत्त्युपाधिकत्वाभावात् । अविद्यमानत्वे सति व्यावर्तकमुपलक्षणं भवति । वृत्तिस्तु विद्यमाना नोपलक्षणं भवितुमर्हतीति भावः । विशेषणत्वे च स्वविषयत्वापत्तिरूक्ता । स्वविषयत्वे च एकत्र विषयविषयिभावविरोधः । शाब्दबोधे शब्दानुपस्थितामाननियमेन वृत्तेः शब्दानुपस्थिताया भानानुपपत्तेः । यथा कञ्चिदुपपत्तौ वा न ततो वृत्तिविशिष्टब्रह्मगोचरज्ञानात् अज्ञानतत्कार्ययो

---

१. भामती-पृ.३८-३९

निर्वृत्तिः स्यात् अज्ञान तत् कार्यविषयकाविषयकज्ञानस्यैव तदुभय निवर्तकत्वात्। अन्यथा अहमज्ञः अयं घट इत्यादिज्ञानानामपि उपहितविषयत्वात् अज्ञानतत्कार्य निवर्तकत्व प्रसङ्गात् इति चेत्

अत्रोच्यते—वृत्तेः शाब्दवृत्तौ तत्त्वसाक्षात्काररूपायाम् अनवभासमानाया एवोपधायकत्वाभ्युपगमात्। नन्वत्र वृत्ते र्विशेषणत्वोपलक्षणत्वयोः पक्षयो कं पक्षं गृहीत्वा कल्पतरौ परिहार उक्त इति चेन्न उभौ पक्षौ परित्यज्य उपाधि पक्षं गृहीत्वा परिहार उक्तः। कार्यानन्वयित्वे सति विद्यमानत्वे सति व्यावर्तकमुपाधिरिति तृतीयपक्षं परिगृह्य परिहारः। वाक्यान्वयाधिकरणे (ब्र.१-४-१९) अयं पक्षः कल्पतरौ उक्तः। तथाहि—यतो न विशेषणम् अविद्या, नाप्युपलक्षणम्, किं तूपाधिः। कः पुनरेषां भेदः? उच्यते। कार्यान्वयित्वेन विभेदकं हि विशेषणं नैल्यमिवोत्पलस्य। अनन्वयित्वेन तु भेदकानाम् उपाधिता उपलक्षणता च सिद्धा। तत्र च—यावत्कार्यमवस्थाय भेदहेतोरुपाधिता। कादाचित्कतया भेदधीहेतुरुपलक्षणम्। नीलोत्पलमानयेत्यत्र हि नैल्यं व्यावृत्तिप्रयुक्तानानकार्यान्वयि सदुत्पलं रक्ताद्व्यावर्तयति। अलक्तककाकौ तु स्फटिकगृहकार्ययोर्नान्वीयेते। अलक्तकं तु यावद्रक्तस्फटिकानयनमनुवर्तते। काकस्तु न चैत्रगृहगमनं यावदनुवर्तते। तदिहाऽविद्या न विशेषणमिति न तन्नाशे जीवनाशः। नचोपलक्षणमिति न ब्रह्मणि संसारो यावत्संसारं चानुवर्तिष्यते। तन्निवृत्तौ च जीवः स्वं ब्रह्मभावमेष्यति। त्वयापि लिङ्गशरीरावच्छेदाभ्युपगमात् समौ पर्यनुयोगपरिहारौ। न चौपाधिकस्य सत्यत्वमित्यनन्तरमेव वक्ष्यत इति[१]।

एव निर्विचिकित्सशाब्दज्ञानसन्ततिरूपोपासनायां साक्षात्कार जनिकायां नास्ति कर्मणामुपयोगः। विविदिषायान्तु कर्मणामुपयोगः।

विवरणादिग्रन्थे च वेदने कर्मणामुपयोगो दर्शितम्। कर्मणां विविदिषायां वेदनेवान्वय इति विचारः। तत्र अन्तःकरणशुद्धिद्वारा ब्रह्मज्ञाने कर्मणामुपयोगः इति विवरणाचार्याशयः।

१. कल्पतरूप-पृ. ४२०-४२१।

तत्र स्पष्टार्थं विवरणग्रन्थ उदाह्रियते—ननु तर्हि कर्माण्यनुष्ठीयमानानि पुरुषसंस्कारतया ब्रह्मज्ञानकार्याणि, अतो धर्मानुष्ठानानन्तरं ब्रह्मजिज्ञासेति चोदयति—भवतु तर्हि संस्कारद्वारेणेति। ननु—"सर्वं एते पुण्यलोका भवन्ती"ति स्वतन्त्रपुरुषार्थसाधनानां कर्मणां कथं संस्कारकर्मतया प्रोक्षणादिवद् गुणकर्मता? स्मृतिसामर्थ्यादिति चेत्, न; श्रुतिविरोधात्। ननु—संस्कारो नाम गुणाधानं मलापकर्षो वा? तत्र "धर्मेण पापमपनुदति" "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इति चात्मनि मलापकर्षसंस्कारः सिध्यति, विध्यन्यथानुपपत्त्या वाऽऽत्मन्यपूर्वगुणाधानं गम्यते। अतः श्रुत्यवगतमेव संस्कारकर्मत्वम्; "इदं मेऽनेनाङ्गं संस्क्रियते" इति च श्रुतेः। नच क्रत्वङ्गद्रव्यसंस्कारतया नित्यकर्मणामितिकर्तव्यतोच्यते, येन स्वतन्त्रफलविरोधः स्यात्, किन्तु द्रव्यार्जनविधिवदुपकारमात्रमिति, सत्यम्; पापक्षयापूर्वलक्षणसंस्कारादभ्युपदयफले श्रुत्यवगते न ब्रह्मज्ञानशेषता शक्याऽवधारयितुम्; स्मृतिसामर्थ्यात्—इति उच्यते; नित्य-नैमित्तिककर्मानुष्ठानैः संस्कृतस्यात्मनो यदि श्रवण-मनन-ध्यानाभ्यासादीनि ज्ञासाधनानि सम्पद्यन्ते, तदा संस्कारकर्माणि सहकारिविशेषादात्म-ज्ञानवतारयन्ति, यदा तु सहकारिकारणविरहः, तदाऽभ्युदयफलमिति व्यवस्थोपपत्तेर्न श्रुति-स्मृत्योः परस्परविरोधः। ननु "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः" इत्यतः "स ब्रह्मणः सायुज्यं सालोक्यं च गच्छती"ति सालोक्यलिङ्गाद् हिरण्यगर्भावप्तिः संस्कारकर्मणां फलं गम्यते, न परब्रह्मावाप्तिः, येन सहकारिसामर्थ्यात् कर्मणां पुरुषसंस्कारद्वारेण मोक्षफलता स्यात्, उच्यते;—संस्कारशब्दस्तावद् दधि-ब्रीहिसंस्कारवत् स्वतन्त्रफलसाधनाङ्गभूतमोक्षफलदा कल्प्यते; "ब्रह्मणः सायुज्यं सालोक्यमि"ति च फलद्वयोपादानात्; तथाहि भगवान्—"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्युपक्रम्य, "सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे" इति चोक्त्वा, "बुध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥" इति च ब्रुवन् नित्यकर्मभिः संस्कृतस्य सिद्धिशब्दाभिधेयविशुद्धान्तःकरणस्य ध्यानयोगादिसहकारिसम्पत्तौ

तत्त्वज्ञानजन्मद्वारेण मोक्षं—दर्शयति ।. ''स्वे स्वे कर्मणी''ति च नित्यकर्माण्युच्यन्ते । संसिद्धिशब्देन चात्मवैमल्यं ब्रह्मज्ञानयोग्यतापत्तिरुच्यते; परमसिद्धेरुत्तरत्राभिधानात्, ''योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये'' इत्युक्तत्वाच्च । तथा ''महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः'' ''ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'' ''कषाये कर्मभिः कक्के ततो ज्ञानं प्रवर्तते'' इति च । तस्मात् संस्कारशब्दसामर्थ्यात् स्मृत्यन्तराच्च नित्यकर्माणि मलापकर्ष-गुणाधानलक्षणपुरुषसंस्कारद्वारेणात्मज्ञानयोग्यतामापाद्य, तत्त्वज्ञानजनकतया मोक्षे ज्ञानेन सह समुच्चीयन्ते; यथा ब्रीहिप्रोक्षणादीनि संस्कारकर्माणि दर्श-पूर्णमासस्वरूपोत्पत्तिहेतुतया स्वर्गे समुच्चीयन्त इति ।

ननु प्रोक्षणादिवदेकाधिकारितया गुणकर्मतैव नित्यकर्मणां प्राप्ता, न; ब्रह्मज्ञानस्याविधेयत्वात्, आत्मनः संस्क्रियमाणस्य विधेयकर्मगुणत्वाभावात् । न तर्हि संस्कारकर्मता; विहिताङ्गद्रव्यसंस्कारकर्मसु तत्प्रसिद्धेः; न अविहितभोजनाङ्गदधिसंस्कारप्रसिद्धेः । ननु विध्युद्देशे करणतया विहितानां नित्यकर्मणां करणताविरोधिनी दध्यादिसंस्कार-वदात्मज्ञानेतिकर्तव्यता प्राप्ता, नैष दोषः; ''अग्निं चित्वा सौत्रामण्या यजेत'' ''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते''ति सौत्रामणी बृहस्पतिसवयोरन्यत्र करणतया स्वतन्त्रविध्यन्तर-विहितयोरग्निचन-वाजपेयाङ्गतयेतिकर्तव्यतादर्शनात् । तत्र करणेतिकर्तव्यताविधि-वाक्यप्रमाणभेदात् युक्तं सौत्रामण्यादेरुभयथात्वमिति चेत्, सत्यम्; अर्थविरोधाभावे सति नित्यविधिसामर्थ्यात् संस्कारस्मृत्यनुमितिश्रुतिसामर्थ्याच्च करणतया संस्कारतया च स्वतन्त्रफलशेषताऽऽत्मज्ञज्ञनेतिकर्तव्यता चेत्युभयथात्वमिहापि कल्प्यताम् । नचान्यार्थद्रव्यसंस्कारमात्रत्वादितिकर्तव्यता; आधानेऽदर्शनात् । संस्कृताग्नेरुद्देश्यत्वात् तत्रानङ्गतेति चेत्, इहापि संस्कृतं विशुद्धान्तःकरणं विरक्तं विविदिषुमुद्दिश्य ज्ञानसाधनविधानादविरोधः । प्रत्यक्षेण विशुद्धिं प्रत्यक्प्रवणतां च चित्तस्य कर्मफलमवगच्छन् जन्मान्तरानुष्ठितं कर्मानुमाय ज्ञानस्यान्तरङ्गसाधनेषु प्रवर्तिष्यत इति । तस्मात् यथैव

स्वतन्त्रविध्यन्तरविहितद्रव्यार्जनस्य सहकारिकारणसम्पत्तिभेदात् ऋतुः भोगयोः शेषत्वम्, तद्वन्नित्यकर्मणामपि सहकारिभेदादात्मज्ञानाभ्युदययोः शेषत्वं न विरुध्यत इति । योऽपि कश्चित् सर्वसंस्कारवादी वेदान्तार्थसूक्ष्मदूरीकृतविज्ञानो वेदानतार्थदूषको न संस्कारार्थानि नित्यानि कर्माणीति वक्ति, स शास्त्रार्थविभागज्ञानशून्यत्वादुपेक्षणीय इति । अथवा—सर्वाण्येव कर्माण्युत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवद् 'ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'त्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह—यज्ञेन दानेनेत्यादिना ।

कथम्? आत्मतत्त्वापरोक्षानुभवस्तावदिष्यमाणतया स्वर्गादिवद्भावनासाध्योऽवगम्यते; पुरुषार्थत्वात्, शाब्दज्ञाने तु संजाते तत्कामनायोगात्, असंजाते विषयानवगमादेव तत्र कामनायोगात् शब्दावगतेऽपरोक्षज्ञानमिष्यत इति युक्तम् । तच्च प्रयन्तान्तरसाध्यमिति पुरस्ताद् दर्शितम् ।तत्र यज्ञादीनामिच्छोपसर्जनतयाऽऽख्यातसमीरितभावनाकरणतयाऽवगतानां साध्येनैवान्वयाद् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि । ततश्च—'आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'ति विधिः परिणम्यते । नचेच्छामात्रेण संयोगः ; तस्या असाध्यमानतावगमात् । नच 'विविदिषन्ती'ति वर्तमानताविरोधः, लेट्परिग्रहेण विधेरेवावगमात् । नच नित्य-माम्याधिकारान्तरविरोधः, एकस्य कर्मणोऽनेकाधिकारविधिसम्बन्धावगमात् । ननु कुण्डपायिनामयने ''मासमग्निहोत्रं जुह्वती'त्यग्निहोत्रस्य प्रकरणान्तरत्वात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववद् विविदिषावाक्यस्य च प्रकरणान्तरत्वाद् न प्रसिद्धाग्निहोत्रादीनामत्र विनियोगः कल्पयितुं शक्यते, अतः कर्मान्तराण्येवेहोत्पत्त्यधिकाराभ्यां सह विधीयन्ते, नैतद्युक्तम् ; कुण्डपायिनामयनेऽग्निहोत्रशब्दस्यालौकिकाभिधानत्वादाख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनः स्वातन्त्र्येण प्रदेशान्तरविहिताग्निहोत्रपरामर्शकत्वानुपपत्तेराख्यातस्य च जुहोतेः सामान्यवाचिनः स्वसन्निहितकारकादिनिरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शित्वायोगात् कर्मान्तरमेव मासगुणविशिष्टं विधीयत इत्युक्तम्, इह त्वध्ययन-यज्ञ-दान-तपोऽनाशकशब्दानां

लौकिकाभिधानतया स्वातन्त्र्यात् प्रदेशान्तरविहिताध्ययनादिपरामर्शोपपत्तेस्तान्येव कर्माणि संयोगभेदेन विधीयन्त इत्युपपद्यते ।

ननु एवमपि ब्रह्मज्ञानं दृष्टप्रमाणसामग्रीजन्यत्वाद् नादृष्टमपेक्षते, सति प्रमाणकारेण यज्ञाद्यभावाद् ज्ञानोदयादर्शनाभावात्, नैतत, दृष्टकारणक्लृप्तौ ह्यन्वय-व्यतिरेकप्रमाणान्तर्भूतत्वात् केवलव्यतिरेकस्य तदपेक्षा युज्यते, इह तु सुखस्य दृष्टकारणसम्पत्तौ केवलव्यतिरेकाभावेऽपि विधानादेवादृष्टसापेक्षत्ववत् सम्यग्ज्ञानेऽपि विधानादेवादृष्टसापेक्षत्वमुपपद्यते । ननु—कर्मणां विज्ञाने विनियोगद्वाराभावाद् विज्ञानफले मोक्षे विनियोगः कल्प्यते—इति, उच्यते, यथा यागादिकर्मणां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्यपूर्वाणि कल्प्यन्ते, एवमिहाप्यन्तःकरणशुद्धिचित्तैकाग्र्यदिद्वारं कल्प्यतामिति । किञ्च—साक्षाच्छ्रुतज्ञानसाधनत्वानुपपत्तौ तत्फलसाधनत्वकल्पनाद् वरं परम्परयाऽपि तत्साधनत्वकल्पनम्, कारणविभक्तेः 'काष्ठैः पचती'ति परम्परया साधनेऽपि दर्शनात्, फलसाधनत्वेऽपि तदयोगात् । नचास्मिन् वाक्ये यज्ञादिसाध्यो मोक्षः श्रूयते, आत्मा तु ज्ञानकर्मतया तत्साध्योऽवगम्यते, न यज्ञादिसाध्यः । किञ्च प्रमाणान्तरविरोधं परिहृत्यैव श्रुतपरित्यागेनाश्रुतकल्पना युक्ता, अस्ति च "नान्यः पन्था विद्यते" "न कर्मणा न प्रजये"त्यादिना कर्मणां मोक्षसाधनत्वनिषेधः । किञ्च—परम्परया साधनत्वकल्पना प्रमाणान्तरमप्यनुसरतीत्याह—येन केनचन यजेतेत्यादिः । अन्तःकरणशुद्धिपरवाक्यजातोपलक्षणार्थः ।

ननु विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कार-विविदिषापक्षयोः को विवेकः? उच्यते—श्रवण-मननध्यानाभ्यासादिसहकारिकारणसम्पत्तावेव संस्कारो विज्ञानं साधयति, तदभावे सत्यभ्युदयमेव, विविदिषायां तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्तं साधनानि सम्पाद्यापि विज्ञानं जनयन्तीति विशेषः[१] ।

१. पञ्चपादिकाविवरण-६८२-६९१ ।

ननु तर्हि कर्माण्यनुष्ठीयमानानि पुरुषसंस्कारतया ब्रह्मज्ञानकार्याणि, अतो धर्मानुष्ठानानन्तरं ब्रह्मजिज्ञासेति चोदयति—भवतु तर्हि संस्कारद्वारेणेति। ननु 'सर्व एते पुण्यलोका भवन्ती''ति स्वतन्त्रपुरुषार्थसाधनानां कर्मणां कथं संस्कारकर्मतया प्रोक्षणादिवद् गुणकर्मता? स्मृतिसामर्थ्यादिति चेत्? न; श्रुतिविरोधात्।

ननु—संस्कारो नाम गुणाधानं मलापकर्षो वा। तत्र 'धर्मेण पापमपनुदति'' 'योगिन: कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये'' इति चात्मनि मलापकर्षसंस्कार: सिध्यति, विध्यन्यथानुपपत्त्या वाऽऽत्मन्यपूर्वगुणाधानं गम्यते। अत: श्रुत्यवगतमेव संस्कारकर्मत्वम्; ''इदं मेऽनेनाङ्गं संस्क्रियते'' इति च श्रुते:। नच क्रत्वङ्गद्रव्यसंस्कारतया नित्यकर्मणामितिकर्तव्योच्यते, येन स्वतन्त्रफलविरोध: स्यात्, किन्तु द्रव्यार्जनविधिवदुपकारमात्रम्—इति?

सत्यम्; पापक्षयापूर्वलक्षणसंस्कारादभ्युदयफले श्रुत्यवगते न ब्रह्मज्ञानशेषता शक्याऽवधारयितुम्। स्मृतिसामर्थ्यादिति।

उच्यते; नित्य-नैमित्तिककर्मानुष्ठानै: संस्कृतस्यात्मनो यदि श्रवण-मनन-ध्यानाभ्यासादीनि ज्ञानसाधनानि सम्पद्यन्ते, तदा संस्कारकर्माणि सहकारिविशेषादात्मज्ञानमवतारयन्ति, यदा तु सहकारिकारणविरह:, तदाऽभ्युदयफलमिति व्यवस्थोपपत्तेर्न श्रुति-स्मृत्यो: परस्परविरोध:।

ननु ''यस्यैतेऽष्टाचत्वारिंशत् संस्कारा:'' इत्यत: ''स ब्रह्मण: सायुज्यं सालोक्यं च गच्छती''ति सालोक्यलिङ्गाद् हिरण्यगर्भावाप्ति: संस्कारकर्मणां फलं गम्यते, न परब्रह्मावाप्ति:, येन सहकारिसामर्थ्यात् कर्मणां पुरुषसंस्कारद्वारेण मोक्षफलता स्यात्?

उच्यते; संस्कारशब्दस्तावद् दधि-व्रीहिसंस्कारवत् स्वतन्त्रफलसाधनाङ्गभूतद्रव्यशेषतां कर्मणां प्रतिपादयति। तत्र सर्वकर्मणां संस्कारतयाऽन्वयात् परिशेषार्थपत्त्या तत्त्वज्ञानशेषतया मोक्षफलता कल्प्यते; ''ब्रह्मण: सायुज्यं सालोक्यमि''ति च फलद्वयोपादानात्। तथाहि भगवान्—''स्वे स्वे कर्मण्यभिरत: संसिद्धिं लभते नर:''इत्युपक्रम्य, ''सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे'' इति चोक्त्वा, ''बुध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य

च । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥'' इति च ब्रुवन् नित्यकर्मभिः संस्कृतस्य सिद्धिशब्दाभिधेयविशुद्धान्तःकरणस्य ध्यानयोगादिसहकारिसम्पत्तौ तत्त्वज्ञानजन्मद्वारेण मोक्षं—दर्शयति । ''स्वे स्वे कर्मणी''ति च नित्यकर्माण्युच्यन्ते । ''संसिद्धि''शब्देन चात्मवैमल्यं ब्रह्मज्ञानयोग्यतापत्तिरुच्यते; परमसिद्धेरुत्तरत्राभिधानात्, योगिनः कर्म कुवन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये'' इत्युक्तत्वाच्च । तथा 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः'' ''ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः'' ''कषाये कर्मभिः कक्वे ततो ज्ञानं प्रवर्तते'' इति च । तस्मात् संस्कारशब्दसामर्थ्यात् स्मृत्यन्तराच्च नित्यकर्माणि कलापकर्ष-गुणाधानलक्षणपुरुषसंस्कारद्वारेणात्मज्ञानयोग्यतामापाद्य, तत्त्वज्ञानजनकतया मोक्षे ज्ञानेन सह समुच्चीयन्ते, यथा ब्रीहिप्रोक्षणादीनि संस्कारकर्माणि दर्श-पूर्णमासस्वरूपोत्पत्तिहेतुतया स्वर्गे समुच्चीयन्त इति ।

ननु प्रोक्षणादिवदेकाधिकारितया गुणकर्मतैव नित्यकर्मणां प्राप्ता? न, ब्रह्मज्ञानस्याविधेयत्वात्; आत्मनः संस्क्रियमाणस्य विधेयकर्मगुणत्वाभावात् । न तर्हि संस्कारकर्मता, विहिताङ्गद्रव्यसंस्कारकर्मसु तत्प्रसिद्धेः? न; अविहितभोजनाङ्गदधि-संस्कारप्रसिद्धेः ।

ननु विध्युद्देशे करणतया विहितानां नित्यकर्मणां करणताविरोधिनी दध्यादिसंस्कारवदात्मज्ञानेतिकर्तव्यता प्राप्ता? नैष दोषः; ''अग्निं चित्वा सौत्रामण्या यजेत'' ''वाजपेयेनेष्ट्वा वृहस्पतिसवेन यजेते''ति सौत्रामणीवृहस्पतिसवयोरन्यत्र करणतया स्वतन्त्रविध्यन्तरविहितयोरग्निचयन-वाजपेयाङ्गतयेतिकर्तव्यतादर्शनात् । तत्र करणेतिकर्तव्यता-विधिवाक्यप्रमाणभेदाद् युक्तं सौत्रामण्यादेरुभयथात्वमिति चेत्? सत्यम्; अर्थविरोधाभावे सति नित्यविधिसामर्थ्यात् संस्कारस्मृत्यमनुमितश्रुतिसामर्थ्याच्च करणता संस्कारतया च स्वतन्त्रफलशेषताऽऽत्मज्ञानेतिकर्तव्यता चेत्युभययथात्वमिहापि कल्प्यताम् । नचान्यार्थद्रव्यसंस्कारमात्रत्वादितिकर्तव्यता; आधानेऽदर्शनात् । संस्कृताग्नेरुद्देश्यत्वात्

तत्रानङ्गतेतिं चेत् ? इहापि संस्कृतं विशुद्धान्तःकरणं विरक्तं विविदिषुमुद्दिश्य ज्ञानसाधनविधानादविरोधः। प्रत्यक्षेण विशुद्धिं प्रत्यक् प्रवणतां च चित्तस्य कर्मफलमवगच्छन् जन्मान्तरानुष्ठितं कर्मानुमाय ज्ञानस्यान्तरङ्गसाधनेषु प्रवर्तिष्यत इति।

तस्माद् यथैव स्तन्त्रविध्यन्तरविहितद्रव्यार्जनस्य सहकारिकारणसम्पत्तिभेदात् क्रतु-भोगयोः शेषत्वम्, तद्वन्नित्यकर्मणामपि सहकारिभेदादात्मज्ञानाभ्युदययोः शेषत्वं न विरुध्यत इति।

योऽपि कश्चित् सर्वसंस्कारवादी वेदान्तार्थसूक्ष्मदूरीकृतविज्ञानो वेदान्तार्थदूषको— न संस्कारार्थानि नित्यानि कर्माणीति—वक्ति; स शास्त्रार्थविभागज्ञाशून्यत्वादुपेक्षणीय इति।

अथवा—सर्वाण्येव कर्माण्युत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकार-विध्यन्तरवद् 'ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'त्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह— यज्ञेन दोनेनेत्यादिना। कथम् ? आत्मतत्त्वापरोक्षानुभवस्तावदिष्यमाणतया स्वर्गादिवद्भावना-साध्योऽगम्यते; पुरुषार्थत्वात् शाब्दज्ञाने तु संजाते तत्कामनायोगात्, असंजाते विषयानवगमादेव तत्र कामनाऽयोगाद्, शब्दावगतेऽपरोक्षज्ञानमिष्यत इति युक्तम्। तच्च प्रयत्नान्तरसाध्यमिति पुरस्ताद् दर्शितम्। तत्र यज्ञादीनामिच्छोपसर्जनतयाऽऽख्यातसमीरितभावनाकरणतयाऽवगतानां साध्येनैवान्वयाद् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि। ततश्च—'आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'ति विधिः साध्येनैवान्वयाद् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि। ततश्च— 'आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'ति विधिः परिणम्यते। नचेच्छामात्रेण संयोगः; तस्या असाध्यमानतावगमात्। नच 'विविदिषन्ती'ति वर्तमानताविरोधः; लेट्परिग्रहेण विधेरेवावगमात्। नच नित्य-काम्याधिकारान्तरविरोधः, एकस्य कर्मणोऽनेकाधिकारविधि-सम्बन्धावगमात्।

ननु कुण्डपायिनामयने "मासमग्निहोत्रं जुह्वती"त्यग्निहोत्रस्य प्रकरणान्तरत्वात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववद्, विविदिषावाक्यस्य च प्रकरणान्तरत्वाद् न

प्रसिद्धाग्निहोत्रादीनामत्र विनियोग: कल्पयितुं शक्यते; अत: कर्मान्तराण्येवेहोत्पत्त्यधिकाराभ्यां सह विधीयन्ते? नैतद्युक्तम्; कुण्डपायिनामयनेऽग्निहोत्रशब्दस्यालौकिकाभिधानत्वादाख्यात-परतन्त्रतया तदुक्तार्थाभिधायिन: स्वातन्त्र्येण प्रदेशान्तरविहिताग्निहोत्रपरामर्शकत्वा-नुपपत्तेराख्यातस्य च जुहोते: सामान्यवाचिन: स्वसन्निहितकारकादिनिरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शित्वायोगात् कर्मान्तरमेव मासगुणविशिष्टं विधीयते इत्युक्तम्, इह त्वध्ययन-यज्ञ-दान-तपोऽनाशकशब्दानां लौकिकाभिधानतया स्वातन्त्र्यात् प्रदेशान्तरविहिताध्ययनादिपरामर्शोपपत्तेस्तान्येव नादृष्टमपेक्षते ; सति प्रमाणकारेण यज्ञाद्यभावाद् ज्ञानोदयादर्शनाभावात् ? नैतत्, दृष्टाकारणक्लृप्तौ ह्यन्वय-व्यतिरेकप्रमाणान्तर्भूतत्वात् केवलव्यतिरेकस्य तदपेक्षा युज्यते, इह तु, सुखस्य दृष्टकारणसम्पत्तौ केवलव्यतिरेकाभावेऽपि विधानादेवादृष्टसापेक्षत्ववत्, सम्यग्ज्ञानेऽपि विधानादेवादृष्टसापेक्षत्वमुपपद्यते ।

ननु कर्मणां विज्ञाने विनियोगद्वाराभावात् विज्ञानफले मोक्षे विनियोग: कल्प्यत इति ? उच्यते; यथा यागादिकर्मणां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्त्यपूर्वाणि कल्प्यन्ते, एवमिहाप्यन्त:करणशुद्धिचित्तैकाग्र्यादिद्वारं कल्प्यतामिति । किञ्च, साक्षाच्छ्रुतज्ञानसाधनत्वानुपपत्तौ तत्फलसाधनत्वकल्पनाद् वरं परम्परयाऽपि तत्साधनत्वकल्पनम्, करणविभक्ते: 'काष्ठै: पचती'ति परम्परया साधनेऽपि दर्शनात्, फलसाधनत्वेऽपि तदयोगात् । नचास्मिन् वाक्ये यज्ञादिसाध्यो मोक्ष: श्रूयते, आत्मा तु ज्ञानकर्मतया तत्साध्योऽवगम्यते, न यज्ञादिसाध्य: । किञ्च, प्रमाणानतरविरोधं परिहृत्यैव श्रुतपरित्यागेनाश्रुतकल्पना युक्ता, अस्ति च "नान्य: पन्था विद्यते" न कर्मणा न प्रजये"त्यादिना कर्मणां मोक्षसाधनत्वनिषेध: । किञ्च, परम्परया साधनत्वकल्पना प्रमाणान्तरमप्यनुसरतीत्याह— येन केनचन यजेतेत्यादि: । अन्त:करणशुद्धिपरवाक्यजातोपलक्षणार्थ: ।

ननु, विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कार-विविदिषापक्षयो: को विवेक:? उच्यते— श्रवण-मननध्यानाभ्यासादिसहकारिकारणसम्पत्तावेव संस्कारो विज्ञानं साधयति, तदभावे

सत्यभ्युदयमेव; विविदिषाया तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्तं साधनानि सम्पाद्यापि विज्ञानं जनयन्तीति विशेषः । भामत्यां स्पष्टमेव विविद्दिषत्यामुपयोग उक्तः । भामतीग्रन्थः पूर्वमुदाहृतः ।

**उभयमतसमीक्षा–**

विविदिषन्तीत्यत्र पञ्चमलकारकल्पनया विध्यवरुद्धायां यज्ञदानादिकरणान्वितायां भावनायां धात्वर्थस्य भाव्याकाङ्क्षापूरकत्वेनान्वये वक्तव्ये प्राधान्यादिच्छाया एव तथांन्वयो न वेदनस्येति भावः । ननु—'यजेत' 'दद्याज्' 'जुहुया'दित्यादौ सर्वत्र धात्वर्थस्य भावनायां कारणत्वेनान्वयस्य दृष्टत्वादिहापि वेदनेच्छायास्तथैवान्वयो युक्तः, यज्ञादिषु तृतीयाश्रवणं तु सोमेन यजेतेत्यादिष्विव धात्वर्थविशेषणतया भविष्यति। नच सोमपयोदध्यादीनां यागहोमनिर्वर्तकतया क्रियाकारकभावो लोकसिद्ध इति युक्तस्तत्र विशेष्यविशेषणभावः, इह वेदनेच्छाया यज्ञादीनां च स न लोकसिद्ध इति न युक्तो विशेषणविशेष्यभाव इति—वाच्यम्, देवताधिकरणे (ब्र.अ.१पा.३सू.२६-३२) वक्ष्यमाणेन न्यायेनैतस्यैव रेवतीषु वारवन्तीयमिति वाक्ये रेवतीनां वारवन्तीयस्य चाधाराधेयभावस्येव यज्ञादीनां विविदिषायाश्च क्रियाकारकभावस्यापि समभिव्याहारादेव सिद्ध्युपपत्तेः । एवं च भाव्याकाङ्क्षायामिच्छाविषयभूतं वेदनमेव भाव्यत्वेनान्वेति । नच वेदनतदिच्छयोः कार्यकारणभावस्य लोके सिद्धत्वाद्विधिवैयर्थ्यं शङ्कनीयम्, प्रतिबन्धकपापापनोदनद्वारा यज्ञादिभिः संपन्नया स्थिरविविदिषया वेदनं भावयेदित्येतदर्थकतया विधिसार्थक्यादिति—चेत्, उच्यते; भावनायाः प्रथमं भाव्याकाङ्क्षायां समानपदोपात्ता प्रधानभूता वेदनसाधनत्वेन निर्ज्ञातगौणपुरुषार्थभावा विविदिषा भाव्यत्वेनान्वेतीति युक्तं, यागादिस्तु समानपदोपात्तत्वेऽपि स्वयं क्लेशात्मकत्वात् फलसानधत्वेनान्यतोऽनवगतत्वाच्च भाव्यत्वेनान्वेतुमयोग्य इति तमतिक्रम्य स्वर्गादेर्भाव्यत्वेन ग्रहणे सति तं केन भावयेदित्याकाङ्क्षायां फलशिरस्कभावनाकरणत्वेनान्वितो भवति । इह यदि भावनायां करणान्तरं श्रुतं न लभ्येत, तदा विविदिषामेव करणं गृहीत्वा तत्साध्यं वेदनं फलं कल्पयेद्,

नत्वेतदस्ति, यज्ञादीनां तृतीयया करणत्वेन समर्पणात् । तेषां भावनाकरणत्वेनान्वये मत्वर्थलक्षणा च परिहृता भवति, अन्यथा तेषां करणविशेषणत्वे सोमवता यागेनेतिवद् यज्ञावत्या विविदिषयेत्यादिरूपेण यज्ञेनेत्यादिसर्वेषु तृतीयान्तेषु मत्वर्थलक्षणा प्रसज्येत। एवं क्लिष्टयोजनायामपि विविदिषा भाव्येति पक्षात् फलतो न विशेष, दध्ना जुहोतीति दधिविशिष्टहोमविधेः प्राप्ताप्राप्तविवेकेन होमसाधनतया दधिविधान इव स्थिरविविदिषासाधनतया यज्ञादिविधान एवास्य पर्यवसानात। तस्माद्यज्ञादिभिर्विविदिषां भावयेदिति स्वर्गकामादिवाक्येषु संप्रतिपन्नं, तत्कस्य हेतोः? लिङादिभिर्विधिशब्दैः कर्मणामिष्टसाधनत्वे प्रतीते किं तत्कर्मसाध्यमिष्टमितीष्टविशेषाकाङ्क्षायां यदिच्छाविषयत्वेन निबद्धं विशिष्योपात्तं च तदेव फलत्वेनान्वेतुं योग्यमिति योग्यतावधारणाद्, योग्यतानुसारेणेच्छामुल्लङ्घ्य तद्विषये करणान्वयस्य अश्वेन जिगमिषतीत्यादौ क्लृप्तत्वाच्च; अयं हेतुरिहापि तुल्य इति—चेत्, उच्यते; यज्ञादीनां ज्ञाने विनियोगेऽपि जिज्ञासा यज्ञादिद्वारवर्गमध्ये अवश्यं निवेशनीया, निवेशिता च टीकायाम्; तथाच जिज्ञासाया यज्ञादिफलत्वेनावश्याभ्युपगन्तव्यत्वात् कामोपबन्धेष यागादिवाक्येषु स्वर्गादेर्भाव्यत्वेनानन्वयेऽन्यतः स्वर्गादिसाधनानवगत्या कामनाया निर्ज्ञातस्वविषयसाधन-प्रवर्त्तकत्वेन गौणपुरुषार्थत्वाप्रतीत्या तस्या भाव्यत्वेनान्वयाऽयोग्यतत्वात्, नामोपात्तस्वर्ग-कामनावैलक्षण्येनेहाख्यातोपात्ताया इच्छायाः फलत्वान्वययोग्यत्वात्, हेतुसाध्यत्व-प्रतीतिसद्भावाच्च प्रधानभूतां तामुल्लङ्घ्य ज्ञानस्य फलत्वाभ्युपगमो न युक्तः, तदभ्युपगमे शास्त्रान्तरसिद्धपापक्षयरूपद्वारातिरिक्तस्यापूर्वरूपस्य कर्मणां द्वारान्तरस्यापि कल्पनापत्तेर्वक्ष्यमाणत्वात् । ननु—जिज्ञासायाः फलत्वान्वययोग्यत्वमसिद्धम्, स्वतःफलत्वरहितायास्तस्याः फलत्वं हि ज्ञानरूपफलजनकत्वोपाधिकं वाच्यम्; तथाच जिज्ञासाफले ज्ञाने प्रागेवेच्छासत्त्वे सैव जिज्ञासेति तस्याः सिद्धत्वात्प्राक् तदसत्त्वे तस्याः फलजनकत्वोपाधिकपुरुषार्थत्वाऽप्रतीतेश्चेति न तस्याः फलत्वान्वययोग्यतेति—चेत्, उच्यते; द्विविधा ब्रह्मज्ञानेच्छारूपा जिज्ञासाः, एका साङ्गाध्ययनादिप्रयुक्तब्रह्मज्ञानपुरुषार्थत्वावगतिमात्रमूला,

साऽनित्यदुःखमये संसारे नित्यसुद्धमयत्वभ्रममुत्पाद्य चित्तसत्त्वं मलिनयता पाप्मना प्रतिबद्धा सती ज्ञानोद्देशेन तदुपायेषु प्रवृत्तिं जनयितुं न प्रभवति। यदा प्रवृत्तिपर्यन्तजिज्ञासादि-प्रतिबन्धकपाप्मसद्भावं शास्त्रतः पुरुषोऽवगच्छति, तदा तथाभूतजिज्ञासोपाय-मन्विच्छन्विविदिषावाक्येन तदुपायं यज्ञादिकमुपलभ्य तथाभूतजिज्ञासोद्देशेन यज्ञादीननुष्ठाय ततः संसारसुखमयत्वप्रदर्शकपाप्मनिवृत्त्या तस्य वस्तुसद्दुःखैकरूपत्वं निश्चित्य तदसहमानस्तज्जिहासामूलामपि ब्रह्मजिज्ञासां लभते, सा द्वितीया। तया ब्रह्मज्ञानोपायेषु प्रवृत्तिः। यथा भोजने सत्येव देहस्थितिबलपुष्ट्यादिकं भवेदिति तादर्थ्यावगतिमात्रमूला धातुवैषम्यकृतरोगविशेषप्रतिबद्ध भोजनेच्छा भोजनार्थप्रवृत्तिं जनयितुं प्रभवति; तत्प्रवृत्तिपर्यन्तबुभुक्षाप्रतिबन्धकरोगसद्भावं यदा वैद्यकादवगच्छति पुरुषः, तदा रोगनिवृत्तिपूर्वकबुभुक्षोत्पत्त्युपायमन्विच्छन् वैद्यकशास्त्रेणैव तथाभूतमौषधमुपलभ्यत तत्सेवनेन रोगनिवृत्त्या क्षुधामुपलभ्य तामसहमानः तन्निवृत्त्यर्थमपि बुभुक्षां लभते, तया च भोजने प्रवर्तते। अतो नात्र काचिदनुपपत्तिः। पापक्षयं ज्ञानमाकाङ्क्षत इति। विविदिषाद्वारेति शेषः। ज्ञाने विनियुक्तेति। ज्ञानार्थविविदिषाविनियुक्तेत्यर्थः। ननु क्लृप्तपाक्षयातिरेकेणोपकारान्तर-स्याऽकल्प्यत्वेऽपि यानि पवित्रष्ट्यग्निष्टुदश्वमेधादीनि कृष्णाजिनदानादीनि कृच्छ्रचान्द्रायणादीनि च सामान्यतः पापक्षयार्थत्वेन चोदितानि काम्यकर्माणि तत्साधारण्यमिह यज्ञादिशब्दानामवर्जनीय-मित्याशङ्क्य नित्यफलपापक्षयातिरेकेणेति पापक्षो नित्यफलत्वेन विशेषितः॥ अवश्यकर्त्तव्यनित्यानुष्ठानजो हि पापक्षयः स्वतः प्राप्तः, अतः प्रयुक्तिलाघवात् तमेव विविदिषार्थयज्ञादिविधिर्द्वारं गृहीत्वा निर्वृणोति, न त्ववश्याननुष्ठेयपवित्रष्ट्यादिफलभूतमपि पापक्षयं द्वारं गृहीत्वा तत्संपादनं प्रयोजयति; अतो नित्यफलस्यैव पापक्षयस्येह द्वारता, यथा ऋत्विगपेक्षः क्रतुविधिर्धनार्जने याजनं स्वकीयोपाय इति तादार्थ्येन स्वतः प्राप्तान्ब्राह्मणानेव गृहीत्वा निर्वृणोति, नतु क्षत्रियवैश्यानपि ऋत्विजो गृहीत्वा तानार्त्विज्ये प्रयोजयतीति ब्राह्मणानामेव क्रतावार्त्विज्यं तद्वत। एवंच यस्य यदा यन्नित्यनुष्ठेयं प्राप्तं, तेन तदा यदेव

विविदिषितार्थतयानुष्ठितं फलार्थं भवति, काम्यानुष्ठानतः प्रसङ्गान्नित्यसिद्धेर्नित्यप्रयुक्तं पापक्षयद्वारमपि लभत इति प्रयुक्तिलाघवान्नित्यानामेव विनियोग इति भावः । ननु—प्राकृतोपकारदृष्टान्तेन पापक्षयस्येह द्वारकत्वकल्पनं न युज्यते; वैषम्यात् प्राकृतपदार्थानाम् उपकारमुखेनैव विकृतिष्वतिदेशः; नतु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न तत्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः, इहतु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टाङ्गानामिव पश्चात्कल्पनीय उपकारः प्रथमाऽवगतविनियोगनिर्वाहायाक्लृप्तोऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्येतेत्याशङ्क्याह—पापक्षयस्य चेति । स्यादेतदेवं यद्यत्र पदार्थशक्तिमालोच्योपकारः कल्प्यः स्याद्, नत्वेवम्; इह पापक्षय एवोपकार इत्यपि प्रत्यक्षशास्त्रेणैव सिद्धत्वादित्यर्थः । ननु ततस्तु तमिति शास्त्रेण पापक्षयस्य ज्ञानोत्पत्तौ द्वारत्वं सिद्धं, नतु विविदिषोत्पत्तौ । उच्यते; विविदिषावाक्यानुरोधेन विशुद्धसत्त्वस्ततो विविदिषाद्वारेण पश्यतीति तस्य शास्त्रस्यार्थ इति तात्पर्यम् । एवं ततस्तु तमित्यादिश्रुतौ विविदिषान्तरर्भावस्तदवतारणार्थे टीकाग्रन्थे विशुद्धसत्त्वस्येत्येतदनन्तरमुत्पन्नविविदिषस्येति विशेषणेन स्फुट इत्याचार्यैरिह न विशेषितम् । अत्र केचित्—संस्कारपक्षमेव सिद्धान्तमभिमन्यमाना विविदिषन्तिवाक्ये विधिर्न कल्प्यः, नित्यकर्मभिः पापक्षयस्य तद्विधिभिः पापक्षयाज्ज्ञानोत्पत्तेस्ततस्तु तं ज्ञानमुत्पद्यत इति रुतिस्मृतिभ्यां च सिद्धेः, अतो विविदिषन्तिवाक्यं तत्सिद्धानुवादकं—इत्याहुः । तन्मतमनूद्य निराकरोति न च वाच्यमित्यादिन । विशेषतः शास्त्रान्तरादसिद्धेरिति । पापान्तरनिवर्तनेनापि चरितार्थान्नित्यानुष्ठान्न ज्ञानोत्पत्तिप्रतिबन्धकपापव्यक्तिविशेषनिबर्हणनियमः सिध्यति; अतस्तत्सिद्धये विनियोगान्तरमित्यर्थः । अत्र संस्कारपक्षावलम्बनैर्विविदिषावाक्यस्य विद्यार्थविनियोगानुपपत्त्यानुवादकत्वं शङ्कितमिति तद्दृष्ट्वा ज्ञानोत्पत्तिप्रतिबधकेत्युक्तम् । शङ्कासमाधानयोर्विविदिषार्थपक्षेऽपि तुल्यत्वात् स्वमते ज्ञानग्रहणं विविदिषोपलक्षणम् । तस्यामेव यज्ञादिविनियोगस्य प्राग्व्यवस्थापितत्वात्, सर्वापेक्षाधिकरणे (ब्र.सू.३/४/२६) चोपपादयिष्यमाणत्वात्, भाष्यकृद्भिरपि विद्यासंयोगात्

प्रत्यासन्नापि विद्यासाधनानि शमादीनि विविदिषासंयोगात्तु बाह्यान्तराणि यज्ञादीनि इति यज्ञादीनां विविदिषार्थत्वस्य वक्ष्यमाणत्वाच्च, तेषां ज्ञाने विनियोगे ज्ञानोत्पत्त्यपेक्षित-सद्गुरुलाभश्रवणादिप्रवृत्तिग्रहणधारणपाटवादीनामपि ज्ञानार्थं यज्ञादिसम्पाद्यत्वापत्त्या तदर्थमपूर्वस्यापि द्वारान्तरस्य कल्प्यतापत्तेश्च । ज्ञानमुत्पद्यत इति स्मृतेर्विविदिषन्ति-वाक्यमूलकत्वोक्तिस्तु पापक्षयाद् विविदिषादयो सति क्रमाज्ज्ञानमप्युत्पद्यते इत्येवंपरा स्मृतिरित्याशयेन[1] ।

तस्माद् कर्मावबोधानन्तर्यं नाथशब्दार्थः ।

ननु ऋणानि त्रीण्याकृत्य मनोमोक्षेनिवेशयेत् । अन्याकृत्य मोक्षं तु सेवमानो व्रजत्यधः । इति स्मर्यते । अनया च अपाकृतर्णस्यैव मोक्षाधिकार श्रवणात् । देवर्षि पितृऋणानां पुत्रयज्ञब्रह्मचर्यैरेवापाकरणमिति तत् प्रयुक्तकर्मानुष्ठानमावश्यकं तच्च न कर्मावगममन्तरासिध्यतीति ब्रह्मजिज्ञासायाः प्राग् कर्मावगमस्य पूर्ववृत्तत्वसिद्धमिति चेत्?

अत्र भामती "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् इति श्रुत्या पूर्वोक्तस्मृत्यपेक्षया प्रबलया न ब्रह्मचारिणः ऋणानि सन्ति येन तदपाकरणार्थ कर्मानुतिष्ठेत् । ननु यथैव यदि वेतरथेत्यादि श्रुतिः ब्रह्मचारिणः परिव्रज्याविधानं बोधयति तथैव 'जायमानो वा ब्राह्मणस्त्रिभिर्ऋणैर्वाजायते" इत्यपि श्रुतिः जायमानशब्देन ब्रह्मचारिणोऽपि ऋणत्रयवत्त्वं बोधयति न चास्याः श्रुतेर्बाधो युक्तः श्रुतित्वादेव । बाधाङ्गीकारे अनयैव यदि वेतरथेत्यादि श्रुतिबाधः कथं नस्यादिति चेन्न यदिवेतरथेत्यादि श्रुतिबलाद् जायमानो ब्राह्मणः इति श्रुतौ गृहस्थः सम्पद्यमान इति व्याख्येयत्वात् । नन्वत्रकोहेतुरिति चेत् तत् श्रुतिस्थ ब्राह्मणशब्दस्य सर्वाश्रमसाधारणवाचकत्वात् ब्रह्मचर्यादवेत्यत्र श्रुतौ ब्रह्मचर्यशब्दस्य विशेषवाचित्त्वात् । उभयोः श्रुत्यो र्विरोधे सामान्यश्रुतौ विशेषश्रुत्यनुरोधात् संकोच आवश्यकः । तथा च ब्रह्मचारिणः ऋणानि सन्तीति व्याख्येयम् । पञ्चपादिकायां तद्विवरणे तावदुक्तम्—एतेन

१. कल्पतरूपरिमल-पृ.६०-६३ ।

ऋणापकरणद्वारेणापि नियमेन पूर्ववृत्तत्वं प्रत्युक्तम् । तथा च श्रुतिस्मृती 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्'' तस्याश्रमविकल्पमेकेब्रुवता इति । पञ्चपादिका । एतद् व्याख्याने विवरणाचार्याः प्राहुः ऋणानि त्रीणीत्यादि स्मृति सक्तश्रुतिविरोधात् अपस्मृतिः । जायमानो वै इत्यादि श्रुतिस्तु अर्थवादः । तथा च ब्रह्मचर्यादेव प्रव्रजेदिति विधि श्रुत्या बाध्यते ।

अत्र विवरणमतम्—''ननु—समानजनमानुष्ठितकर्मावगमोपि ब्रह्मजिज्ञासाधिकार-हेतुर्भवति; एतज्जन्मप्रयुक्तत्वादृणसम्बन्धस्य, अपाकृतर्णत्रयस्यैव च मोक्षाधिकारादिति, तत्राह—एतेन ऋणापाकरणद्वारेणापीति । ननु—''ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः । इति स्मर्यते, सत्यम्; श्रुतिविरोधादपस्मृतिरित्याह—तथा च श्रुति-स्मृति ''यदि वेतरथा ब्रह्मचर्यादेवे'ति । ननु—''जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते'' इति श्रुतिरस्ति, सत्यम्; अर्थवादो विधिश्रुतिविरोधे बाध्यते । किञ्च ऋणशब्देन पुत्र-यज्ञ-ब्रह्मचर्याण्येवोच्यन्ते? किं वा तद्विधय इति ? न तावद् जायमानस्य पुत्रादिसम्बन्धो युज्यते; योग्यानुपलब्धिविरोधात्, नापि तद्विधिसम्बन्धः, विधिप्रतिपत्तिसामर्थ्य-विकलस्याधिकाराभावात्, सामर्थ्यस्य चाधिकारिविशेषणत्वात् । गृहस्थो जायमानस्त्रिभिर्ऋणवा जायत इति चेत्, न, तथा कल्पनायां 'गृहात् प्रव्रजेदि'ति विधिविरोधात् । तत्रापि च पुत्रादिजन्मसम्बन्धितया गृहस्थजन्मनि योग्यानुपलब्धिविरोधः समानः । न च पुत्रादिविध्यनुष्ठान-सामर्थ्याभावाद् गृहस्थ्थजन्मसमये तद्विधिसम्बन्धो युज्यते । जन्मारभ्य पुत्राद्यधिकारसम्पत्तेः प्राग्विराधिविध्यन्तरसम्बन्धपरिहारार्थमिदं वचनमिति चेत्, न; तथाकल्पनायां संन्यासविध्यन्तरविरोधात् । तस्मादर्थवादमात्रमेतत् ।

**सन्न्यासस्यात्मज्ञानाङ्गत्वसाधनम्-**

भामत्याम्—कर्मणां विधिदिषापामुपयोगमुक्त्वा चित्तशुद्ध्यनन्तरं संसारासारता दर्शनेन उत्पन्नोत्कटवैराग्यस्य शमः कारणमुच्यत इति स्मृतिवचनात् सन्यास उक्तः । ''इममेव पुरुषधनैरेयमधिकृत्यप्रववृते श्रुतिः—यदि वा इतरथा ब्रह्मचर्यादेव प्रवजेदिति''

ऋणश्रुतिस्त्वर्थवाद इति । श्रुतौ प्रव्रजेत् संन्यसेदित्यर्थः ।

ननु ब्रह्मचर्यं समाणागृही भवेद् गृही भूत्वा वनी भवेदिति विधिविरोधे कथं ब्रह्मचर्यादेव प्रव्रजेदिति चेन्न तस्य श्रुतिवाक्यस्य विरक्तमुमुक्षुविषयत्वात् सामान्यविधिवचनेन विरोधाभावात् न च विकलाङ्गविषयकोऽसौ प्रव्रज्याविधिः तस्य कर्मानधिकृतत्वादिति वाच्यम् ब्रह्मचर्याद् गृहाद् वनाद् वा प्रव्रजेदित्यविशेषश्रवणात् । अन्धादीनामपि विकलाङ्गानां कर्माधिकारात् न विकलाङ्गत्वं संन्यासनिमित्तम् । तथा च उत्कटवैराग्यमुमुक्षावतामेव संन्यासधिकारः ।

सर्वत्रात्मज्ञानप्रकरणे संन्यासस्य विहितत्वात् आत्मज्ञानाङ्गत्वमात्मज्ञानफलत्वं तस्य सिद्धम् । भामतीकाराणां मते कर्मणां विविदिषायामन्वये आत्मज्ञानेऽन्वाभावे संन्यासः आत्मज्ञानफलः । विवरणमते च कर्मणां ज्ञानपर्यन्तान्वयदर्शनात् । आत्मज्ञानेऽन्वाभावे संन्यासः आत्मज्ञानफलः । विवरणमते च कर्मणां ज्ञानपर्यन्तान्वयदर्शनात् । तस्यापि चित्तशुद्धिद्वारा ज्ञाने उपयोगः तत्त्या गस्यापि श्रवणाद्यङ्गतया आत्मज्ञानफलता । तथा च विवरणमते कर्मणां तत्त्यागस्य चोभयोरत्मज्ञानफलकत्वम् । षोडषिग्रहणाग्रहणोर्थथा क्रत्वङ्गता तथा विकल्पेनोभयोरात्मज्ञानफलत्वं बोध्यम् । अथवा क्रमेण कर्मतत्त्यागयोः आत्मज्ञानोपकारितया समुच्चयः कल्प्यते । द्वारोपकारभेदात् । तत्र कल्मषनिवृत्तिर्द्वारं कर्मणाम् । विशेष कल्पषनिवृत्तिद्वारं श्रवणाद्यनुष्ठानं वेति । अथवा ब्रह्मक्षत्रादि भेदेन व्यवस्था बोध्या । ब्राह्मणस्य कर्मत्यागरूपं संन्यासः क्षत्रियस् वैश्यस्य च असंन्यास इति बोध्यम् ।

ननु संन्यासस्यात्मज्ञानाङ्गत्वमस्तु । तत्र सकलकर्मत्यागस्याङ्गत्वं त्यागेनैकेनामृतत्वमानशुः ब्रह्मचर्यादेव परिव्रजेदित्यादि श्रुतिभिः अविशेषश्रवणात् सर्वकर्मसंन्यासावगमात् । काम्यानां कर्मणां न्यासं संन्यासं कवो विदुरिति स्मृतेश्च काम्यकर्मकस्त्रत्यागस्यस्य संन्यासत्वोक्तेः काम्यकर्ममात्रत्याग आत्मज्ञानाङ्गमिति विचार्यते । सम्यग् न्यासः संन्यासः । न्यासः परित्यागः ब्रह्मपरतया सर्वेषणापरित्यागोन्यासः । सर्वकर्मफलाङ्गपरित्यागो वा न्यासः । सम्यङ्न्यासः

संन्यासः । न्यासे सम्यङ्त्वं विधिपूर्वकत्वम् । ब्रह्मज्ञानपरिपाकाङ्गभूतः संन्यासः सर्वत्रैवात्मविद्याप्रकरणे उक्तः ।

तत्र कस्य परित्यागः कर्तव्यः कस्य नेति भवति जिज्ञासा । तत्र विवरणे—कियत् पुनरत्र परित्यज्यते? स्वशरीरव्यतिरिक्तं सर्वम्"[१] ।

अत्र स्वशरीरशब्देन तद्यात्रानिर्वाहकमैक्ष्य कौपीनाच्छादनादीनां परिग्रहः । शरीरतद्यात्रानिर्वाहकात्यावश्यकभैक्ष्यादावपि संगपरित्याग एवाभीष्टः । तस्मात् यति सर्वसंगवर्जितः । त्यागशब्देन च एषणात्रयत्यागः सर्वसङ्गत्यागो वा गृह्यते । ननु काम्यकर्मत्याग एवोक्तः न तु सर्वकर्मपरित्याग इति चेत् अत्रोच्यते—तत्र सर्वकर्मफलत्याग एव संन्यासोऽभिप्रेते भगवता ।

अतएव संन्यासस्य च महाबाहो । तत्त्वमिच्छामि वेदितुमिति जिज्ञासुनार्जुनेन पृष्टो भगवान् विविधमतनिर्देशपूर्वकं स्वमतं सात्त्विकादिभेदेन निश्चितं तस्मै श्रावितम् ।

**सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ।।१।।**
**काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।।२।।**
**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ।।३।।**
**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम् ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ।।४।।**
**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।।५।।**
**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं तममुत्तमम् ।।६।।**

---

१. विवरण-पृ.६९६ ।

**नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ।।७।।**
**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ।।८।।**
**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा चैव स त्यागः सात्त्विको मतः ।।९।।**
**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ।।१०।।**
**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।।११।।[१]**

तत्र सर्वकर्मफलत्याग एव संन्यास इति निश्चयः । मधुसूदन्यां तत्रत्यश्लोकानां सारः भाष्यानुगुणः संक्षिप्त उक्तः—

तस्माद्यथोक्तं भगवत्पूज्यपादभाष्यकृतं व्याख्यानमेव ज्यायः । तदयमत्र निष्कर्षः— अकर्त्रभोक्तृपरमानन्दाद्वितीयसत्यस्वप्रकाशब्रह्मात्मसाक्षात्कारेण निर्विकल्पेन वेदान्तवाक्यजन्येन विचारनिश्चितप्रामाण्येन सर्वप्रकाराप्रामाण्यशङ्काशून्येन ब्रह्मात्मज्ञानेनात्माज्ञाननिवृत्तौ तत्कार्यकर्तृत्वाद्यभिमानरहितः । परमार्थसंन्यासी सर्वकर्मोच्छेदाच्छुद्धः केवलः सन्नाविद्याकर्मादिनिमित्तं पुनः शरीरग्रहणमनुभवति सर्वभ्रमाणां कारणोच्छेदेनोच्छेदात् । यस्त्वविद्यावान्कर्तृत्वाद्यभिमानी देहभृत् स त्रिविधो रागादिदोषप्राबल्यात्काम्यनिषिद्धादियथेष्ट-कर्मानुष्ठायी मोक्षशास्त्रानधिकार्येकः । अपरस्तु यः प्राक्तसुकृतवशात्किंचित्प्रक्षीणरागादिदोषः सर्वाणि कर्माणि त्यक्तुमशक्नुवन्निषिद्धानि काम्यानि च परित्यज्य नित्यानि नैमित्तिकानि च कर्माणि फलाभिसंधित्यागेन सत्त्वशुद्ध्यर्थमनुतिष्ठन् गौणसंन्यासी मोक्षशास्त्राधिकारी द्वितीयः सः । ततो नित्यनैमित्तिककर्मानुष्ठानेनान्तःकरणशुद्ध्या समुपजातविविदिषः श्रवणादिना

---

१. श्रीमद्भगवद्गीता-अध्यायः १८/१-११ श्लोक ।

वेदनं मोक्षसाधनं संपिपादयिषुः कर्माणि विधितः परित्यज्य ब्रह्मनिष्ठं गुरुमुपसर्पति विविदिषासंन्यासिसमाख्यस्तृतीयः। तत्राद्यस्य संसारित्व सर्वप्रसिद्धं, द्वितीयस्य तु 'अनिष्टं' इत्यादिना व्याख्यातं, तृतीयस्य तु 'अयतिः श्रद्धयोपेतः' इति प्रश्नमुत्थाप्य निणातं षष्ठे। अज्ञस्य संसारित्वं ध्रुवं कारणसामग्र्याः सत्त्वात्। तत्तु कस्यचिजनाननुगुणं कस्यचिज्ज्ञानानुगुणमिति विशेषः। विज्ञस्य तु संसारकारणाभावात्स्वत एव कैवल्यमिति द्वौ पदार्थौ सूत्रितावस्मिञ्श्लोके।[१]

ब्रह्मज्ञानपरिपाकाङ्गभूतः सन्यासः सप्रमाणं ब्रह्मसूत्रतृतीयाध्याये चतुर्थपादे वर्णितः। तथाहि—परामर्शं जैमिनिरचोदना चापवदति हि (३/४/१८) इति सूत्रे ऊर्ध्वरेतसामाश्रमा न श्रूयन्ते। यदिदं त्रयो धर्मस्कन्धाः (छा.२/२३/१) इत्यादि वाक्यं तदपि न ऊर्ध्वरेतसामाश्रयाणां विधायकमपि तु परामर्शमात्रमाश्रमान्तराणाम्। ओंकार एवेहं सर्वमिति प्रणवाख्यस्य ब्रह्मणः प्रस्तुतत्वात् तत्संस्थत्वप्रशंसार्थः परामर्शो वर्णनम्। तत्र त्रयो धर्मस्कन्धा इत्यत्र तावद् यज्ञोऽध्ययनं दानमिति प्रथमः तप एव द्वितीयो ब्रह्मचारी आचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्वं एते पुण्यलोका भवन्तीति परामर्शपूर्वकमाश्रमान्तराणाम् अनात्यन्तिकफलत्वं वर्णयित्वा आत्यन्तिकफलतया ब्रह्मसंस्थता श्रूयते ब्रह्मसंस्थोऽमृतत्वमेति[२]।

एवञ्च जैमिनिमते तद्वाक्यमाश्रमान्तरपरामर्शार्थं न तु चतुर्थाश्रमविधानार्थम्। ननु परामर्शेऽपि आश्रमा गम्यन्त एव तथाहि यज्ञादिलिङ्गो गृहस्थाश्रम एक ब्रह्मचारीति द्वितीयः, तप इति तृतीयो वानप्रस्थः तपः प्रधानत्वात्। स्कन्धशब्द आश्रमवाची त्रित्वश्रवणादिति चेन्न एवमाश्रमणाणां गम्यमानत्वेऽपि स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिरस्ति न तु प्रत्यक्षश्रुतेः। एवञ्च प्रत्यक्षश्रुतिविरोधे तेषा स्मृत्याचाराणामनादरः।

---

१. गीताभाष्य-मधुसूदनीव्याख्या-पृ. ६९१-६९२।
२. छा.उ.-२/२३/१।

किञ्चापवदति हि श्रुतिः प्रत्यक्षा आश्रमान्तरम् "वीरहा वा एष देवानां योऽग्निमुद्मासयते" "आचार्याय प्रियं धनमुपहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः"[१] "नापुत्रस्य लोकोऽस्ति" इत्येवमाधा । एवञ्च सन्दिग्धमाश्रमान्तराभिधानम् इति जैमिनि पक्षं प्रर्दश्य अनुष्ठेयं वादरायणः साम्यश्रुतेः (जै.३/४/१९) विधिर्वाधारणवद् (जै.३/४/२०) इति सूत्राभ्यां वादरायणाचार्यमते गार्हस्थ्यवद् आश्रमान्तराणामपि तुल्यश्रुतेरनुष्ठेयता साधिता । त्तयोधर्मस्कन्धा इत्यादिविधिरेवाश्रमान्तराणां न परामर्श इति च प्रतिपादितम् ।

तत्रत्यभाष्ये भामत्यां कल्पतरौ परिमले च ब्रह्मसंस्थशब्देन परिव्राजको गृह्यते इति विस्तरेण सयुक्तिकं सप्रमाणं प्रतिपादितम् । तत्रत्य भाष्यम्—'तस्मात्पूर्वे त्रयः आश्रमिणः पुण्यलोकभाजः परिशिश्यमाणः परिव्राडेवामृतत्वभाक् । कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत ? रूढ्यभ्युपगमेचाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति । अत्रोच्यते—ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते । तच्च त्रयाणामाश्रमाणां न संभवति; स्वाश्रमविहितकर्मानुष्ठाने प्रत्यवायश्रवणात्, परिव्राजकस्य तु सर्वकर्मसंन्यासात्प्रत्ययवायो न संभवत्यननुष्ठाननिमित्तः । शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्वलको न विरोधी । ब्रह्मनिष्ठत्वमेव हि तस्य शदमाद्युपबृंहितं स्वाश्रमविहितं कर्म यज्ञादीनि चोत्तरेषां, तद्व्यतिक्रमे च तस्य प्रत्यवायः । तथाच 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्'[२] । 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः'[३] इत्याद्या श्रुतयः । स्मृतयश्च—**'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः'**[४] इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति । तस्मात्परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि

---

१. तै.१/११/१ ।
२. नारा.७८ ।
३. मुण्ड. ३/२/६, नारा. १२/३, कैवल्य. ३ ।
४. गीता. ५/१७ ।

दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्येतैव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः। विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा। **'ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा'**[१] इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम्; अविशेषश्रवणात्। पृथग्विधानाच्चानधिकृतानाम्—**'अथ पुरनेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा'**[२] इत्यादिना। ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम्। तच्च दर्शयति—**'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति'**[३] इति। तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः।

एवञ्च सिद्धे संन्यासाश्रमे सर्वकर्मसंन्यासरूपे तस्यात्मज्ञानाङ्गतासिद्धा।

तत्र सर्वकर्मसंन्यासरूप परिव्रज्यायां प्रमाणम्। उक्ता श्रुतिः स्मृतयश्च अनेकाः सन्ति। भवन्ति च स्मृतयः—"त्रिदण्डं कुण्डिकां चैव सूत्रं चाथ कपालिकाम्। जन्तूनां वारणं वस्त्रं सर्वं भिक्षुः परित्यजेत्। कौपीनाच्छादनार्थं तु वासोऽर्थस्य परिग्रहम्। कुर्यात् परमहंसस्तु दण्डमेकं तथैव च॥" इति विष्णुः। काण्वायनश्च—"तत्र परमहंसा नाम त्रिदण्डकमण्डलुशिक्यजलपवित्रपात्रपादुकाशनशिखायज्ञोपवीत- कपालानां त्यागिनो न तेषां धर्माधर्मौ न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चना यथोपपन्नभैक्षाहाराश्चातुर्वर्ण्य भैक्षपर्यं चरन्त आत्मानं मोक्षयन्त" इति। विष्णुकाण्वयनस्मृत्योश्च शिष्टपरिगृहीतयोरनाप्तप्रणीतत्वं शङ्कमानस्य स्वकीयब्राह्मणत्वेऽप्यनाश्वासः स्यात्। स्मरति स्म भगवान्व्यासः—"यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः। उपकुर्वाणकात्पूर्वं यतो लोके न दृश्यते॥ यावत्कर्माणि कुरुते तावदस्यैव धारणा। तस्मादस्य परित्यागः क्रियते कर्मभिः सह॥ अग्निहोत्रविनाशे तु

---

१. जाबा.४।

२. जाबा.४।

३. जाबा.५।

जुह्वादीनि यथा त्यजेत् । यथाच मेखलादीनि गृहस्थाश्रमवाञ्छया ।। पत्नीयोक्त्रं यथोष्ट्यन्ते सोमान्ते च यथा ग्रहान् । तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः ।।'' इति महाभारतेऽपि— ''एकदण्डी त्रिदण्डी वा शिखी मण्डित एव वा । काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर ।।'' तथा—''जटाऽजिनधराश्चान्ये पङ्कदिग्धा जितेन्द्रियाः । मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ।।'' इति राजधर्मप्रसंशार्थमुत्तमाश्रमपरामर्शः । लैङ्गेऽपि पुराणे— ''ततो व्रतानां परमहंसव्रतमनुत्तमम् । तेभ्यो ददौ दिवौकोभ्यः सतामप्यविरोधि यत् ।। पठ्यते यजुःशाखायां महत्पैतामहं व्रतम् । परं ब्रह्मोदितं तद्वदागमाचारचेष्टितम् ।। ब्रह्माराधनमुख्यानां व्रतिनां तीव्रतेजसाम् । भृगुरध्यापयामास वेदाक्तं परमं हितम् ।। एवं व्रतधराः सर्वे वसन्ति स्माऽमरेश्वराः । हंसव्रतधरा भूत्वा ध्यायमानाः परं पदम् ।। हित्वा शिखां सोपवीतां विधिना परमेण ते । कालेन महतां ध्यानादेवं ज्ञानात्मतां गताः । ये चात्र हंसव्रतिनो नियताः संयतेन्द्रियाः । एवं भिक्षां तु भुञ्जाना ध्यायमानाः परं पदम् ।। दण्डहस्तातु संजाता भिक्षाव्रतसमन्विताः । त्यक्त्वा शिखां सोपवीतां दण्ड एकः करे घृतः ।। हंसव्रतं परं प्रोक्तं पुरा चीर्णं मया चिरम् । व्रतानां परमं गुह्यं पवित्रं पापनाशनम् ।। हंसव्रतं द्विषन्मोहात्पापेनाच्छादितो नरः। न स मुच्येत पापेन कल्पकोटिशतैरपि ।। तस्माद्धंसव्रतानां तु न हन्यान्न च दूषयेत् । भिक्षां परमहंसानां यतीनां यः प्रयच्छति ।। विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् । शिखां यज्ञोपवीतं च त्यक्त्वा चरति यो व्रतम् ।। हंसव्रती स विज्ञेयो मोक्षकामी भवेच्च सः । शिखायज्ञोपवीतेन त्यक्तेनासौ कथं द्विजः ।। निन्द्यते देवलोकेषु पूजितो देवदानवैः । दुष्टं विशिष्टमथवा हंसव्रतधरं नरम् ।। न स्पृशेदङ्गमङ्गेन देवरूपः स वै द्विजः ।।''

**कर्मावबोधब्रह्मजिज्ञासयोः पौर्वापर्यनिरासः–**

ननु कर्मावबोधब्रह्मजिज्ञासयोः हेतुहेतुमद्भावप्रयुक्तस्य आनन्तर्यस्याभावेऽपि क्रमप्रतिपत्त्यर्थो भविष्यति, अथशब्दः । क्रमाश्च श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभेदात् षट् ।

तत्रान्यतमक्रमबोधार्थमपि नाथशब्द इति क्रमस्या विवक्षितत्वात्—तथा च भाष्यम्—"यथा च हृदयाद्यवदानानामानन्तर्य नियमः क्रमस्य विवक्षितत्वात्, न यथेह क्रमो विवक्षितः।

अयमाशयः—विनाऽपि पूर्ववृत्तहेतुताम् अथशब्दश्रवणात् आनन्तर्यविवक्षा सम्भवति यथा हृदयाद्यवदाने। यदि तत्र क्रमस्य विवक्षा स्यात्। अस्ति च तत्र विवक्षा। प्रकृते तु कर्मावबोध जिज्ञासयोः क्रमविवक्षा नास्तीति।

तत्र भामती—स्यादेतत्-मा भूदग्निहोत्र यवागूपाकवदार्थक्रमः, श्रौतस्तुभविष्यतीत्यादि।

तत्र कर्मावबोधब्रह्मजिज्ञासयोः प्रथममार्थ क्रमो निषिद्धः।

आर्थक्रमः मीमांसायां पञ्चमाध्याये स्थितः **अर्थाच्च** (जै. ५/१/२) अग्निहोत्रं जुहोति यवागूं पचतीति श्रूयते। तत्र किं होमपाकयोः यथापाठं क्रमः उत पाकः प्रथम इति संशये पाकप्राथम्यनियामकाभावात् होमस्य च द्रवन्तरेण सम्भवात्। यवागूपाकस्य चारादुपकारकत्वाद् होमस्य यथापाठं प्राथम्ये प्राप्ते राद्धान्तः—'**अग्निहोत्रं जुहोति**' इति होम मनुष्ठापयन् अयं विधिर्होमस्य प्रयोजनमाकाङ्क्षते। प्रयोजनं विना विधेस्तदनुष्ठापकत्वाभावात् एवं प्रयोजनमाकाङ्क्षमाणोऽयं विधिः प्रयोजनोपयोगिनः क्रममुपस्थापयति पक्त्वैव होतव्यमिति। यवाथवा होमेन प्रयोजन लाभात्। द्रव्यान्तरेण होमे तु श्रुत यवागूद्रव्यवैयर्थ्यदृष्टार्थत्वमिति वाच्यम्। समभवति दृष्टार्थकत्वे तदकल्पनात्। यवाऽवादृष्टहोमनिर्वृत्त्यनन्तरं च होमस्यादृष्टद्वारा प्रयोजनसम्पादकत्वसम्भवात्। तस्माद् यवागूपाकः एव प्रथमः पूर्वं श्रुतोऽपि होमः पश्चादित्यार्थक्रमः।

अत्र च नार्थक्रमः सम्भवति, आगमाभावाद्। नास्त्यत्र कर्मावबोध ब्रह्मजिज्ञासायोरार्थ क्रमप्रतिपादने कश्चिद् अग्निहोत्रं जुहोति यवागूं पचती इति वाक्यवद् आगमवाक्यम्।

ननु आर्थक्रमाभावेऽपि श्रौतक्रमो भविष्यति। तद्यथा—गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेद् इति जाबालश्रुतिः। गार्हस्थ्येन हि यज्ञानुष्ठानं सूचति। अनुष्ठानस्य च यज्ञावबोधपूर्वकत्वात्। प्रवजनेन च ब्रह्मजिज्ञासा सूचिता। तथा च उक्त श्रौनवाक्ये क्त्वा

श्रुत्या श्रौतक्रमः कर्मावबोधब्रह्मजिज्ञासयोर्गम्यते। स्मरन्ति च—"अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्यधर्मतः दृष्ट्वा च शक्तितो यज्ञैर्मनोमोक्षे निवेशयेद्" इति निन्दन्ति च—

अनधीत्य द्विजोवेदान् अनुत्पाद्य तथात्मजान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः। तस्मात् श्रोतक्रमाबोधार्थमथशब्दोऽत्रभविष्यतीति चेन्न क्रमस्याविवक्षितत्वात्। यथाहि—हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इत्यादौ हृदयाद्यवदानस्थले अथाग्रशब्दाभ्यां क्रमो विवक्षितः न तथेह क्रमो विवक्षितः। नच क्रमोनविवक्षित इति कथमुच्यते गृहीभूत्वेत्यादादावपि क्त्वा श्रुत्या विवक्ष्यतामितिवाच्यम्।

श्रुत्या तथाऽनियमप्रदर्शनात्। 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वा"। इत्यत्र वा शब्देन उक्त नियमाप्रदर्शनात्। अपि तु अनया श्रुत्या वैराग्यमुपलक्ष्यते यदैव वैराग्यं तदैव प्रव्रजेदिति। अतएव "यदहरेव विरजेत् तदहरेव प्रवंजेदिति श्रुतिः। पूर्वोदाहृत निन्दावचनञ्च अविशुद्धसत्त्वाभिप्रायम्।

एवञ्च न श्रौतो नार्थः क्रमोऽत्र भविष्यति तस्याविवक्षितत्वादेव।

ननु तर्हि पाठादिक्रमोऽस्तु। तेषामुदाहरणानि यथा—"क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्'। "समिधो यजति"। तनूनपातं यजति। इडो यजति। बर्हिर्यजति। स्वाहाकारं यजति"। इत्येवं क्रमेण प्रजायाः पठ्यन्ते। तत्र संशयः—किमुक्तक्रमेण पठितेषु प्रयाजेषु थापाठमनुष्ठानक्रमः? उत नेति? तत्र "समिधो यजति" इत्यादिवाक्यानां स्वार्थमात्रपरत्वेन क्रमपरत्वाभावात् पठनस्यानियमेन यथेच्छमनुष्ठानमिति पूर्वपक्षे प्राप्ते, राद्धान्तः;—यथैतानिवाक्यानि स्वार्थविधायीनि, तथाऽनुष्ठानापेक्षस्मृत्युपयोगीन्यपि भवन्ति, अस्मृतस्यानुष्ठानासंभवाद्अनुष्ठानस्य स्मृतिसापेक्षत्वम्। एवंच तानि वाक्यान्युक्तक्रमवत्तया "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायाध्ययनविध्यध्यापितानि सन्ति, स्मृतस्य चानुष्ठानमिति स्मरणक्रमेणानुष्ठानं नियम्यते। एवं च पाठक्रमेण स्मरणजनकतया दृष्टार्थः, इति पाठक्रमेणैवानुष्ठानक्रम इति नियमाद् न यथेच्छामनुष्ठानमिति। सूत्रार्थस्तु—एकस्मिन्

क्रतौ श्रूयमाणानां प्रयाजानां पाठक्रमस्यानुष्ठानक्रमो नियमयन्ति; तस्य पाठक्रमस्यानुष्ठानक्रमगुणतया लोकेऽवगमाद्, यथा 'स्नायादनुलिम्पेद् भुञ्जीत'' इति।

''स्थानाच्चोत्पत्तिसंयोगात्''। ज्योतिष्ठोमाधिकारे साद्यस्क्रसंज्ञे यागे 'प्रकृतिवद् विकृतिः कर्तव्या' इत्यतिदेशतः प्राप्तेष्वग्निष्टोमीय-सवनीयानुबन्धयपशुषु सहत्वगुणविधानार्थं वचनं श्रूयते—'सह पशूनालभते' इति; सहत्वविधानाच्च प्रथममग्नीषोमीयः, ततः सवनीयः, तत आनुबन्ध्य इत्येवं रूपः प्रकृतौ श्रूयमाणक्रमो निवर्तते। सहत्वं च सवनीयस्थाने सवनीय उपकर्तव्ये तेन सहेतरयोरुपाकरणमिति। एवं च सति तयोरग्नीषोमीयानुबन्ध्ययोस्तुल्यवत् स्वस्थानचलनं भवति; सवनीयश्चाश्विनग्रहणानन्तरकालः प्रकृतावाम्नायते—''आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति'' इति। तत्र त्रयाणामेककालत्व-लक्षणसहत्वासंभवाद् ईषत्कालभेदं पुरस्कृत्य क्रमेण त्रयोऽप्युपाकर्तव्याः। एवं क्रमेऽवश्यं भाविनि सति, कः प्रथमं प्रयोज्यताम्? किं त्रयाणां मध्येऽनियमेन यस्य कस्यचित् प्राथम्यम्? उत सवनीयस्य? इति संशयः। तत्र नियामकश्रुत्याद्यभावादनियमे प्राप्ते, राद्धान्तः— सवनीयस्थान इतरयोः सहत्वमित्युक्ततया स्थानात् तत्सवनीयप्राथम्यं नियम्यते। उत्पत्तिसंयोगादपि सवनीयप्राप्राथम्यं नियम्यत इत्याह सूत्रे उत्पत्तिसंयोगादिति॥ सूत्र चकार उत्पत्तिसंयोगादित्यनेन सम्बध्यते। प्रकृतौ हि समवनीयस्याश्विनग्रहणानन्तर्य-मुत्पत्त्याऽवगतम्; अतो विकृतावपि तेनैव कालेन सवनीय उपस्थापितः। अग्नीषोमीयस्तु सहवचनेन स्वस्थानाच्चालितः। ततः सवनीयस्यैव प्रथममुपाकरणादिप्रयोगः। इतरयोस्तु तत्साहित्यवचनादानन्तर्यम्। मिथस्त्वनियमः। अथवा इतरयोः प्रकृतिदृष्टपौर्वापर्यस्यासति बाधके त्यागायोगात् प्रथममग्नीषोमीयमुपाकृत्य, आनुबन्ध्य उपाकर्तव्य इति॥

''मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्''। ''सारस्वतौ भवतः। एतद्वै दैव्यं मिथुनम् यत्सरस्वती च सरस्वांश्च''इति सरस्वतीदैवतं सरस्वद्दैवतं च युगपत् कर्मद्वयं श्रूयते। तत्र सरस्वतीदैवतस्य कर्मणः याज्यापुरोनुवाक्यायुगलं प्रथमाम्नायते, तदनन्तरं पुंदैवतस्य।

तत्र मन्त्राणां प्रयोगशेषत्वाद् याज्यानुवाक्यापाठक्रमेण प्रधानक्रमोऽवगतः, अङ्गविशेषे तु निर्वापादौ संशयः—किं अनियतोऽस्य निर्वापादेः क्रमः ? उत प्रधानक्रमेण नियत इति? तत्र तत्र याज्यानुवाक्यापाठक्रमस्य प्रधानक्रमगोचरत्वाद् अङ्गानामनुष्ठानक्रमे श्रुत्याद्यभावाद् अनियत एवं निर्वापादेरङ्गस्य क्रमः। नच—मुख्यक्रमादङ्गक्रमोऽवगन्तव्य इति—वाच्यम्; मुख्यक्रमस्य प्रमेयत्वेन प्रमाणत्वाभावेन तस्य तदङ्गक्रमाप्रमाणकत्वात्। तस्मादनियत एव निर्वापादिकाङ्गक्रम इति प्राप्ते, राद्धान्तः—मुख्य क्रमेणाङ्गानां क्रमो नियम्येत, तदर्थत्वात्=प्रधानार्थत्वादङ्गानाम्। ननु—मुख्यक्रमस्य नाङ्गक्रमप्रमापकत्वम्, तस्य याज्यानुवाक्यापाठक्रमप्रमेयतयाऽप्रमाणत्वादित्युक्तमिति—चेत् न; प्रमितस्य तस्य धूमादिवद् लिङ्गविधया प्रमाणत्वसंभवेन प्रमापकत्वसंभवात्। किंच कर्ममात्रबोधको विधिरुत्पत्तिविधिः, अधिकारसम्बन्धबोधको विधिरधिकारविधिः, अङ्गत्वबोधको विधिर्विनियोगविधिः, साङ्गप्रधानकर्मानुष्ठापको विधि; प्रयोगविधिः, इत्येवं विधिचातुर्विध्यात् तन्मध्ये साङ्गप्रधानमनुष्ठापयन् प्रयोगविधिरवर्जनीयाद् व्यवधानादधिकं व्यवधानं न सहते, इति न निर्वापादेरङ्गस्यानियतः क्रमः; अनियतक्रमेण प्रधानान्तरसन्निधौ प्रधानान्तराङ्गानुष्ठान-व्यवधानापत्तेः। अतो मुख्यक्रमादङ्गक्रम इति ॥

"प्रवृत्त्या तुल्यकालानां गुणानां तुदपक्रमात्"। वाजपेये—"सप्तदश प्राजापत्यान् पशूनालभते" इति सप्तदश यागा अङ्गत्वेन श्रूयन्ते। तेषां च "वैश्वदेवीं कृत्वा सह प्रचरन्ति" इति प्रयोगसाहित्यश्रवणाद् एकोपक्रमोपसंहारा एवावान्तरप्रयोगाः। तेषां चातिदेशतः प्राप्ता अङ्गभूताः प्रोक्षणादिधर्माः सर्वे नैकैकत्र पशौ परिसमापनीयाः, किन्तु सर्वेषु पशुषु प्रथममेक एवाङ्गपदार्थः समापनीयः, पश्चात्ततोऽन्यः, पश्चात्तोऽन्यः; अन्यथैकैकस्मिन्नेव पशौ सर्वाङ्गानुष्ठाने प्रधानस्याङ्गैर्विप्रकर्षः स्यात्। तत्र सर्वेषु पशुषु प्रथममेकाङ्गपदार्थानुष्ठाने विशेषतो वेदाभ्यनुज्ञाभावादिच्छैव नियामिका, तदेवं स्थिते द्वितीयादिकेऽङ्गपदार्थप्रयोगे संशयः—किं प्रथम इव द्वितीयेऽपीच्छैव नियामिका? उत प्रथमाङ्गप्रवृत्तिर्यत्प्रकारेण,

तत्प्रकारेणैवं द्वितीयादीतराङ्गप्रवृत्तिरिति? प्रथमाङ्गप्रवृत्त्यैव नियम इति तत्र पूर्वपक्षः। न तावत् प्रथमाङ्गप्रवृत्तौ श्रुत्यादिकं नियामकमस्ति, किन्तु पौरुषेयी प्रथमाङ्गप्रवृत्तिः, अतः सा वेदेन नाभ्यनुज्ञायते। तथाच न प्रथमाङ्गप्रवृत्तिनियता तदुत्तराङ्गप्रवृत्तिः। तेन प्रथमाङ्गप्रवृत्तौ यथेच्छा नियामिका, तथोत्तराङ्गप्रवृत्तावित्यनियम एव। प्रयोग सौकर्यं चैवं सति लभ्यते, अन्यथा प्रथमप्रयोगानुसन्धानव्यग्रमनस उपरितन च प्रयोगं प्रथमाङ्गप्रयोगादिं तन्वानस्य मतिक्लेशः स्यात्। तस्मादिच्छैव नियामिकेत्यनियम इति प्राप्ते, राद्धान्तः—एकप्रयोगतया तुल्यकालानां प्रोक्षणादिकाङ्गानां प्रवृत्त्या क्रमनियमः=प्रथमाङ्गप्रवृत्तिर्यत्क्रमेण तत्क्रमेणैव तदुत्तराङ्गानामपि प्रवृत्तिरित्यर्थः। तत् कुतः? तदुपक्रमात्=प्रधानेनाङ्गानामुपक्रमात्; तदेकप्रयोगत्वादित्यर्थः। सप्तदशयागाङ्गानि सह प्रयोज्यानि प्रथमाङ्गानुष्ठाने सति द्वितीयादौ षोडशभिर्व्यवधानमभ्युजानन्ति, न ततोऽधिकम्, प्रवृत्तिक्रमाश्रयणे च सप्तदशसु प्रथमादिषु पशुषु प्रथमाङ्गानुष्ठाने द्वितीयो धर्मः प्रथमादिषु पशुषु क्रियमाणः षोडशभिरेव व्यवधीयते, क्रमान्तराश्रयणेऽधिकैरपि व्यवधानं स्यात्। अतोऽनुष्ठापकप्रयोगवचनकोपपरिहाराय प्रथमाङ्गप्रवृत्त्या नियम इति।[1]

तथैव कर्मावबोध ब्रह्मजिज्ञासयोरपि क्रमः स्यादिति चेन्न प्रकृते कर्मज्ञानब्रह्मजिज्ञासयोः शेषशेषिभावे प्रमाणाभावात्। शेषशेषिभावः अङ्गाङ्गिभावः। शेषाणां समिक्षादीनां शेषिणामङ्गिनाम् आग्नेयादीनां दर्शे त्रयाणाम् आग्नेयभृत दधियागानां पौर्णमास्याम्। आग्नेयाग्नीषोमोपांशुयाजानां त्रयाणामाहत्य षण्णां यथा शेषशेषिभावः तथा न प्रकृते। तत्र हि ते षडपि यागाः एक प्रयोगवचनोपगृहीता दर्शपूर्णमासाभ्यां स्वर्गकामो यजेदित्येकप्रयोगवचनेन गृहीताः। एकाधिकारिकर्तृकाः स्वर्गकामलक्षणैकाधिकारिकर्तृकाः एकपौर्णमास्यामावस्याकालसम्बद्धाः। तेषां युगपदनुष्ठानं न सम्भवतीति क्रमोऽपेक्षितः। तत्र सामर्थ्यात् क्रमप्राप्तौ तद्विशेषापेक्षायां पाठस्थानमुख्यप्रवृत्तिरूपाःक्रमा अपेक्षिता। यतः एकफलवदुपकारोपगृहीता। एककालेऽपि

१. ऋजुप्रकाशिका-पृ. ७०१-७०२।

यदि भिन्नकर्तृकाः स्युस्तदा क्रमो नापेक्ष्येत किन्तु एककर्तृका एव ते अतः अङ्गाङ्गिभावमापन्नानां तेषां सामर्थ्यात् पाठादिक्रमनियमः ।

प्रकृते तु कर्मबोधब्रह्मजिज्ञास्यायां शेषशेषित्वे प्रमाणं श्रुत्यादि किमपि नास्तीति न क्रमबोधकोऽथ शब्दः ।

यत्र च न शेषशेषिभावः नाप्येकाधिकारावच्छेदः तत्र क्रमभेदापेक्षाभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम् । अवर्जनीयतया तस्य तत्रागतत्वात् । यथा सौर्यार्यमण प्राजापत्यादीनाम्[१] । अयं भावः पञ्चमे तृतीयपादे एकादशाधिकरणे **''अङ्गवत् क्रतूनामानुपूर्व्यम्''**[२] इत्यत्र सौर्यं चरूं निर्वपेत् ब्रह्मवर्चस कामः आर्यमाणं चरूं निर्वपेत् स्वर्गकामः, प्राजापत्यं चरां निर्वपेत् शतकृष्णलमायुष्काम इत्यादिषु क्रमपठित क्रतुषु चिन्ता । किं पाठक्रमेण प्रयोज्या, उतानियमेनेति । तत्र यथाङ्गानां समिदादीनां एकेन युगपत् करणाशक्तेः क्रमाकाङ्क्षायां पाठात् क्रमनियमः, एव उक्त क्रतूनामपि पाठात् क्रमनियमे प्राप्ते राद्धान्तः—**'न वाऽसम्बन्धात्'**[३] तेषां क्रतूनां एकप्रयोगवचन सम्बन्धाभावात् नास्ति क्रमाकाङ्क्षा, किन्तु पुरुषस्य अङ्गेषु च चैकप्रयोगवचनपरिग्रहात् अस्ति क्रमाकाङ्क्षाक्रतुषु नानाफलेषु नैकप्रयोगवचनोऽस्ति । नहि सर्वे मिलित्वा प्रयोजयन्ति । पाठक्रमस्तु अध्ययनार्थः । युगपद्यागसम्भवेन अवर्जनीयतया पाठक्रमस्यावगतत्वात् तन्नियमस्य च अध्ययनार्थत्वात् इति भावः ।

ननु शेषशेषिभावाभावेऽपि क्रमनियमो दृष्टः । यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथा वा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजते इति दर्शपौर्णमास सोमयोरशेषशेषिणोरित्यत आह—'अधिकृताधिकारे वा प्रमाणाभावाद् इति योजना'[४] ।

१. भामतीपृ.६७ ।
२. जै.५/३/३२ ।
३. जै.५/३/३३ ।
४. भामती पृ.६८ ।

अयं भावः—गोदोहनस्य पुरुषार्थत्वं चतुर्थे चिन्तितम्। "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्"। दर्शपूर्णमासयोः "गोदोहनेन पशुकामस्य प्रणयेत्" इति श्रूयते। तत्र संशयः—किमिदं गोदोहनं क्रत्वर्थम्? पुरुषार्थमपिचेति। "चमसेनापः प्रणयेत्" "गोदोहनेन पशुकामस्य" इति वाक्यात् पशुकामस्येति कामना श्रुतिसमभिव्याहृतात् क्रत्वर्थ-पुरुषार्थत्वप्रतीतेरुभयार्थत्वम्। नच—पुरुषार्थत्वमेव न क्रत्वर्थत्वमिति—वाच्यम्? अप्प्रणयनस्य क्रत्वर्थत्वं सिद्धमेव, गोदोहनविशिष्टाप्प्रणयनं तु कामनाश्रुतिबलात् पुरुषार्थमपीत्युभयार्थं गोदोहनमिति पूर्वपक्षे प्राप्ते, राद्धान्तः—पुरुषार्थमेव गोदाहनम्; पशुकामस्येति कामनाश्रुतिसमभिव्याहारात्, कम्यमानस्य फलत्वेन तदुक्त्या पुरुषार्थत्वस्यावश्यवक्तव्यत्वात्, न क्रत्वर्थम्; क्रत्वर्थत्वं हि क्रतुशेषत्वम्, क्रत्वङ्गत्वमिति यावत्। नच गोदोहनं क्रत्वङ्गम्, येन क्रत्वर्थं स्यात्, किंतु पश्वङ्गमेव। नच—क्रत्वङ्गत्वाभावे क्रतूपकारकत्वं गोदोहनस्य न स्यादिति—वाच्यम्; क्रत्वनङ्गस्यापि गोदोहनस्याप्प्रणयनद्वारा क्रतूपकारकत्वे विरोधाभावात्। तस्मात् पुरुषार्थमेव गोदोहनमिति। सूत्रार्थस्तु यस्मिन्निर्वृत्ते पुरुषप्रीतिः फलं भवति, तल्लिप्सा फलप्रयुक्ता, न विधिप्रयुक्ता, कुतः? तस्य फलसाधनस्य प्रीत्याऽविभक्तत्वादिति। एवं च चमसेनाप्प्रणयनं यत्क्रमेण, तत्क्रमेणैव पशुकामस्य गोदोहनेनाप्प्रणयनमित्यङ्गाङ्गिभावाभावेऽपि यथा क्रमः, तथा धर्मब्रह्मजिज्ञासयोरपीत्यखण्ड-वाक्यार्थः। अङ्गाङ्गिभावाभावेऽपि क्रमदर्शनमुदाहरणान्तरेणाप्याह—यथावेति। चतुर्थे चिन्तितम्—"उत्पत्तिकालविशयेकालः स्याद्वाक्यस्य तत्प्रधानत्वात्"। "दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति श्रूयते। तत्र संशयः—किमिदमङ्गस्य विधायकम्? उत कालस्येति? तत्र इष्ट्वेति क्त्वाश्रुतिबलादङ्गस्यैव विधायकम्। तच्चाङ्गत्वं 'यजती'ति विधिप्रत्यासत्तिमहिम्ना सोमस्यैव, न दर्श-पूर्णमासयोः; ननु—द्रव्यद्वारेणान्यत्र सोमयागस्य विहितत्वाद् विहितस्य प्रत्यभिज्ञानमात्रमिह 'सोमेने'त्यनेन क्रियते, न तद्विधिरिति—चेत्, न; तत्कार्यस्येहाप्रत्यभिज्ञानात्, "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इतिवत्। ननु—दृष्टान्ते चान्यत्र विहितस्य वृहस्पतिसवस्य

कार्यं ''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'' इत्यत्र किमिति न प्रत्यभिज्ञायत इति—चेत्, न; तत्प्रत्यायकाभावात्। नह्यत्र वृहस्पतिसवकार्यब्रह्मवर्चसप्रत्यायकमस्ति। अतो बृहस्पतिसवो वाजपेयस्य, एवं सोमयागोऽपि दर्शपूर्णमासाङ्गत्वेन विधीयत इति प्राप्ते, राद्धान्तः—अस्मिन् कालाङ्गविधिसंशये कालो विधेयः स्यात्; कुतः? अस्य वाक्यस्य कालप्रधानत्वात्। ''दर्श-पूर्ण-मासाम्भायामिष्ट्वा सोमेन यजेत'' इत्यनेन दर्श-पूर्ण-मासान्तरकालः सोमयागस्य विधीयते, न सोमयागो दर्शपूर्णमासाङ्गत्वेन विधीयत इत्यर्थः। यदि सोमयागलक्षणाङ्गकर्मैव विधीयेत, तदा द्रव्यदेवते हि यागस्य स्वरूपमिति तत्स्वरूपभूताभ्यां द्रव्य-देवताभ्यां भवितव्यम्। नचेह तदस्ति; देवताया अप्रतीतेः अथाव्यक्त्वेन ''उद्भिदा यजेत'' इत्यादौ यथाऽतिदेशतो देवता प्राप्यते, तथा सोमिकी देवताऽत्रातिदेशतः प्राप्यत इति—चेत्, तर्हि सोमोऽप्यतिदेशेनैव प्राप्यत इति 'सोमेने'ति व्यर्थ स्यात्। अतः सोमेनेत्येतत् सोमयागप्रत्यभिज्ञानार्थमेव। तत्प्रत्यभिज्ञाने न सोमयागलक्षणाङ्गविधिसंभवः। ननु—एवं वृहस्पतिसवोऽपि वाजपेयाङ्गत्वेन न विधीयत इति—चेत्, अत्रोच्यते—वृहस्पतिसवप्रकरणाद् भिन्नवाजपेयप्रकरणे बृहस्पतिसवस्य श्रुतत्वेन प्रकरणान्तरन्यायेन कर्मविधानसंभवात्। नच—वृहस्पतिसवनामधेयेनैव प्रसिद्धबृहस्पतिसवप्रत्यभिज्ञानाद् न बृहस्पतिसवाख्याङ्गकर्मविधिरिति—वाच्यम्; तस्य यजिपरतन्त्रतया तत्प्रत्यभिज्ञानार्थत्वाभावात्, परं तु बृहस्पतिसवनाम्ना प्रसिद्धबृहस्पतिसवधर्मा अत्र समाकृष्यन्ते। तस्माद् युक्तं तत्र बृहस्पतिसवाख्याङ्गकर्मविधानमिति। एवं च तद्वद् ''दर्श-पूर्णमासाभ्यामिंष्ट्वा सोमेन यजेत'' इत्यत्राङ्गाङ्गिभावाभावेऽपि यथा क्रमः, तथा धर्म-ब्रह्मजिज्ञासयोरपीति शङ्कार्थः।

ननु शेषशेषित्वाधिकृताधिकाराभावेऽपि क्रमो विवक्षितः स्यात् यदि एकफलावच्छेदो भवेत्। यथा आग्नेयादीनां षण्णामेकस्वर्ग फलावच्छिन्नानां, यदि वा जिज्ञास्य ब्रह्मणोऽंशो धर्मः स्यात्। यथा चतुर्लक्षणी व्युत्पाद्यं ब्रह्म केनचिद् केनचिदंशेने एकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्याभेदेन परस्पर सम्बन्धे सति क्रमो विवक्षितः;

तथेहापि एकस्य जिज्ञास्यत या धर्मब्रह्मजिज्ञासयोः क्रमो विवक्ष्येन न चैतदुभयमस्ति । अत आह फलजिज्ञास्य भेदाच्च''[१] ।

अयं भावः शेषशेषित्वाधिकृताधिकारित्वाभावात् क्रमाभावः धर्मब्रह्मजिज्ञासयोः प्रदर्शितः । इदानीं एकफलावच्छेदेन एक जिज्ञास्यत्वेन च क्रम आशङ्क्य निराक्रियते 'फल जिज्ञास्य भेदाच्च ।

तत्र एकफलावच्छिन्नानां आग्नेयादि यागानां षण्णां यथा क्रमः तथात्र नास्ति । धर्मब्रह्मजिज्ञासयोः स्वर्गमोक्षफलभेदात् । एकादशे चिन्तितम्—''प्रयोजनाभिसंबन्धात् पृथक् तस्मादैककर्म्यमेकशब्दाभिसंयोगात्'' । आग्नेयादिषु संशयः—दर्शत्रिकं पौर्णमासत्रिकं चेत्याग्नेयादयः षड् यागाः । किं तेषां श्रूयमाणं फलमेकम् ? उत भिन्नम् ? इति । तत्र परस्परनिरपेक्षैरुत्पत्तिविधिभिः प्रत्येकं विहितानां तुल्यप्रधानानां पृथक्फलाकाङ्क्षत्वात् तत्सन्निधौ श्रूयमाणं फलं भेदेनैभिः सम्बध्यते । अतः प्रतिप्रधानं फलभेद इति पूर्वपक्षे प्राप्ते, राद्धान्तः—यद्यप्येषां पृथगुत्पत्तिविधिविहिततया पृथक्त्वम्, तथाऽप्यैककर्म्यम् । यद्यपि पृथगुत्पत्तिविहितत्वादेव पृथक्कर्मता, नैककर्म्यम्; तथाऽप्येकफलकतालक्षणमैककर्म्यमित्यर्थः । कुतः ? प्रयोजनेन समुच्चितानां सम्बन्धाद्धेतोः । स एव कुतः? एकशब्दाभिसंयोगात् । ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इति दर्शपूर्णमासशब्देनैकेन हि समुदायवाचिना निर्दिश्य स्वर्गफले विधीयन्त आग्नेयादयः; यथा 'ग्रामेणोपदानः खेयः'' इति समुदायशब्देन निर्देशात् समुदितैः पुंभिरुदपानः खन्यते, न पुनः प्रतिपुरुषं कूपभेदः, एवमिहापि ।

किञ्च जिज्ञास्यब्रह्मणोऽंशोधर्मः नास्ति । यथा चतुर्लक्षणीशारीरकमीमांसायां प्रतिपाद्यं ब्रह्म केनचिद् केनचिदंशेन समन्वय विरोधसपरिहारादिरूपेण प्रतिपाद्यते । प्रथमेन लक्षणेनाध्याये न समन्वयः द्वितीयेन विरोधपरिहारः तृतीयेन ब्रह्मप्राप्तिसाधनं चतुर्थेन तत्प्राप्तिलक्षणं फलम् । किन्तु धर्मः ब्रह्मांशतया न क्वापि प्रतिपाद्यते । तस्मान्नास्ति क्रमः ।

१. भामती पृ.६९ ।

फलजिज्ञास्य भेदाश्च भाष्ये—अभ्युदय फलं धर्मज्ञानमित्यादिना प्रतिपादितम्। अत्र विवरणे धर्मब्रह्मज्ञानयोरेकफलत्वं निराकृतम् तदत्र तत्रत्यो ग्रन्थ उद्घ्रियते— अयमत्राशयः—न धर्म-ब्रह्मज्ञानयोरेकफलत्वे प्रमाणमस्ति, अर्थोऽपि न युज्यते, कथम्? न तावद् विविदिषावाक्यस्य शब्दसामर्थ्यन्यायपरीक्षायां समुच्चये प्रामाण्यमित्युक्तम्। नच "विद्यां च यस्तद्वेदोभयं सहे"ति समुच्चयविधिः; "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति फलभेदावगमात्, नापि 'तेनैति ब्रह्मवित्पुण्यकृच्चे'ति ज्ञान-कर्मणोरेकस्मिन् पुरुषे समुच्चयविधिः; ब्रह्मवित्पुण्यकृतोः पुरुषयोर्मार्गे समुच्चयावगमात्, अन्वाचयार्थेन च चकारेण प्रत्येकं निरपेक्षमार्गान्वययोपपत्तेः, पुण्यकृच्छब्देन चाऽमानवपुरुषादर्चिरादिना गच्छतां प्रतीकालम्बनानामभिधानात्, इष्टादिकारिणां धूमादिमार्गश्रवणाच्च।

नच 'तान्याचरथ नियतं सत्यकामाः' इति समुच्चयविधिरवगम्यते; केवलकर्मणामेव श्रवणात्; सत्यशब्देन च 'एष वः पुण्य सुकृतो ब्रह्मलोकः" इति वाक्यशेषात् सत्यलोकाभिधानात्, "प्लवा ह्यते अदृढा यज्ञरूपा नास्त्यकृतः कृतेने'ति च कर्मनिन्दया 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि'ति च विज्ञानविधानात्। 'सत्येन लभ्यस्तपसा ह्येष आत्मे'ति न समुच्चयविधिः; तपःशब्दस्य 'मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः' इति ध्यानस्यैवाभिधानात्। तस्मान्न समुच्चये प्रमाणमस्ति। प्रतिषेधाच्च; "नान्यः पन्था विद्यतेयनाय" "नास्त्यकृतः कृतेन" "न कर्मणा न प्रजया धनेन" "नान्यैर्देवैस्तपसा कर्मणा वा" "हित्वाऽविद्यां धियैवेयात् तद्विष्णोः परमं पदमि"ति च। केवलकर्मणां प्रतिषेध इति चेत्, न; अविशेषात्, समुच्चयविधायिप्रमाणाभावे सर्वकर्मणां प्रतिषेधोपपत्तेश्च। ज्ञानाङ्गतया सर्वकर्मसंन्यासविधानाच्च न समुच्चयः। संन्यासाश्रमधर्मैः समुच्चय इति चेत्, न; तद्धर्माणां ध्यानादीनां ज्ञानस्वरूपोपकारित्वात्। नित्यकर्मविधानानुपपत्तिरेव ज्ञानसहकारितया कर्मणां मोक्षफलत्वं कल्पयतीति चेत्, न; नित्यकर्मणां फलनिरपेक्षत्वात्, सापेक्षत्वे च विश्वजिन्न्यायावतारात्, संस्कारद्वारेण च विनियोगस्य दर्शितत्वात्, कर्मणामेव च विध्यनुपपत्त्या

मोक्षसाधनत्वकल्पनात् समुच्चयासिद्धेः, कर्मप्रतिषेधस्योदितहोमप्रतिषेधवज्ज्ञान-स्तुत्यर्थत्ववोपपत्तेर्ज्ञान कर्मणोर्विकल्पेन मोक्षसाधनत्वप्रसङ्गात्। ननु ब्रह्मज्ञानमेवेति कर्तव्यतया कर्मणां मोक्षसाधनत्वं कल्पयतीति चेत्, न; शमादीतिकर्तव्यतान्तरभावात्, करणतया विध्युद्देशप्रसिद्धानां च कर्मणां विधिविरोधात्। अर्थश्च विरुध्यते। कश्च कर्मणां साध्योऽर्थ इति वक्तव्यम्? न तावद् ब्रह्मात्मैकत्वम्; तस्यासाध्यत्वात्, नाप्यविद्या-भेदांशाध्यास-कर्मणां निवृत्तिः; ''भिद्यते हृदयग्रन्थिः'' ''ब्रह्म वेद ब्रह्मैव भवती''त्यादौ ब्रह्मदर्शननिवर्त्यत्वावगमात्। नहि—''तस्मिन् दृष्टे'' इत्युक्ते कर्माणि सहकारित्वेनावगम्यन्ते। नाप्युपाधिद्वयनिवृत्तिः कर्मणां फलम्। तथा ''विद्वान्नामरूपाद्विमुक्तः'' ''एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती'ति च ब्रह्मदर्शननिवर्त्यत्वावगमात्, अज्ञानमात्रोपादानत्वस्य दर्शितत्वाच्च कर्मोपाधीनां सत्यवस्तुतया विज्ञानानिवर्त्यत्वात्, अवस्तुत्वाच्च, मिथ्याज्ञानसंस्कारस्य शुक्तिकादितत्त्वज्ञानेनाविरोधदर्शनादनिवर्त्यत्वात्, ब्रह्मात्मभावस्य च स्वयंप्रकाशतया विज्ञानाप्रकाश्यत्वात्, तत्त्वज्ञानाभ्याससंस्काराच्च, मिथ्याज्ञानसंस्कारनिवृत्तौ तत्त्वज्ञानान्मुक्तिश्रुतिविरोधात्। तस्मात् सर्वानर्थोपादानानादिमिथ्या-ज्ञाननिवृत्त्यैव विज्ञानं फलवत्, इति न समुच्चयावकाशः। तत्र सर्वशङ्करवादी—ब्रह्मविचारापेक्षिताधिकारमप्यजानन् समुच्चयसामर्थ्यादेव धर्मावबोधाननतरं ब्रह्मावबोधं—जल्पति। तत्र सति वा समुच्चये विपरीतं किं न स्यादिति निरूपणीयम्। तथाहि—ज्ञानवतैवानुष्ठितानि कर्माणि मोक्षं साधयन्ति, इति प्रथमं ब्रह्मावबोधमुत्पाद्य तद्वतैव ब्रह्मचारिणा धर्मविचारादि सर्वं स्वाश्रमधर्मानुष्ठानं कर्तुं युक्तम्, इति विपरीत एव क्रमः स्यात्; अन्यथा त्वादावेव मुमुक्षोराधर्मविचारपरिसमाप्तेरनुष्ठीयमानकर्मणामानर्थक्यप्रसङ्गात्। दृश्यन्ते च प्रथमाश्रम एव मुमुक्षवः। सर्वसाधारणत्वाद्धर्मविचार एव प्रथमः कर्तव्य इति चेत्, देवानांप्रिय! न सर्वसाधारणं कर्तुमयं प्रवृत्तः, किन्तु काम्यमानसाधनमवश्यानुष्ठेयं वा निवर्तयितुं प्रवृत्तः। तत्र यदि विचारद्वयं काम्यमानमोक्षसाधनमिष्येत, तर्हि व्युत्क्रम एव

श्रेयानित्युक्तम् । अथ नित्याध्ययनविधिः कर्मविचारं प्रयोजयति, अतोऽवश्यानुष्ठेयविचारानन्तरं काम्यमानब्रह्मविचारः प्रयुज्यत इति चेत्, नैतत् सारम्; काम्यमानब्रह्मविचारानन्तरमपि नित्यधर्मविचारोपपत्तेः । ननु अध्ययनानन्तरं कर्मविचाराननुष्ठाने प्रत्यवायः स्यात्, सत्यम्; नित्यवदल्पानुष्ठानेऽपि प्रत्यवायपरिहारात् । किंच तावन्मात्रमुपेयताम्; विदुषाऽनुष्ठीयमान-ब्रह्मचारिधर्माणामपि मोक्षसाधनत्वलाभात्, वेदानुवचनादिषु प्रत्येकं निरपेक्षकरणविभक्तिश्रवणाद्वा, आश्रमकर्मणां विकल्पेन मोक्षसाधनत्वोपपत्तेः, ब्रह्मचर्यादेव संन्यासविधानाच्च । धर्मावबोधो नित्यतयाऽनुष्ठितोऽपि न ब्रह्मविचारहेतुः, अननुष्ठेयश्च धर्मविचारः, अग्निहोत्रादिव्यतिरिक्तसंन्यास-धर्माणामपि ज्ञाने समुच्चयाङ्गीकरणात् । किंच अध्ययनविधिः कर्मविचारं प्रयुञ्जानो ब्रह्मविचारं किमिति न प्रयुङ्क्ते ? इति वक्तव्यम्, "श्रोतव्यः" इति विध्यन्तरश्रवणादिति चेत्; अश्रुतमीमांसावृत्तान्तो देवानांप्रियः, धर्मविचारे क्लृप्तप्रवर्तकभावेनानेनैवाध्ययनविधिना ब्रह्मविचारस्यापि प्रयोगसम्भवे श्रोतव्य इति विधेर्विनियोगाधिकार-प्रयोगविधिकल्पनया प्रवर्तकत्वकल्पनाऽयोगात् । ब्रह्मज्ञानस्य काम्यमानसाधनता तद्विचारस्यापि काम्यत्वाद् न नित्याध्ययनविधिप्रयुक्ततेति चेत्, कर्मविचारे काम्यमानकर्मवाक्यविचारस्याप्येतत्प्रयुक्तत्वप्रसङ्गः ।

स्यादेतत्—ब्रह्मविचास्य वैराग्य-शम-दमोसदनादिसाधनविशेषाणामङ्गत्वेन विधानादध्ययनविधेः कर्मविचारे शमाद्यङ्गशून्यस्य ब्रह्मविचारे तदङ्गानामाक्षेपकत्वानुपपत्तेः साङ्गविध्यन्तरं कल्प्यत इति, सोऽयमनुरूपितविधिव्यापारो वावदूकः; स्वाध्यायविधिः खलु शिरोव्रत-भूभोजनाद्यङ्गविकलमेव वाक्यान्तराध्ययनं विदधानो मुण्डक कारीर्याद्यध्ययनं शिरोव्रताद्यङ्गाक्षेपपुरःसरमेव विदधाति । विचारं च प्रयुञ्जानः प्रतिवाक्यं दृष्टतयैवाङ्गभूतान् न्यायभेदानाक्षिप्यैव विचारं प्रयुङ्क्ते । दर्शपूर्णमासविधिश्च नित्याधिकारो यथाशक्त्यङ्गानुष्ठानं प्रयुङ्क्ते, काम्याधिकारस्तु सवाङ्गानुष्ठानमिति । तथा स एव विधिरुपांशुयाजे कर्मण्याज्यावेक्षणाद्यङ्गमाक्षिपति, यागान्तरेष्ववघाताद्यङ्गमिति । एवमध्ययनविधिर्बविचारे शमाद्यङ्गमाक्षिपेत् नेतरत्रेति न विरुध्यते । नचाधिकारिविशेषणत्वात् शमादीनामनुपादेय-

त्वादनाक्षेपः; अध्ययनविध्यधिकारिण एव तत्प्रयुक्तविचारेऽप्यधिकारित्वात्। तस्मात् प्रधानविर्धिदृष्टादृष्टाङ्गानामुपकारविशेषापेक्षया यत्र क्वचन यत्किञ्चिदङ्गं प्रयोजयतीति सर्वत्र यमधिगतमेतत्। तस्मादेकाध्ययनविधिप्रयुक्तत्वांद् विचारद्वयस्य क्रमापेक्षायां ब्रह्मविचारानन्तरं धर्मविचारो युक्तः, विचारादीनामपि मोक्षसाधनत्वलाभात्। तस्माद् न फलैक्यादपि धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासेति। प्रति वाक्यं च तात्पर्यभेदात् प्रमेयभेदसिद्धिः[१]।

**चोदना प्रवृत्तिभेदाच्चेति भाष्यम्–**

चोदनेति वैदिकं शब्दमाह। विशेषेण सामान्यस्य लक्षणात्[२]।

अयं भावः—धर्मब्रह्मज्ञानयोः न केवलं जिज्ञास्य फलभेदावेव भेदोऽपि तु ज्ञापकप्रमाणप्रवृत्ति भेदादपि भेदः। अत्र चोदनाशब्देन विशेषवाचिना सामान्यं वैदिकं प्रमाणजातं लक्ष्यते। ननु लोक आज्ञाऽभ्यर्थानुज्ञानां चोदनात्वात्, कथं वेदे चोदनोक्तेति चेन्न आज्ञादीना पुरुषाभिप्रायविशेषाणां अपौरुषेये असम्भवाद् चोदनाऽत्रापदेशः। अत एव 'तस्य ज्ञानमुपदेश'' इत्युक्तं जैमिनि तन्त्रे।

तस्य धर्मस्य ज्ञानं=प्रमाणं विधिरूपदेशः इत्यर्थः तत्रोत्कृष्टस्य पुंसः स्वाभिलषितोपाय-साधनत्वाभिधानमाज्ञा, यथा गामानयेति। एतदेव हीनस्याम्यर्थना, यथा माणवकमध्ययेति प्रवृत्तस्य प्रयोज्यस्य तदिष्टोपायोक्तिरनुज्ञा यथा ''तथा कुरु यथेष्टमिति। एतासामपौरूषेये वेदोऽसम्भवाद् उपदेशश्चोदनेत्युच्यते। उपदेशो नाम अप्रवृत्तस्य नियोज्यस्य हितोपाय कर्त्तव्यतोक्तिः। यथा लोके गोपालकादिषु शोभनयथोक्तिः। अनेन यथा याहीति। तथा वेदेऽपि तादृशोपदेशोऽस्त्येव ज्यातिष्टोमेन स्वर्ग कामो यजेतेति। या हि धर्मस्य लाक्षणं चोदना सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति। स्वसाध्ये पुरुषव्यापारे भावनायां स्वविषये यागादौ इच्छोपहारमुखेन पुरुषं नियोजन्ती एव अवबोधयति। दर्शपूर्णमासाभ्यां

---

१. विवरण-पृ.-७११-७२०।

२. भामती-पृ.७०।

यजेतेत्यादि चोदना अर्थवाक्येनैकवाक्यतां गता स्वविषये अनुष्ठेये यागादौ धर्मे रागमुत्पाद्य पुरुषं प्रेरयन्त्येव स्वविषयमवबोधयति । अप्रवृत्तप्रवर्तकत्वात् अज्ञात ज्ञापकत्वाच्च धर्मचोदयनायाः ।

ब्रह्मचोदना तु पुनः पुरुषं प्रति स्वविषयम् अवबोधयत्येव केवलम् अज्ञातज्ञापकत्वात् विषयस्य न पुनस्तत्र पुरुषं प्रवर्तयत्यपि स्वविषयस्य सिद्धब्रह्मणोऽननुष्ठेयत्वात् । ननु मा भूत् ब्रह्मणि ब्रह्मचोदनाया पुरुषं प्रति नियोगः तस्य नित्यत्वेनानुष्ठेयत्वाभावात् तज्ज्ञाने तु नियोगो भविष्यतीति । 'आत्मा वाऽरे द्रष्टव्यः' इत्यादि विधिश्रुतेरिति चेन्न प्रवृत्तिरहितस्य अवबोधस्य चोदनाऽजन्यत्वात् । न पुरुषोऽबोधे नियोज्यते ।

अयं भावः—आत्मा द्रष्टव्य इत्यादि श्रुतौ न तावत् पुरुषो नियोक्तव्यः तस्य ब्रह्मस्वाभाव्येन नित्यत्वात् अकार्यत्वात् । नाप्युपासनायां, तस्या अपि भावनापराभिधानाया ज्ञानप्रकर्षे हेतुत्वात् । नापि शाब्दबोधे तस्यापि अधीतवेदस्य पुरुषस्य विदित पदतदर्थस्य समधिगतशब्दन्याय तत्त्वस्य अप्रत्यूहमुत्पत्तेः । यथा अक्षार्थसन्निकर्षेण अर्थावबोधे पुरुषो न नियुज्यते तद्वद् ब्रह्मचोदनया द्रष्टव्य इत्याद्यया नावबोधे पुरुषो नियुज्यते इति भावः ।

**साधनचतुष्टयानन्तर्योपपत्तिः–**

तस्मात् किमपि वक्तव्यं-यदनन्तरं ब्रह्म जिज्ञासोपदिश्येत इति । यस्मिन्नसति जिज्ञासा न भवति सति तु भवन्ती भवत्येव । उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः शमदमादिसाधनसम्पत्तिः मुमुक्षुत्वञ्चेति साधनचतुष्टयानन्तरं जिज्ञासा भवति ।

नित्यानित्यवस्तुविवेकः नित्यानित्योर्वसतीति नित्यानित्यवस्तु तद्धर्मः इति[१] ।

अयं भावः—नित्यः प्रत्यगात्मा अनित्ये देहादयः तद्विषयको विवेकः किं निश्चय उत ज्ञानमात्रम् नाद्य, ब्रह्मजिज्ञासाया वैयर्थ्यात् ब्रह्मणः ज्ञातत्वात् । द्वितीये किं विपर्ययः

१. भामती -पृ.-७१ ।

संशयो वा नाद्यः, ततः शास्त्र श्रवणे प्रवृत्त्ययोगात् न द्वितीयः । प्रपञ्चानित्यत्वानिश्चये तद्वैराग्यायोगात् ।

अतः भामत्यां व्याख्यातम्—नित्यानित्ययोर्वसतीति नित्यानित्यवस्तुः तद्धर्मः नित्येऽनित्ये च स्थितत्वात् तद्धर्म एव वस्तुशब्देन गृह्यते । एवञ्च नित्यानित्ययोर्धर्मिणो स्तद्धर्माणा च विवेको निश्चयः नित्यानित्यवस्तुविवेकः । नित्यम् ऋतम्, अनित्यमनृतम् । व्युत्पादितञ्च स्वयमेव भामती कृता—एतदुक्तं भवति—मा भूदिदं तदृतं नित्यं, इदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः, धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव । नित्यत्वं सत्यत्वं यद्यस्यास्ति तन्नित्यं सत्यं, तथाचास्थागोचरः । अनित्यत्वमसत्यत्वं यद्यस्यास्ति तदनित्यमनृतं, तथाचानास्थागोचरः । तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत्त्यक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकाद्वा कर्मणो विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम् । न खलु सत्यं नाम न किंचिदस्तीति वाच्यम्; तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः, शून्यवादिनामपि शून्यताया एव सत्यत्वात् । अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयतः, आ च सत्यलोकात् आ चावीचेः 'जायस्य म्रियस्व' इति विपरिवर्तमानं, क्षणमुहूर्तयामाहोरात्रार्धमासमास त्र्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तर-सर्गसंसारसागरोर्मिभिरनिशमुह्यमानं, तापत्रयपरीतमात्मानं च जीवलोकं चावलोक्य अस्मिन्संसार-मण्डले अनित्याशुचिचिदुःखात्मकं प्रसंख्यानमुपावर्तते; ततोऽस्यैतादृशान्नित्यानित्य-वस्तुविवेकलक्षणात्प्रसंख्यानात्—इहामुत्रार्थभोगविरागो भवति[१] ।

तत्र विवेको निश्चयरूप एव । न चेदं नित्यमिदमनित्यमिति निश्चयरूपविवेकसद्भावाद् शास्त्रारम्भो व्यर्थ एवेति वाच्यम् । आत्मानात्मसमुदाये नित्यत्वमनित्यत्वञ्च धर्मौ स्तः ।

१. भामती-पृ.-७१-७३ ।

तयोश्च धर्मिभ्यां भवितव्यमित्येतावन्मात्र निश्चयात्। नित्यानित्यधर्मिणोः विवेकार्थं शास्त्रारम्भस्य सामर्थ्यात्। ननु भामतीकारेण नित्यानित्ययोः प्रसिद्ध स्थायित्वास्थापित्वार्थौ परित्यज्य सत्यान्ततार्थौ किमर्थं परिगृहीतौ। अत्रोच्यते—भाष्ये नितयानित्यवस्तुविवेकानन्तरं नित्यफलप्रेप्सामनपेक्ष्य तद्विवेकमात्रेण सकलकर्मफलविराग उक्तः, नित्यवस्तुप्रेप्सया तत्प्राप्त्युपायान्वेषणं पश्चादुक्तम्; अयं क्रमोऽनित्यत्वमसत्यत्वमिति व्याख्याने युज्यते, नत्वस्थायित्वमिति व्याख्याने। अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोगलाभमालक्ष्य हि ततो विरज्यते, नान्यथा; अनृतासक्तस्तु तदनृतत्वनिश्चये सति तत्परित्यागे तथाभूतसत्यवस्तुलाभप्रतिसंधानाभावेऽपि ततो विरज्यते। नहि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तस्तन्मिथ्यात्वनिश्चये सति तत्परित्यागेन सत्यरजतस्य स्वलभ्यत्वप्रतिसंधानाभावे ततो न निवर्तते, किंतु ततो निवृत्तः सत्यरजतप्राप्त्युपायं किंचित्पश्यति चेत् तत्र प्रवर्तते। तस्मान्नित्यानित्यवस्तुविवेकादिक्रमेण साधनचतुष्टयं ब्रह्मजिज्ञासाहेतुं वर्णयतो भगवतो भाष्यकारस्य सत्यमिदं सुखरूपमिति विशेषनिर्धारणमनपेक्ष्य कर्मफलानृतत्वनिर्धारणमेव वैराग्यादिक्रमेण साधनान्तराणां प्रवर्तकमित्याशयमालोच्य टीकारैराचार्यैश्च सामान्यतः सत्यमस्तीति विशिष्य बन्धमात्रमनृतमिति च विवेकः प्रथमसाधनत्वेन परिगृहीतः। तदनन्तरमक्षय्यादिवाक्यात्कर्मफलनित्यत्वसिद्धेस्तदनृतत्वमसिद्धम् अनृतस्य तत्त्वज्ञाननिवर्त्यत्वनियमादिति शङ्कायां तदनृतत्वसिद्ध्यर्थमेव न्यायतस्तदनित्यत्वमतःशब्देन सूत्रितमिति न किंचिदवद्यम्[१]।

## इत्यथशब्दार्थविचारः

### साधनचतुष्टयविमर्शः—

साधनचतुष्टयानन्तरं ब्रह्मजिज्ञासेति वाक्यार्थः। साधनचतुष्टयम्—नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमदमादिसम्पत्, मुमुक्षुत्वञ्चेति।

१. कल्पतरूप परिमलः-पृ.-७२-७२।

**साधनचतुष्टयस्य शास्त्रीयत्वम्-**

तद्यथेह कर्मचितोलोक: क्षीयत एवमेवामुत्र पुण्यचितो लोक: क्षीयते इति श्रुत्या सदेवेत्युपक्रम्य तत् सत्यमित्यादि श्रुत्या च नित्यानित्यविवेकोदर्शित: । आत्मा नित्य: सत्य: अनात्मप्रपञ्चेहलोकपरलोकादिरनित्योऽनृत इति सामान्यतो विवेके निश्चये जायमाने परीक्ष्य कर्मचितान् लोकान् ब्राह्मणो निर्वेदमायान्नात्यकृत: कृतेनेत्यादि श्रुत्या आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यादिश्रुत्या च इहामुत्रफलविरागो दर्शित: । तत: उत्कटवैराग्यात् शान्तो दान्तउपरतस्तितिक्षुरित्यादि श्रुत्या च शमादयो दर्शिता: । तद्विजिज्ञास्वेत्यादि श्रुत्या च मुमुक्षुत्वं दर्शितमिति साधनचतुष्टयस्य शास्त्रीयत्वं सिध्यति । तदयं निर्गलितोऽर्थ:— इह हि संसारे स्वाभाविकाविद्यावासनापरिचोदितरागादिदोषदूषितान्त:करण: प्रायेणाधर्ममेवाचिनोति सर्वोऽपि जन:, न तथा धर्मम्; स्वाभाविकचित्तवृत्तेर्बलीयस्त्वात्, 'तत: कानीयसा एव देवा ज्यायसा असुरा' इति श्रुते:, "स्वभावजेन कौन्तेय ह्रियते ह्यवशोऽपि स:' इति स्मृतेश्च । स वाधर्म: स्वोपादानमन्त:करणस्य रजस्तमोंऽशं परिपुष्णाति अभिभवति च स्वविरोधि धर्ममूलं तत्सत्वांशम् । अभिभूते च तस्मिन्, रजस्तमसो: प्राबल्यात् ताभ्यां विमोहित: प्रत्यक्षोपपत्तिभ्यामैहिक-पारलौकिकदेहादिविषयं जन्म-विनाशादिमत्त्वेनानित्यतया, विण्मूत्र-श्लेष्मादिसङ्घातादिरूपेणाशुचितया, समुत्पादसंरक्षणादिजनितबहुक्लेशनिदानत्वेन दुःखात्मकतया च पश्यन्नपि, तद्विपरीततया नित्य-शुचि-सुखात्मत्वेनाभिमन्यते । तथाचोक्तं भगवता पतञ्जलिना—'अनित्याशुचिदुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरविद्ये"ति । सेयं कार्यरूपाऽविद्या स्वोपादानभूतमूलाविद्यायां पञ्चपर्वात्मना घटीयन्त्रन्यायेनानिशमावर्तमाना पुरुषस्य विवेकख्यातिं प्रतिरुध्य स्वकारणमविद्यां पुष्णाति । एवमविवेकप्राबल्यात् संसारचक्रे बम्भ्रम्यमाणो बीजाङ्कुरन्यायेन प्रायेण पुन:पुनधर्ममेवापचिन्वानस्तत्प्रतिबद्धस्वान्ततया न श्रेयोमार्गं प्रतिपद्यते लोक:, तदप्रतिपत्त्या पुन: संसरतीति कष्टं भो बत लोकानामावर्तते । तेषां च संसारचक्रे भ्रमतां मध्ये कदाचित् कस्यचित् पुरुषस्य कस्यचित् दैवादनुष्ठितपुण्यकर्मण:

परिपाकवशात् लब्धब्राह्मणादिजन्मनः सत्सङ्ग उपावर्तते । जाते च तस्मिन्—

"संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ।
तेषां स्वैरकथा यास्तु उपदेशा भवन्ति ताः ।।

इत्यादिस्मृतेस्तदुपदिष्टमार्गेण फलरागोपहतचित्तत्वादिच्छन्नपि, तद्भीत्या, अहमपि शिष्टत्वेन गणनीयो भविष्यामीति दृष्टफलरागाद्वा प्रथमं प्रवर्तमानः काम्य-प्रतिषिद्धवर्जं केवलं नित्यनैमित्तिकं कर्म निरभिसन्धिरदृष्टफलमनुतिष्ठति । एवं प्रथममस्वरसादपि प्रवृत्ते कर्मयोगे, कालेन तत्संस्कारप्राबल्यात् काम्य-निषिद्धसंस्कारयोस्तनूकरणात् तत्रैव स्वारस्यमनुवर्धते । वर्धिते च तस्मिन् सर्वदा स्वारस्यात् तदेवानुतिष्ठति । काम्य-निषिद्धे तु मनसाऽपि न चिन्तयति; तत्संस्कारलोपात् । सोऽयं कर्मणो योगो यथा यथा पुरुषस्य वर्धते, तथा तथा विधुनोत्यस्य सञ्चितं पापराशिम् । यथा यथा विधूयतेऽस्य पापराशिः, तथा तथा रजस्तमसोरभिभवात् सत्त्वस्योद्रेकाच्चावरुणभङ्गाद् विवेको बलाद् वर्धते प्रतयक्षानुमानाभ्याम् । यथा यथ च विवेको वर्धते, तथा तथा वैराग्यम्, यथा च वैराग्यम्, तथा शम-दमादिसंपत्, यथाच शम-दमादिसंपत्, तथा मुमुक्षुत्वम्, तथा विविदिषा; साध्यरागप्रयुक्तत्वात् साधनरागस्य, इति क्रमेण कर्मयोगः पुरुषस्य विविदिषाहेतुर्भवति । तथाच श्रुतिः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति । ननु—यज्ञ-दानादीनां किं प्रत्येकं विविदिषाहेतुत्वम्? समुदायस्य वा? नाद्यः; अनुबन्धभेदेन भावनाभेदाद् वाक्यभेदप्रसङ्गात्, नित्यवत् श्रुतानां विकल्पप्रसङ्गाच्च । नच—एवमिष्यत एव, व्रीहि-यववदन्यथानुपपत्तेरिति—वाच्यम्; आचारविरोधात् । शिष्टैर्हि सर्वाण्याश्रमकर्माणि विविदिषार्थत्वेनानुष्ठयन्ते, अतस्तद्विरोधः । नापि द्वितीयः; समुदायहेतुत्वबोधकप्रमाणाभावात्, "यज्ञेने"त्यादिनिरपेक्षोत्पन्नतृतीयायाः समुदायहेतुत्वबोधनाशक्तेः प्रत्येकहेतुत्वस्यैव तया बोधनात्, "दर्श-पूर्णमासाभ्यां यजेत स्वर्गकामः" इत्यत्र समुदायद्वयोपर्येव तृतीयाश्रवणात् तत्र समुदायहेतुत्वोपपत्तेः । अत एव—निरपेक्षतृतीयाश्रुतिविरोधाद् यज्ञादिभिर्विविदिषन्तीति

वाक्यकल्पनमपि—परास्तम् ॥ तस्मात् कथं यज्ञादीनां विविदिषाहेतुत्वमिति—चेत्, न; श्रुत्यनुसारेण प्रत्येकहेतुत्वपक्षस्यैव श्रेयस्त्वात् । नच—एवमेकेनैव साधनेन विविदिषासिद्धेर्द्वितीयसाधनानुष्ठानानर्थक्यमिति—वाच्यम्; तदाधिक्यार्थत्वेनानथक्याभावात् । उक्त हि यथा यथा कर्मभिः पापक्षयो भवति, तथा तथा विवेकादिद्वारा विविदिषा जायत इति । नहि विविदिषामात्रं स्वकार्यायालयम्, किं तर्हि? दृढभूमिः सा । नच तद्दाढर्यं विवेकादिदाढर्यं विना । नच विवेकादिदाढर्यमपि तत्प्रतिबन्धकाशेषपापक्षयं विना । नच तत्प्रतिबन्धकानन्तपापानामेकेन केनचिद् व्यापारेण निराकरणं युज्यते; तस्य यत्किञ्चित्पाप-निराकरणसामर्थ्येऽपि सर्वपापनिराकरणासामर्थ्यात्, सामर्थ्यस्य फलैकोन्नेयत्वात् । कुतः ? अविवेकादितत्कार्यदर्शनेन तत्फलाभावनिश्चयात् । नचैतावता विविदिषाहेतुत्वबोधक-शास्त्रविरोधः ; उक्तरीत्या तदविरोधात्, पापक्षयहेतुत्वमात्रे तच्छास्त्रस्य पर्यवसानात् । नच—एवमप्येकस्यैव साधनस्यावघातादिवदावृत्त्या सर्वपापक्षयित्वोपपत्तेः साधनान्तरं व्यर्थम्, विकल्पो वा स्यादिति—वाच्यम्; भवेदेतदेवम्, यदि नैयमिकाग्निहोत्रात् कौण्डपायिनामयने "मासमग्निहोत्रं जुहोती"त्यत्र कर्मान्तरविधानवत् स्वाश्रमविहिताद् नित्य-नैमित्तिककर्मणः स्वतन्त्रं कर्मान्तरं विविदिषाहेतुत्वेन विधीयेत, नचैतदस्ति; तस्यैव खादिरताा वीर्यहेतुत्ववत् संयोगपार्थक्येन विविदिषाहेतुत्वविधानात् । यथाचैतत् तथा तृतीये वक्ष्यते । तथाच स्वाश्रमविहितानां सर्वेषां नित्य-नैमित्तिककर्मणां स्वस्वकालेऽनुष्ठानप्राप्तौ, 'कामनायां नित्य-नैमित्तिके विकृत्य काम्यं प्रविशती"ति न्यायात्, संयोगपृथक्त्वेन तेषामेव काम्यत्वेनानुष्ठाने तन्त्रेणैव नित्य-नैमित्तिकसिद्धेः सर्वेषामविशेषेण विविदिषाहेतुत्वाद् नैकस्यैव तदर्थतयाऽऽवृत्तिप्राप्तिः । अतएव न साधनान्तरवैयर्थ्यम्, विकल्पो वेति ।

यज्ञादिकं हि वैराग्यादिसाधनद्वारा परम्परया यद्यप्युपकरोति; तथाऽपि विनाऽपीह जन्मनि कर्मानुष्ठानमधिकार उपपद्यते । वैराग्यादिकं हि विचारकाले नियतमपेक्षितम्, इति नित्यानित्यवस्तुविवेकाद्यानन्तर्यमेवाथशब्दार्थः । अत्र नित्यानित्यवस्तुविवेकेन वैराग्यम्,

वैराग्यात् शमदमादिः, तत्समवहितोत्कटा मुमुक्षा तूक्तकारणत्रयाधीनेत्यनुत्कटमुमुक्षा माऽधिकारिविशेषणं भवत्विति नित्यनित्यवस्तुविवेकादीनामपि ग्रहणम्। "शमदमादी"-त्यादिपदेनैव नित्यानित्यवस्तुविवेकादीनामपि ग्रहणसंभवात् साधनचतुष्टयस्य पृथगत्र ग्रहणं, नित्यानित्यवस्तुविवेकादेः प्रत्येकं पृथक् पृथक् वाक्यान्तरावगतत्वमभिप्रेत्य। तथाच "शान्तो दान्तउपरतस्तितिक्षुः" इति वाक्यावगतानां "शमदमादी" इत्यादिपदेन ग्रहणौचित्याद् न तात्पर्यचन्द्रिकाकाराणामापत्तिः सावसरा। वस्तुवस्तु—नित्यानित्यवस्तुविवेकादेः पूर्वोक्तरीत्या पूर्वपूर्वस्योत्तरोत्तरहेतुत्वस्य विक्षणात् "शमदमादी"त्यादिपदेन सर्वेषां ग्रहणे तत्सूचनासंभवाद् नोक्तायाः शङ्काया अवसरेलेशोऽपि। तदेवं नित्यानित्यवस्तुविवेकपदार्थो व्याख्यातः। सत्यम्, नित्यानित्यविवेको भामत्यभिमतो विवरणाभिमतो वा ब्रह्ममीमांसातृतीयाध्यायाध्ययन-समनन्तरमेव भवति, नतु ततः पूर्वम्, इति विचारत्पूर्वमेव तत्सम्पत्तौ ब्रह्मविचारोऽनपेक्षितः, तथाऽपि पूर्वोक्तरीत्या साधनाध्यायस्यैवार्थक्रमात् प्रथमाध्यायत्वेन न ब्रह्मसगुणत्व-निर्गुणत्वादिविचारवैयर्थ्यम्, न वा तृतीयाध्यायपर्यन्ताध्ययने नित्यानित्यवस्तुविवेकादिः, नित्यानित्यवस्तुविवेकादौ च तावदन्ताध्ययनमित्यन्योन्याश्रयशङ्काऽपि श्रीभाष्यकाराणाम-त्रावसरतीति सूचितम्। इहामुत्रार्थफलभोगविरागः=वैषयिकसुखवैराग्यम्। वैषयिकसुखानां जन्यत्वाद् अनित्यत्वेन वैराग्यसंभवः। शमदमादिसाधनसम्पत्=शमः=वैराग्यहेतुको वशीकारसंज्ञो मनोविजयः, तत एवान्तरिन्द्रियनिग्रह इति नामान्तरम्। दमो नाम=मनसो विजितस्य तत्त्वग्रहणविनियोगयोग्यता, बाह्यकरणानुसारेण विषयेष्वप्रवृत्तिः। स हि बाह्यकरणोपरमाविनाभूतः, इति बाह्येन्द्रियोपरमोदम इति व्यपदिश्यते। उपरतिः=संन्यासः। शीतोष्णादिसहनं तितिक्षा। निद्राऽऽलस्य-प्रमादत्यागेन मनःस्थिरता समाधानात्। गुरु-वेदान्तवाक्येषु विश्वासः श्रद्धा। एतत्षट्कसम्पत्तिः शमदमादिसाधनसम्पत्।

मुमुक्षुत्वम्—उत्कटा मुमुक्षा, अहं संसारबन्धान्मुक्तः स्यामित्याकारा। यद्यप्यद्वैतमतेऽहमर्थो नात्माः; तस्य शबलरूपत्वात्, मुक्तौ ह्यहमर्थो विनश्यतीति

खल्वद्वैतमतम्, तथाच मुक्तौ नाहमर्थान्वयः, इति कथम्—'अहं मुक्तः स्यामितीच्छज्ञेपपद्यते? इति शङ्का प्रसरति; तथाऽप्यहमर्थविशिष्टविनाशस्य "शिखी ध्वस्तः" इतिवद् विशेषणमात्रविनाशाभिप्रायत्वेन शुद्धविशेष्यांशस्य मुक्तावप्यनुवृत्तेर्न मुक्तावात्मानन्वयः। एतेन—"अहमर्थविनाशश्चेद् मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥" इति द्वैत-विशिष्टाद्वैतादिसम्प्रदायानुसारिणां शङ्काऽपि—परास्ता; न हि इच्छाकालीनाः सर्वा अवस्थाः फ़लकालेऽनुवर्तन्त इति नियमः। न हि बालोऽहं त्रिंशवर्षे प्रधानाध्यापको भविष्यामीतीच्छयाऽध्ययने प्रवर्तमानो बालः फलकालेऽपि एवानुवर्तते। एतेन—ब्राह्मणोऽहं स्वर्गी स्यामिति प्रतीतिरपि व्याख्याता; नहि ब्राह्मण एव सन् स्वर्गमनुभवतीत्यत्र प्रमाणमस्ति, इत्यहमर्थमुख्यानात्मवादिनामप्यद्वैतिनां न—'अहं मुक्तः स्यामि'तीच्छाऽनुपपत्तिः।

## अतः शब्दार्थ विचारः

अतः शब्दो हेत्वर्थः (भाष्यम्) अत्रैवं परिचोद्यते सत्यं यथोक्तसाधन सम्पत्त्यानन्तरं ब्रह्मजिज्ञासा भवतीत्यादि भामत्या अयमाशयः।

ब्रह्मजिज्ञासां प्रति नित्यानित्यवस्तुविवेकादि साधनचतुष्टयस्यानन्तर्यमुखेन हेतुता उक्ता। तत्र नित्यानित्ययोर्धर्मिणोस्तद्धर्माणाञ्च विवेक इत्यर्थो वा स्यात् नित्यं ब्रह्म तदितरदनित्यमित्यर्थो वा स्यात्, अनित्यः प्रपञ्चो नित्यं ब्रह्मेति विवेकान्निश्चयात् इहामुत्रफलभोगेषु अनृतानित्यत्वबुद्ध्या वैराग्यमुपजायते। ततः शमदमादिसम्पत्तिस्तत उत्कटा मोक्षेच्छेति 'ततो ब्रह्मजिज्ञासेति स्थितिः।' तत्र सा ब्रह्मजिज्ञासा अनुपपन्ना इहामुत्र फलभोगविरागस्यानुत्पत्तेः। तादृशस्य विरागस्यैव मुमुक्षुत्वंशमादिसम्पत्तौ हेतुत्वात्। न च अनित्यमिदमनृतमिदं ब्रह्मेतरज्जगदिति विवेकविज्ञानात् कुतोऽनृते मिथ्याभूते प्रवृत्तिः कुतश्च न वैराग्यमिति वाच्यम्, रागादेव इष्टलक्षणे ऐहिकामुष्मिकफलप्रवृत्ते;। रागश्चेष्टत्वादेव तादृशफले इति अनुरागहेतौ इहामुत्रफले विरागोत्पत्तेरनुपपत्तेः। न च दुःखानुषङ्गदर्शनात् सुखेऽवैराग्यं स्यादिति वाच्यम् सुखोपादाने दुःखपरिहारस्य दर्शनात्। दृश्यते हि अवर्जनीयतया

आगतमपि दुःखं सुखेन सह तत् परिहृत्य भोगः क्रियमाणः । यथा धान्यार्थी सपलालानि धान्यानि आहरन् आधेयं आन्यादि परिगृह्णाति अनुपादेयं त्यजतीति । तस्मात् दुःखभयाद् अनुकूलवेदनीयं सुखमिष्टम् एहिकमामुष्मिक वा न त्यक्तुमुचितम् । न हि मृगाः सन्तीति यथा नोद्यन्ते, न हि भिक्षुकः सन्तीति स्थाल्पो नाधि श्रीयन्ते । तस्मात् प्रतिविधेयं दुःखेषु तत्साधनेषु च ।

किञ्च दृष्टं सुखं चन्दनवनितादिसङ्गजन्मक्षयितालक्षणेन दुःखेनाघ्राततत्वात् अतिभीरूणात्यजेतापि न तु आमुष्मिकं स्वर्गादि तस्याविनाशित्वात् । अपामसोमममृता अभूम इति अक्षय्यं हि चातुर्मास्य याजिनः सुकृतं भवति इत्यादि श्रुतेः । न चात्र कृतकत्वादनित्यत्वानुमानबाधः । तस्य उक्तश्रुतिबाधादेवा प्रवृत्तेः । यथा नरशिरःकपालः शुचिः प्राष्यङ्गत्वात् शङ्खवदित्यनुमानं, नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेदित्याग-मबाधितं तद्वत् । तस्मात् सा धनचतुष्टय सम्पत्त्यभावात् न ब्रह्मजिज्ञासेति प्राप्तम् । उक्तसाधनेषु मुख्तो वैराग्याभावादेव इतरेषामप्यप्राप्तिः । न च ब्रह्मनित्यमिति कृत्वा इष्टफलेषु विरक्तः कश्चिद् दृश्यते ।

अत्रोच्यते—एतत् सर्वमेव मनसि निधाय भगवान् भाष्यकारः प्राह—अतः शब्दो हेत्वर्थः । साधनकलापस्य हेतुताऽसिद्धिपरिहार हेतुरयमतः शब्द इत्यर्थः । ततश्च साधनकलापस्य ब्रह्मजिज्ञासां प्रति हेतुत्व दृढीकरणार्थ मतः शब्द इति भामतीकाराणामाशयः तथाहि—तत्रोक्तम्— "अयमभिसन्धिः—सत्यं मृगभिक्षुकादयः शक्याः परिहर्तुं पाचककृषीवलादिभिः, दुःखं त्वनेकविधानेककारणसंपातजमशक्यपरिहारं; अन्ततः साधनपारन्त्र्यक्षयितालक्षणयोर्दुःखयोः समस्तकृतकसुखाविनाभावनियमात् । नहि मधुविषसंपृक्तमन्नं विषं परित्यज्यसमधु शक्यं शिल्पिरेणापि भोक्तुम् । क्षयितानुमानोपोद्बलितं च 'तद्यथेह कर्मचितः' इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमम्' इत्यादिकं वचनं मुख्यासंभवे जघन्यवृत्तितामापादयति । यथाहुः पौराणिकाः—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति । अत्र च ब्रह्मपदेन

तत्प्रमाणं वेद उपस्थापितः । स च योग्यत्वात् 'तद्यथेह कर्मचितः' इत्यादिरत इति सर्वनाम्ना परामृश्य, हेतुपञ्चम्या निर्दिश्यते । स्यादेतत्—यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपीत्यत आह—तथा ब्रह्मविज्ञानादपीति । तेनायमर्थः अतः स्वर्गादीनां क्षयिताप्रतिपादकात्, ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपादकात् आगमात्, यथोक्तसाधनसंपत् ततश्च जिज्ञासेति सिद्धम्[१] ।

पञ्चपादिकाविवरणेऽपि-अथशब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेणापवादशङ्कायां तन्निरासेन हेतुत्वव्यवस्थापनार्थमतः शब्दः ।

अयं भावः—अथ शब्दस्यानन्तर्यमर्थः । अथशब्द एव आनन्तर्याभिधानमुखेन पूर्वनिर्वृत्तस्य साधनकलापस्य जिज्ञासां प्रति हेतुत्वं गमयति । यत् परः शब्दः स वाक्यार्थ प्रयोगे शब्दार्थ इति न्यायाद् अर्थतः प्राप्तमपि साधनकलापस्य हेतुत्वमथशब्देनैव बोधितमिति पुनस्तदर्थमतः शब्दो नापेक्ष्यते । इत्याशङ्क्योक्तं विवरणे 'अथ शब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेणापवादशङ्कायां तन्निराकरणं पुनरथशब्दोक्तहेतुत्वाभिधायिनाऽतः शब्देन क्रियते इति[२] ।'

अनेन प्रबन्धेन साधनसम्पत्तौ हेतुत्वदृढीकरणार्थमेवातः शब्दः हेतुत्वेऽपवाद-शङ्कानिरसनद्वारेति भावः स्फोरितो भवति ।

अतः नात्र स्थले भामतीविवरण प्रस्थानयो र्भेदः । उपपादनप्रकार एव भेदः । उपपादितश्च विवरणे—"अतो भवत्यनित्यदर्शनं विषयभोगानां मुमुक्षुत्वे हेतुः' इति पञ्चपादिकावाक्यं प्रतीकमादाय व्याख्यातम्—"तत्र तावच्चातुर्मास्यश्रुतिः सुकृतस्याक्ष्य्यत्वमाह, न तत्फलस्य; सत्यपि सुकृते फलस्यानुपभोगवत् क्षयोपपत्तेः । तत्र वाक्यस्य श्रुतार्थं परित्यज्य फलाक्षयविषयत्वकल्पना प्रमाणविरुद्धेत्याह—न तस्य वस्तुबलप्रवृत्तेति । व्याप्तिबलप्रवृत्तेत्यर्थः । अनुमानानुगृहीतश्रुतिविरोध इति योजयितव्यम् । "हिरण्यदा अमृतत्वं

---

१. भामती पृ.७४ ।

२. पञ्चपादिकाविवरण-पृ. ७४८ ।

भजन्ते'' इति श्रुतिर्वर्तमानापदेशाद् योग्यानुपलब्धिविरुद्धा भवति। भजिष्यन्त इति कल्पना पूर्ववत्प्रमाणविरुद्धा, अनुमानानुगृहीतदेवसर्ग-प्रलयश्रुतिविरुद्धा। ''अपाम सोममि''ति श्रुतिः, ''स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते'' इति श्रुतिर्न फलस्य नित्यतां दर्शयति, वाक्यस्य फलविषयत्वकल्पना तु पूर्ववत् प्रमाणविरुद्धा; अविरोधापेक्षत्वात् कल्पनायाः। किञ्च ''यदि ह वा अप्यनेवविद् महत्पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयते'' इत्युपक्रम्य ''स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते'' इति वचनादात्मोपासनाकर्मण एवापरोक्षानुभवद्वारेणाक्षयाविद्यानिवृतितफलत्वात्—''न कर्म क्षीयते'' इत्युपासनाकर्मप्रशंसामात्रमतदुपादीयते। अनेवंविदः कर्मक्षयस्य श्रवणादेवंविदाऽनुष्ठितस्याग्निहोत्रादेरेव मोक्षफलपपन्नम्, इत्यनुमानं ''ब्रह्मवेद ब्रह्मैव भवती'' त्यादिश्रुतिविरुद्धम्; किन्तु बिम्ब-प्रतिबिम्बयोरिव तादात्म्यमुक्तम्। नच—सुखानुभवाभावादपुरुषार्थ इति—युक्तम्; ब्रह्मानन्दानुभवात्। ननु तादात्म्ये 'अहं सुखमि''त्यनुभवः स्यात्, 'नाहं सुखी'ति, 'अहं सुखी'ति चानुभवो लोके पुरुषार्थ इति, नैष दोषः सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वात्। ननु स्वाश्रयं सुखमेव पुरुषार्थो न सुखापरोक्ष्यमिति, न; उपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात् सुखमप्युपलभ्यमानमेव पुरुषार्थ इति गम्यते। तत्र साधनपारतन्त्र्यानित्यत्वादिवद् विषयसुखस्यात्मनो भेदोऽप्यानुषङ्गिको नावभासतेऽहं सुखीति, न पुरुषार्थतया, इत्यतो ब्रह्मानन्दोऽप्यपरोक्षावभासः पुरुषार्थ इति। ननु नास्ति नित्यं सुखमिति नैयायिकादयः, सत्यम्; नास्त्येव जन्यमपि सुखम्। ननु साधनोपादानाद् जन्यताऽवगम्यते, न; सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वात्, अन्यथा सुखसन्तानजन्म-प्रतिभासयोग्यत्वयोः साधनाधीनताकल्पनागौरवात् साध्यान्तराशेषतया वाऽव्यभिचारित्वेन वा निरुपाधिकप्रेमास्पदत्वेन वा सुखदुःखावस्थयोरविशेषेण सुखरूप आत्मा प्रत्यक्षेणावभासते। यस्मादतःशब्देन शङ्कानिराकरणहेतुसूचनद्वारेण साधनकलापस्य हेतुत्वं समर्थितम्[१]।

१. विवरण-पृ.-७५४-७५८।

तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति—ब्रह्मविद् आप्नोति परमिति भाष्यम्। अत्र भामती—यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपि स्यादित्यत आह तथाब्रह्मविज्ञानादिति''[१]।

ब्रह्म सुखं मोक्षाख्यं न दुःखलेशसंपृक्तमिति। तस्मात् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासेति।

## जिज्ञासापदार्थविचारः

जिज्ञासा ज्ञानेच्छा। ब्रह्मणो जिज्ञासा ब्रह्मकर्मकज्ञानेच्छा। ब्रह्मविषयकं यज्ज्ञानं तद्विषयिणी जिज्ञासेत्यर्थः। ब्रह्मज्ञानविषयः, ज्ञानमिच्छाविषयः। ''अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः, कर्मफलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः निःशेषसंसारबीजाद्यनर्थ निवर्हणात्। तस्माद् ब्रह्म जिज्ञासितव्यम्।

अत्र भाष्ये अवगतिः साक्षात्कारः। तत्पर्यन्तं ज्ञानमेषितव्यम्। अयं भावः—सुखदुःखावाप्तिपरिहारौ वा तदुपायौ वा तद्द्वारेणेच्छागोचरः। न चैवं ब्रह्मविज्ञानम्। न खल्वेतत् ब्रह्मविज्ञानमनुकूलं प्रतिकूलनिवृत्तिरिति वा। नापि सुखदुःखवाप्ति परिहारोपाय भूतं वेति। तस्मिन् ब्रह्मविज्ञाने सत्यपि सुखविशेषस्यादर्शनात्। अनुवर्तमानस्य च दुःखस्यानिवृत्तेः। साक्षात्कारपर्यन्तज्ञानस्य ग्रहणे च साक्षात्कारपर्यन्तं ज्ञान मिष्यमाणमिच्छाया कर्मभूतम्। अत एवोक्त ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्मेति। फलविषयत्वादिच्छायाः तदुपायं फलपर्यन्तं गोचरयतीच्छेति।

ज्ञानेन हि करणेनेत्यादौ किमिह ज्ञानमुच्यते—इत्यपेक्षायामुक्तं विवरणे—ननु किमिह ज्ञानमित्युच्यते? संवेदनमेव प्रमाणफलं विज्ञानमिति सुगत-प्रभाकर-वैशेषिक-नैयायिकाः। नच संवेदन-फल-चतुष्टयसन्निकर्षादि सामग्र्यं चान्तरेण प्रमातृव्यापारो नाम ज्ञानमस्तीति। वार्तिककारीयाणां तु प्रमातृव्यापारः संविज्जनको ज्ञानमिति। क्षपणक-लोकायतिकानां

१. भामती पृ.७४।

चात्मचैतन्यमेव ज्ञानम् । साङ्ख्य-वेदान्तिनां करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानम्, भावव्युत्पत्त्या संवेदनमिति । तत्र न तावत् स्थायिन्मात्मनि संवित्फलोदयः कर्तृव्यापारमन्तरेणोपपद्यते । ननु यतः कारणात् कर्तृ व्यापारजन्म, तत एवानुभवजन्मस्यात्, आत्मनः परिस्पन्दव्यापारानुपपत्तेरिति । अयमत्र वक्तव्यः—किं लोके कर्तृव्यापारात् फलजन्म प्रत्यक्षेणावगतम्? न वेति ? न चेद् व्याप्तिग्रहणाभावादप्रत्यक्षत्वाच्च न सर्वत्र कर्तृव्यापारावगमः स्यात् । अवगम्यते च लोके कर्तृव्यापारः । अथ लोके फलहेतुतया प्रत्यक्षसिद्धः कर्तृव्यापारः, तर्ह्यात्मन्यपि तदनुमीयते; व्याप्तिनियमात् । ननु न परिणामो नाम व्यापारोऽस्ति, आरम्भाभ्युपगमादिति वैशेषिकादयः, तर्हि प्रयत्नव्यापारजन्यं फलमस्तु, कर्तृव्यापारव्याप्तिनियमात्फलस्य । ननु मनःसंयोगादेवासमवायिकारणाद् व्यापारमन्तरेण ज्ञानमुत्पद्यते, न; करणसंयोगव्यतिरेकेण फलजन्मनि कर्तृव्यापारदर्शनात् । अत्र सर्वसङ्करवादी विलपति—पाकादिषु फलस्य कर्तृव्यापाराधीतादर्शनात् तत्र तथाऽवगम्यताम्, इह तु तद्दर्शनाभावान्न कर्तृव्यापारः—इति, स चानुमानप्रक्रियायामनभिज्ञ इत्युपेक्ष्यते । सुगतानामपि नित्यात्मसाधनादेव संविदां । कर्तृव्यापारापेक्षाऽनुमीयते । क्षपणकानामपि स्वरूपचैतन्यस्य निरुपाधिकस्य विषयावभासित्वे सर्वदा सर्वविषयावभासः स्यात् । लोकायतस्य च जन्यसंवेदनत्वात् तद्व्यापारानुमानम् । ननु सर्वगतस्य निरवयवस्यात्मनो न परिस्पन्द-परिणामौ युक्तौ, सत्यम्; अध्यासपरिनिष्पन्नान्तःकरणसम्पिण्डितस्यात्मनो ज्ञानाकारपरिणामात् । नच संवेदनाकारेण परिणामः; तस्य नित्यसिद्धत्वात्; अतोऽन्तःकरणपरिणामविशेषश्चैतन्यस्य विषयावच्छेदोपाधिः करणव्युत्पत्त्या ज्ञानम्, भावव्युत्पत्त्या तु संवेदनमेवार्थप्रकाशो ज्ञप्तिर्ज्ञानमित्युच्यते । तत्रार्थोपाधि, अपरोक्षसंविदवच्छेदकं ज्ञानमपरोक्षम्, इति तत्रावयवार्थव्युत्पादनेनापरोक्षावगमेच्छाया वाक्यार्थत्वमुक्तम्[१] ।

१. पञ्चपादिकाविवरण-पृ.७७५-७७७ ।

## ब्रह्मजिज्ञासापदस्य समासविचारः

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाणलक्षणं जन्माद्यस्य यत इति। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम्। ब्रह्मण इति कर्मणि षष्ठी न शेषे।[१]

षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थी समासः परास्तो वेदितव्यः इत्यादि[२]।

अयं भावः। प्राचीनैः वृत्तिकृद्भिः ब्रह्मणे जिज्ञासेति विगृह्य **'चतुर्थी तदर्थार्थबलिहित-सुखरक्षितैरिति**[३] सूत्रेण पाणिनीयेन तादर्थ्ये समासः कृतः ब्रह्मार्था जिज्ञासेत्यर्थः।

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (पा.सू. २/१/३६) इति सूत्रे सुप्सुपेति वर्तते तस्य विशेषणमेतत् चतुर्थी। तदिति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते तस्मै इदं तदर्थम्। तदर्थार्थ बलिहितसुखरक्षित इत्येतैः सुबन्तैः सह चतुर्थ्यन्तं सुबन्तं समस्यते स च तत् पुरुष इति।

तादर्थ्ये—यूपाय दारू, यूपदारु। कुण्डलाय हिरण्यं कुण्डलहिरण्यम्। प्रकृतविकृतिभाव एवेष्यते। नेह भवति रन्धनाय स्थाली, अवहननायोलूखलमिति। अत्र चतुर्थी चास्मादेव समासविधायकात् सूत्रात् सामर्थ्यात् भवति।

अर्थे—''अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या'' इति वार्त्तिकम् ब्राह्मणार्थं पयः ब्राह्मणार्था यवागूः।

बलिशब्देन समासः कुवेरायबलिः कुवेरबलिः महाराजबलिः। हितेन समासः गोहितम्, अश्वहितम्। सुखेन समासः, गोसुखमश्वसुखम्। रक्षितेन च गोरक्षितमश्वरक्षित-मित्युदाहरणानि। अत्र वार्त्तिककारेण कात्यायनेनायं तादर्थ्यसमासः प्रकृतिविकृतिभाव एवेति नियमितः। तेन रन्धनाय स्थालीत्यादौ न समासः।

१. भाष्यम्-पृ.-७६।
२. भामती-पृ.-७६।
३. पा.सू.-२/१/३६।

तत्र प्रकृत भाष्ये—चतुर्थी तदर्थमात्रेण चेत् सर्वप्रसङ्गोऽविशेषात् इति यथा श्रुतसूत्रार्थे अनुपपत्तिप्रदर्शकं वार्त्तिकम् । सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः रन्धनाय स्थालीत्यादावपि प्रसङ्गः । अतः तादर्थ्ये प्रकृति विकृति ग्रहणं कर्त्तव्यम् इति कात्यायनवचनेन प्रकृतिविकृतिभाव एवायं तादर्थ्ये समासः । प्रकृतिविकृतिभावग्रहणे अश्वघासादीनामुपसंख्यानमिति वार्त्तिक अश्वाय घास इत्यादौ समास विधानार्थं पठितम् । तदनुरोधने चतुर्थीसमासं परित्यज्य भाष्यकारेण षष्ठी समासः आश्रितः । नहि ब्रह्मतज्जिज्ञासयो प्रकृतिविकृतिभावः ।

श्रीमदाचार्य कात्यायन श्रीमहाभाष्यकारपतञ्जलिमतं ससन्दर्भं प्रकृतं विवेचितं कल्पतरौपरिमले—स्पष्टार्थमत्रोद्ध्रियते—चतुर्थी तदर्थमात्रेणेति चेत्, सर्वप्रसङ्गोऽविशेषादिति, यथाश्रुतसूत्रार्थे अनुपपत्तिप्रदर्शकमेकं वार्तिकं । सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः, रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येतेत्यर्थः । विकृतिः प्रकृत्येति चेद् 'अश्वघासादीनामुपसंख्यान'मिति वार्तिकान्तरं । यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृतिवाचिना समस्यत इति विशेष्यते, तदा सर्वप्रसङ्गः परिहृतो भवति, किंतु अश्वाय घासोऽश्वघास इति समासो न प्राप्नोति; वार्तिककारमतम् । एतदवलम्बनेनैव धर्माय जिज्ञासा धर्मजिज्ञासेति शबरस्वामिभिश्चतुर्थीसमासः समाश्रितः । कात्यायनेनैवेति । कात्यायनग्रहणमनादरेण शब्दाभियुक्तमात्रोपलक्षणं भाष्यकाराभिप्रायम् । भाष्यकारैः खलु तत्र वार्तिकमुल्लङ्घ्य यथाश्रुतसूत्रं समर्थयमानैः षष्ठीसमासः समाश्रितः । अत्रेदं भाष्यकारीयं वार्तिकप्रत्याख्यानम्—प्रकृतिविकृतिग्रहणाय यत्नस्तावन्न कर्तव्यः, सूत्रे बलिरक्षितग्रहणेन ज्ञापकेन तदर्थसिद्धेः । यदिहि तदर्थसमासस्तदर्थमात्रविषयः स्यात्, तदा कुबेराय बलिः कुबेरार्थो भवति, अश्वाय रक्षितम् अश्वार्थं भवतीति कुबेरबलिः अश्वरक्षितमिति समासयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं न कर्तव्यं स्यात्; तत्कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषय इति । तथाऽश्वघासाद्युपसंख्यानयत्नोऽपि न कर्तव्यः;

तेषु षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेन षष्ठीसमासोपपत्तेः—इति ।। एवं सूत्रानुसारि-भाष्यकारमतप्राबल्याद् वार्तिककारमतमनादृत्य चतुर्थीसमासासंभव उक्तः । इदमेव भाष्यकारमत-मनुसृत्य भट्टपादैर्धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरं, नतु विग्रहप्रदर्शनपरम्; तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविभावनादिति व्याख्यातम् । आत्मनेपदपरस्मैपदशब्दयोः प्रकृतिविकारभावाभावेऽपि तादर्थ्यसमास्तु 'वैयाकरणाख्यायां चतुर्थ्या' इत्यलुग्विधानसामर्थ्यात् । समासातंरमुपसंख्यातमिति । षष्ठीसूंत्रविहितं समासान्तरं भाष्यकारैरङ्गीकृतमित्यर्थः । ननु 'ज्ञातं ब्रह्म विषयो' 'ज्ञातं ब्रह्म प्रयोजन'मिति ब्रह्मविषयप्रयोजनोभयरूपमिष्यते, तत्र प्रयोजनत्वप्रतिपत्त्युपयोगीं चतुर्थीसमास इहासाधुरिति त्यक्तः, एवमेवात्र विषयत्वप्रतिपत्त्युपयोगी षष्ठीसमासोऽप्यसाधुरेव । तथाहि—केन सूत्रेणेह षष्ठी; 'षष्ठी शेष' इति सूत्रेण वा, 'कर्तृकर्मणोः कृती'ति सूत्रेण वा । नाद्यः, कर्मत्वं वाच्यं परिग्राह्यमिति शेषषष्ठ्यास्त्वया त्यक्तत्वात् । न द्वितीयः; 'प्रतिपदविधाना च षष्ठी न समस्यत' इति वार्तिकेन वैशेषिकसूत्रविहितषष्ठ्याः समासप्रतिषेधात् । अतएव सर्पिषो ज्ञानमित्यत्र सर्पिषाकरणेन प्रवृत्तिरित्यर्थके 'ज्ञोऽविदर्थस्य करणे' इति सूत्रेण वित्तिव्यतिरिक्त-प्रवृत्तिरूपार्थान्तरमुक्तम् । जानातिकरणत्वनिमित्ता प्रतिपदविहिता षष्ठीति न समास इति चेत्याशङ्क्याह—कर्मकर्मणोः कृतीति । कर्मत्वस्य वाच्यत्वसिद्ध्यर्थं द्वितीयपक्ष एवात्र परिगृह्यते । अस्ति ह्यत्र कृद्योगः, जिज्ञासापदस्य 'अ प्रत्यया'दिति प्रत्ययान्तरधातोरुपरि विहिताकारप्रत्ययान्तरत्वाद्, अकारप्रत्ययस्य च 'कृदतिङ्'ि ति सूत्रेण कृत्संज्ञाकत्वात् । नच समासासंभवः; 'कृद्योगलक्षणा च षष्ठी समस्त' इति प्रतिपदविधानत्वेऽपि कृद्योगनिमित्तषष्ठ्याः समासाभ्यनुज्ञानादिति भावः । ननु कृद्योगलक्षणषष्ठीष्वपि कर्मणि या षष्ठी तस्या समासः 'कर्मणि चे'ति सूत्रेण प्रतिषिद्ध इत्याशङ्क्याह—यस्तु कर्मणीति । 'कर्मणि चे'ति सूत्रेण कर्मषष्ठीमात्रस्य समासप्रतिषेधो न भवति; तथा सति ६कर्तरि चे'ति सूत्रवैयर्थ्यप्रसङ्गात् । तेन हि सूत्रेण कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठ्या समासो

निषिध्यते, अपां स्रष्टा ओदनस्य भोजक इत्यादौ। नच कर्मषष्ठीमात्रस्यात्र समासनिषेधे तत्सफलं भेवद्; अतः 'कर्मणि चे'ति सूत्रे चकार इतिकारार्थः कर्मणीति शब्दमुच्चार्य या षष्ठी नियमिता, सा न समस्यत इति तदर्थः। ततश्च 'उभयप्राप्तौ कर्मणी'ति सूत्रेण कर्मणीति शब्दमुच्चार्य नियमिता षष्ठी तस्य समासप्रतिषेधस्य विषयो, नतु 'कर्तृकर्मणोः कृती'ति सूत्रविहिता कर्मणि षष्ठीत्यर्थः। नन्विहाप्युभयप्राप्तिसूत्रनियमितैव कर्मणि षष्ठी। तस्य हि सूत्रस्यैवमर्थः। कर्तृकर्मणोरुभयोः षष्ठीप्राप्तिर्यत्रैकस्मिन्कृति' भवति तस्मिन् कृति सति कर्मण्येव षष्ठी न कर्तरीति। तथाचात्र साधनचतुष्टयसंम्पन्नः कर्ता यदि श्रूयेत, तदा तस्मिन्नपि कर्मणीव 'कर्तृकर्मणोः कृती'ति सूत्रेण षष्ठ्याः प्राप्तौ निमित्तं भवति जिज्ञासेति कृत्प्रत्ययः, अतोऽत्र 'कर्मणि चे'ति समासप्रतिषेधः स्यादेवेत्याशङ्क्याह—सामर्थ्यादुपादान-प्राप्ताविति। 'कृत्वोर्थप्रयोगे कालेधिकरणे' इति व्यवहितपूर्वसूत्रात् प्रयोग इत्यनुवर्तते। तच्च कर्तृगतकिंचिदतिशयविवक्षासामर्थ्यात् कर्तृकर्मोभयप्रयोगावश्यंभावपरम्। एवंचाश्चर्यो गवां दोह इत्यादिरेवोभयप्राप्तिसूत्रविषयः। तत्रह्याश्चर्यशब्दसूचितकर्तृगतातिशयोपपादनो-पयोगितया दुर्दोहत्वरूपाजातिवैलक्षण्यसूचनाय गोत्वेन दोहकर्मणां तद्दोहासामर्थ्यसंभावना-सूचनायाशिक्षितत्वादिना दोहकर्तृश्चोपादानमपेक्षितं कृतं, नेह तथा किंचिदतिशयविवक्षा कर्तृरुपादानं कृतमस्तीति नात्रोभयप्राप्तिसूत्रेण कर्मणिषष्ठीनियमनमित्यर्थः। ननु—यत्र कर्तृकर्मोभयप्रयोगो नास्ति, तत्र गम्यमानेऽपि कर्मण्युभयप्राप्तिसूत्रेण कर्तरि षष्ठ्याः प्रतिषेधमभिप्रेत्य तृतीयाप्रयोगः सूत्रकारेणैव कृतो दृश्यते 'अन्तर्धौ येनादर्शनमिच्छती'ति; अन्तर्धिनिमित्तं यत्कर्तृकदर्शनाभावं स्वात्मनः कर्मेणोऽन्तरङ्गप्रत्यासत्त्या गम्यमानस्येच्छति तस्यापादानसंज्ञा अनेन सूत्रेण विधीयते, तथा चोपाध्यायादन्तर्धत्त इत्यत्र पञ्चमी भवति। नच कर्मणि गम्यमाने एवोभयप्राप्तिसूत्रप्रवृत्तिः न कर्तरि गम्यमान इति विशेषः शङ्कनीयः; कर्तृकर्मोभयोपादाननियमभङ्गे सत्यस्य विशेषस्याप्रयोजकत्वात्, इहापरितोष इति चेद्, एवं परिहारो द्रष्टव्यः; अकाकारयोः प्रतिषेधो नेति वक्तव्यं, 'शेषे विभाषे'ति भाष्यकारै'रुभयप्राप्तौ

कर्मणी'ति कर्तरि षष्ठीप्रतिषेधस्य अके अकारे च कृति नित्यमप्रवृत्तिः, स्त्रीप्रत्ययरूपे कृति, तद्व्यतिरिक्तमात्रे वा विकल्पेनाप्रवृत्तिश्चोक्ता, उदाहृतं च भेदिका देवदत्तस्य काष्ठानां; चिकीर्षा विष्णुमित्रस्य कटस्येति, शोभना खलु पाणिनेः सूत्रस्य कृतिः शोभना खलु पाणिनिना सूत्रस्य कृतिरिति च। तस्मादिह जिज्ञासेत्यकारप्रत्यययोगाद् नोभयप्राप्तिसूत्रविषयत्व- शङ्कावकाश इति। अयमपि परिहारो जिज्ञासापदस्याकारप्रत्ययान्तत्वं दर्शयद्भिराचार्यैः सूचितः[१]।

तथा च ब्रह्मकर्मिकाजिज्ञासेत्यर्थः। ननु शेषषष्ठी परिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते। सम्बन्धस्य सामान्यस्य विशेषनिष्ठत्वात्। न हि निर्विशेषं सामान्यं भवतीति सम्बन्धसामान्ये विहिता शेषषष्ठी सम्बन्धविशेषमादाय पर्यवसास्यति। ब्रह्मणो जिज्ञासेत्यत्र ब्रह्मकर्मिका जिज्ञासेत्यर्थो लभ्यत एवेति।

नच प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतोव्यर्थः प्रयासः स्यादिति वाच्यम्। तादृशप्रयासस्याधिकारार्थप्रयोजनत्वात्। तथाहि ब्रह्मणोजिज्ञासेति शेषषष्ठी परिग्रहे ब्रह्मसम्बन्धिनी जिज्ञासेत्यर्थः स्यात्। तथाच ब्रह्माश्रिताशेषविचारप्रतिज्ञासिद्धिः स्याद् इति चेद्, अत्रोच्यते—कर्मषष्ठीपरिग्रहेऽपि ब्रह्मसम्बद्धाशेषविचारपरिग्रहो भवति। प्रधाने परिगृहीते तत् सम्बन्धिनोऽप्रधानस्य तद्ग्रहणे नैव ग्रहणं भवति। यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति। तद्वद् जिज्ञासाकर्मभूते प्रधाने ब्रह्मणि परिगृहीते तद्सम्बद्धाशेष समन्वयविरोधपरिहारसाधनफलादीनां परिग्रहो भवत्येवेति शेषषष्ठी पक्षो नाद्रियते।

श्रुत्यनुगमाच्च कर्मषष्ठी परिज्ञायते। "यतो वा इमानि भूतानि जायन्ते"[२] इत्याद्याः श्रुतयः तद्विजिज्ञासस्व तद्ब्रह्मेति प्रत्यक्षमेव ब्रह्मणो जिज्ञासकर्मत्वं दर्शयन्ति। तच्च कर्मणि षष्ठी परिग्रहे सूत्रेणानुगतं भवति।

---

१. कल्पपरिमलः-पृ.७४-७७।

२. तै.३/१।

अत्र पञ्चपादिका विवरणादीनामभिप्रायः—ब्रह्मणो जिज्ञासेति षष्ठीसमासपक्षः अवयवार्थमादाय । अन्तर्णीतविचारार्थान्वये हि चतुर्थी समासः स्यात् । ज्ञातुमिच्छा जिज्ञासेत्यत्रावयवेच्छारूपार्थ अन्वयाभिप्रायेण कर्मणि षष्ठी । जिज्ञासेत्यत्र प्रत्ययार्थस्य सनर्थस्येच्छारूपस्य प्राधान्यात् तस्य कर्मप्रयोजनयोरैक्यात् कर्मणि षष्ठीसमासः । कर्म च प्रयोजनश्चेच्छाया ब्रह्मैव ।

विचार प्राधान्ये तु कर्मप्रयोजनयोर्भेदात् प्रयोजनविवक्षया चतुर्थीसमासपक्षः ।

अवयवार्थभूतेच्छाप्राधान्ये कर्मणि षष्ठीकर्मप्रयोजनयोरैक्यात् । विचारप्राधान्ये तु चतुर्थीसमासः स्यादिति विवरणम् । जिज्ञासापदमवयवार्थप्रधानमेवात एव इच्छाया अनधिकार्यत्वादिति भाष्यकारः प्राह किन्तु यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्येति कर्त्तव्येति भाष्यवचनात् ब्रह्मज्ञानविषयिणीच्छा इष्यमाणस्य ज्ञानस्य विचारसाध्यत्वात् विचारमाक्षिपति । तथा चाक्षेपादेव विचारस्य लाभः न तु जिज्ञासापदार्थ एव विचार इति । न वा लक्षणया विचार उपस्थाप्यते । इष्यमाणस्य ज्ञानस्य इच्छाविषयीभूतस्य विचारं विनानुपपत्तेः इच्छा विचारमाक्षिपतीति मतम् ।

अथवा जिज्ञासापदस्य लाक्षणिकोऽर्थः विचार इति अवयवार्थस्तु ज्ञानेच्छेति । तत्र लाक्षणिकार्थमादाय चतुर्थी समासः स्यादिति ।

किन्तु तत्रापि प्रकृतिविकृतिभावाभावात् न चतुर्थी समास इति बोध्यम् ।

ज्ञातुमिच्छा जिज्ञासेति ज्ञाधातोः सनि अप्रत्ययान्तात् टापि जिज्ञासा शब्दो निष्पद्यते ।

# चतुर्थोऽध्यायः

## ब्रह्मणो जिज्ञास्यत्वविचारः

ब्रह्मजिज्ञासितव्यमित्युक्तम् । नित्यानित्यवस्तुविवेकेहामुत्रफलविरागशमदमादि-सम्पत्तिमता मुमुक्षुणा ब्रह्म जिज्ञासितव्यम् । ब्रह्मावगतिः हि पुरुषार्थः स चेष्टः । पुरुषार्थत्वं च निःशेषसंसारबीजाविद्याद्यनर्थनिवर्हणात् । न खलु ब्रह्मसाक्षात्कारं विना सवासनविविध-दुःखमूलम् अविद्योच्छिद्यते । न च तदुच्छेदमन्तरेण विगलितनिखिलदुःखानुषङ्गानन्दघन ब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य । तस्माद् आनन्दघनब्रह्मतामिच्छता तदुपायो ब्रह्मज्ञानमेषितव्यमिति ।

ननु यदसंदिग्धमप्रयोजनं च न तत् प्रेक्षावतां प्रतिपित्सागोचरो भवति । यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः करतदन्ता वा । तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । जिज्ञास्यत्वव्यापके सन्दिग्धत्वसप्रयोजनत्वे तद्विरुद्धे च असंदिग्धत्वनिष्प्रयोजत्वे च तयोरूपलब्धिः । तथा च व्यापकाभावे व्याप्यस्य जिज्ञास्यत्वस्यापि ब्रह्मणि अभावः प्रसज्येत ।

ब्रह्म च असंदिग्धम् तज्ज्ञानञ्च निष्प्रयोजनमिति । तथाहि—वृहत्वात् वृहंणत्वाचात्मैव ब्रह्मेति श्रुतिस्मृतिषु गीयते । आत्मा वा इदमेक एवाग्र आसीत् । अयमात्मा ब्रह्मेति सदेव सोम्येदमग्र आसीत् ------स आत्मा तत्त्वमसीत्यादि श्रुतिभिः । अहमात्मा गूडाकेश सर्वभूताशयस्थितः------ । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत इत्यादि स्मृतिश्च । स च आत्मा आकीटपतङ्गेभ्यः आ च देवर्षिभ्यः प्राणमृन्मात्रस्य इदंकारास्पदेभ्यः देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन अहमित्यसंदिग्धाविपर्यस्तापरोक्षानुभव सिद्धः । न हि

जातु कश्चित् अत्र स्वात्मविषये संदिग्धे अहं वा नाहं वेति । न च विपर्यस्यति नाहमेवेति तस्मात् सन्देहाभावात् नात्मा ब्रह्म जिज्ञास्यम् । न चाहं प्रत्ययस्य देहादिमिश्रविषयत्वात् कथं तेभ्यो विविक्तविषयत्वमिति वाच्यम् । देहालम्वनत्वे योऽहं बाल्ये पितरम वन्वभवं स एव स्थविरे प्रणप्तॄन् अनुभवामीति प्रतिसन्धानं न भवेत् । बालस्थविरयोः शरीरयोर्मनागपि प्रत्यभिज्ञानगन्धाभावात् । नहि शरीरयोस्तयो रैक्यमस्ति येनोक्तानुभवे ऐक्यमध्यवसीयेत । अतः येषु व्यावर्तमानेषु यदनुवर्तते तत् तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम् । बालादिशरीरेषु व्यावर्तमानेषु अनुवर्तमानमहंकारास्पदं तेभ्यो भिन्नमेव स चात्मा । अपि च स्वप्नान्ते दिव्यं शरीरमास्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् नाहं देवोऽपि तु मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहंकारास्पदमबाध्यमानं शरीराद् भिन्नं प्रतिपद्यते । किञ्च योगव्याघ्रः शरीरभेदेऽपि आत्मानमभिन्नमनुभवतीति नाहंकारास्पदं देहः । अतएव नेन्द्रियाणि अपि अहंकारास्पदम् तेषां भेदेऽपि योऽहमद्राक्षं स एवेदानीं स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यो भेदस्तु स्थवीयान् । बुद्धिमनसोस्तु करणयोरहमिति कर्तृप्रतिभासालम्बनत्वायोगः । कृशोऽहमन्धोऽहमित्यादि प्रयोगाः मञ्चाः क्रोशन्तीत्यादिवद् लाक्षणिकेति असंदिग्ध आत्मा अहमालम्बनः अजिज्ञास्यः । अप्रयोजनत्वाच्चाजिज्ञास्य आत्मा । तथाहि संसारनिवृत्तिरपवर्गः प्रयोजनं विवक्षितम् । संसारश्च आत्मयाथात्म्यस्य अनुभवाभावात् प्रवर्तमानः आत्मयथात्म्यज्ञानेन निवर्तनीयः । स चानादिः संसारः, अहमित्यात्मयाथात्म्यज्ञानेन सहानुवर्तते इति कुतोऽस्य निवृत्ति, अविरोधात् । न चाहमित्यनुभवादतिरिक्त आत्मयाथात्म्यावबोधः कश्चिदन्यः । अहमितिस्फुटतर-सर्वजनीनात्मानुभवातिरिक्तात्मप्रतिपादिका उपनिषदश्च लोकसिद्धानुभवबलाद् औपचारिक्य इति । तस्मात्प्रयोजनाभावादपि नात्मा जिज्ञास्यः ।

तथा प्रयोगाः—मुमुक्षुणा ब्रह्म नजिज्ञास्यं तं प्रति निःसंदिग्धत्वात् स्फीतालोकमध्यवर्ती कुम्भवत् । निष्प्रयोजनत्वात् काकदन्तवत् इति ।

अत्र विचार्यते—ननु-हेतुसाध्योर्मुमुक्षुविशेषणं किमर्थम्। नच-अमुमुक्षोः सर्वप्रपञ्चविषयो येनकेनचित्प्रकारेण संदेहस्तन्निवर्तनार्थं विचारश्च संभवतीति कुम्भाहमर्थयोरपि तद्विषयत्वावश्यं-भावादृष्टान्ते हेतुसाध्यवैकल्यं, पक्षे हेत्वसिद्धिबाधौ च स्यातामिति तद्वारणार्थं मुमुक्षुविशेषणमिति-वाच्यम्; मुमुक्षोरपि तथाविधसंदेहविचारयोः संभवेन तत उक्तदोषनिवारणात्, नच-यस्य मुमुक्षोस्तौ न स्तः सोऽत्र विशेषणमिति-वाच्यम्; ब्रह्मविचारार्थमिदं शास्त्रमारम्भणीयमिति वदतः सिद्धान्तिनो मते, प्रपञ्च सत्यो मिथ्या वा, सन् असन्वा, जीवः स्वाभाविकचैतन्य आगन्तुकचैतन्यो वेत्यादिसंदेहस्य तत्तदधिकरणनिरूपितन्यायानुसंधाननिवर्तनीयस्यावश्यंभावेन प्रतिवादिनं प्रति पक्षदृष्टान्तयोर्हेत्वसिद्धेरनिवारणात्, मुमुक्षुज्ञातव्येन रूपेणासंदिग्धत्वं हेतुर्विवक्षित इति चेत्, न; स्वाभाविकचैतन्यत्वादेरपि मुमुक्षुज्ञातव्यतायाः सिद्धान्तिना वाच्यत्वात्, अन्यथा तेन मोक्षार्थमारभ्यमाणेऽस्मिन्शास्त्रे तद्विचारानुपपत्तेः—इति चेत्, उच्यते; मोक्ष-जनकत्वाभिमतज्ञानविषयेण रूपेणासंदिग्धत्वं हेतुः। नचाहंत्वादन्यन्मोक्षजनकत्वाभिमतज्ञानविषय इति सिद्धान्तिना वक्तुं शक्यम्; ब्रह्मज्ञानं मोक्षहेतुरिति वदतः सिद्धान्तिनो मते अहमिति ज्ञानमेव मुक्तिहेतुस्यादित्यापाद्य पूर्वपक्षप्रवृत्तेः। पक्षदृष्टान्तयोर्बाधसाध्यवैकल्यपरिहारार्थं साध्येऽपि मुमुक्षुविशेषणम्; अन्यथा सर्वप्रपञ्चविषयसत्यत्वमित्यात्वारम्भपरिणामादिविचारं मुमुक्ष्वमुमुक्षुकृतं प्रतिपक्षदृष्टान्तीकृताहमर्थकुम्भव्यक्त्योरपि विषयत्वावश्यंभावाद्बाधसाध्यवैकल्ये स्याताम्। नच-मुमुक्षुविशेषणलभ्ये मोक्षजनकत्वाभिमतज्ञानविषयेण रूपेण विचार्यत्वाभावे विवक्षितेऽपि साध्ये दोषतादवस्थ्यम्, पक्षे अहंत्वस्य दृष्टान्ते तद्व्यतिरेकस्य च लोकसिद्धत्वेऽप्यनुमित्सया विचारसंभवादिति-वाच्यम्; मोक्षजनकज्ञानप्रकारप्रकारक-संदेहनिवृत्त्यर्थविचारविषयत्वाभावस्य साध्यार्थस्य विवक्षितत्वात्। एवं चाहमिति सदावभासमानं ब्रह्म नाहंत्वप्रकारकसंदेहनिवर्तकविचारविषयः, अहंत्वेन निश्चीयमानत्वाद्, यो यदा येन प्रकारेण निश्चीयते, स तदा न तत्प्रकारकसंदेहनिवर्तकविचारविषयः, यथा समनस्केन्द्रियसंनिकर्षे स्फीतालोकमध्यवर्तितादशायां घट इत्यनुमाननिष्कर्षः। नच प्रतियोग्यप्रसिद्ध्या

साध्याप्रसिद्धिर्दोष:; साध्यविशेषप्रसिद्धिं विनापि घटे सामान्यव्याप्तिग्रहोपपत्ते: । विशिष्टैशिष्ट्यज्ञानरूपाया: प्रतीोगिविशिष्टाभावरूपसाध्यविशिष्टानुमिते: अहंत्वप्रकारकत्वसंदेह-निवर्तकविचारविषयत्वयोर्विशकलितप्रसिद्ध्या विशेष्ये विशेषणं च विशेषणान्तरमित्युक्त-रूपविशिष्टवैशिष्ट्यज्ञानसामग्र्योपपत्ते: । नच प्रतियोग्यप्रसिद्धिरपि; देहेन्द्रियेषु तत्प्रसिद्धे: सुलभत्वात्[१] ।

तथा च भाष्येऽप्युक्तम्—"तत् पुनर्ब्रह्मप्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धं न जिज्ञासितव्यम् । अथाप्रसिद्धं नैव शक्यं जिज्ञासितुम्[२] ।

तत्रत्य भामतीकाराणामयमाशय:—ब्रह्मवेदान्तेभ्योऽपौरुषेयतया स्वत:सिद्धप्रमाण-भावेभ्य: प्रसिद्धमप्रसिद्धं वा स्यात् । प्रसिद्धम् वेदान्तवाक्यसमुत्थेन निश्चयज्ञानेन विषयीकृतम् । ततो न जिज्ञासितव्यम् । निष्पादितक्रिये कर्मणि अविशेषाधयिन: साधनस्य साधनन्यायातिपातात् । यदि सर्वथा अप्रसिद्धं तर्हि नैवशक्यं जिज्ञासितुम् । अनुभूते हि प्रिये भवतीच्छा न तु सर्वथाननुभूते । न चेष्यमाणमपि शक्यं ज्ञातुं प्रमाणाभावात् । प्रमाणञ्च शब्द एव । यथा च वक्ष्यति शास्त्रयोनित्वादिति । यदि शब्दोऽपि नावबोधयति कुतस्तस्य प्रमाणम् । न च प्रमाणान्तरं ब्रह्मणि प्रक्रमते । तस्मात् प्रसिद्धिपक्षेऽप्रसिद्धिपक्षे उभयोरपि ब्रह्म न जिज्ञास्यम् । एवञ्च साधनचतुष्टय सम्पन्नाधिकारिनिश्चयेऽपि ब्रह्मजिज्ञासाया विषयप्रयोजनसम्बन्धाभावात् जिज्ञासाऽनुपपन्नेति ।

अत्रेदं बोध्यम्—'यत् पूर्वमहमिति निश्चय: आत्मविषयक उक्त: स अनुपपन्न: । न हि अहमिति प्रत्यये आत्मतत्त्वं प्रकाशते । किन्तु तस्मिन् प्रत्यये प्रादेशिक: अनेकविध-शोकदु:खादि प्रपञ्चोपप्लुत आत्मा अध्यस्तानात्मा प्रकाशते । आत्मतत्त्वञ्च समस्तो पाध्ययनवच्छिन्नचिन्मात्रमद्वितीयं श्रुतिस्मृत्यादिभ्य: प्रतिपाद्यते । यादृशमात्मतत्त्वं वेदान्तादिभ्य:

१. कल्पतरूपरिमल-पृ.५ ।
२. शा.भा.पृ.७९ ।

प्रतिपिपादयिषितम् न तादृशं अहमनुभवे प्रकाशितम्। न च अहमिति प्रत्यक्षानुभवबलाद् तादृशमेवात्मतत्त्वं मन्तव्यम् न श्रुत्यादिप्रसिद्धं प्रत्यक्षस्य ज्येष्ठप्रमाणत्वात् प्राबल्याद् इति वाच्यम्। अपौरुषेयत्वात् निरस्तसमस्तदोषाशङ्कस्य स्वत:सिद्धप्रामाण्यस्य प्रत्यक्षापेक्षया वेदस्य बलवत्त्वात् इत्यादिभिर्युक्तिभिः भमत्यां विशुद्धात्मतत्त्वाविषयकत्वमुक्तमहमिति प्रत्ययस्य। तथाहि तत्रत्या भामती—भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत, नत्वेतदस्ति। तथाहि—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते। नचैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्; अभ्यासे हि भूयस्त्वमर्थस्य भवति; यथाहो दर्शनीयाहो दर्शनीयेति, न न्यूनत्वं, प्रागेवोपचरितत्वमिति। अहमनुभवस्तु प्रादेशिकमनेकविधशोकदु:खादिप्रपञ्चोपप्लुतमात्मानमादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः। नच ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति-युक्तम्; तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य, बोधकतया स्वत:सिद्धप्रमाणभावस्य, स्वकार्ये प्रमितावनपेक्षत्वात्। प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेत्, न; उत्पादकाप्रतिद्वन्द्वित्वात्। नह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति; येन कारणाभावान्न भवेत्, अपितु तात्त्विकम्; नच त ास्योत्पादकम्; अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्। तथा च वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः; न हि लौकिका नाग इति वा नग इति वा पदात्कुञ्जरं वा तरुं वा प्रतिपाद्यमाना भवन्ति भ्रान्ताः। नचान्यपरं वाक्यं स्वार्थं उपचरितार्थ युक्तम्; उक्तंहि—'न विधौ परः शब्दार्थः' इति। ज्येष्ठत्वं चानपेक्षितस बाध्यत्वे हेतुः, न बोधकत्वे, रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्, तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुपपत्तेः। दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम्। तथा च पारमर्षं सूत्रं—'पौर्वापर्ये पूर्वदौर्बल्यं

प्रकृतिवत्'[1] इति। तथा 'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्।' इति। अपि च येऽप्यहंकारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्; 'अहमिहैवास्मि सदने जानानः' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्, उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत्। नच-इदं देहस्य प्रादेशिकत्वमनुभूयते नत्वात्मन इति सांप्रतम्; नहि तदैवं भवति—'अहम्' इति; गौणत्वे वा न 'जानानः' इति। अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः, स गौणः; स च भेदप्रत्ययपुरःसरः, तद्यथा नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः[2]। प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि 'मासमग्निहोत्रं जुहोति'[3] इत्यत्र साध्यसादृश्येन गौणः, माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः, नत्वहंकारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते, येन परशब्दः शरीरादौ गौणो भवेत्। नच-अत्यन्तनिरूढतया गौणेऽपि न गौणत्वाभिमानः सार्षपादिषु तैलशब्दवदिति-वेदितव्यम्, तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमानो नत्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः। तत्सिद्धं गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तं, तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति। नच-बालस्थविरशरीभेदेऽपि सोऽहमित्येकस्यात्मनः प्रतिसंधानाद्देहादिभ्यो भेदेनास्त्यात्मानुभव इति-वाच्यम्; परीक्षकाणां खल्वियं कथा, न लौकिकानाम्, परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते; वक्ष्यत्यन्तरमेव हि भगवान्भाष्यकारः-'पश्वादिभिश्चाविशेषात्' इति। बाह्या अप्याहुः-शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः' इति। तत्पारिशेष्याच्चिदात्मगोचरमहंकारमहमिहास्मि सदन इति प्रयुञ्जानो लौकिकः शरीरादभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घटमणिकमल्लिकाद्युपाध्य-

---

१. जै.अ.६पा.५सू.५४।

२. जै.अ.१पा.४सू.४।

३. जै.अ.७पा.३सू.१।

वच्छेदादिति युक्तमुत्पश्यामः । नच-अहंकारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति-युक्तम्; तदा खल्वयमणुपरिमाणो वा स्याद्देहपरिमाणो वा । अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति च न स्यात् । देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्गः । किंचास्मिन्पक्षेऽवयवसमुदायो वा चेतयेत्, प्रत्येकं वावयवाः । प्रत्येकं चेतनत्वपक्षे बहूनां चेतनानां स्वतन्त्राणामेकवाक्यताभावादपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत, अक्रियं वा प्रसज्येत । समुदायस्य तु चैतन्ययोग वृक्ण एकस्मिन्नवयवे चिदात्मनोऽप्यवयवो वृक्ण इति न चेतयेत् । नच बहूनामवयवानामविनाभावनियमो दृष्टः; य एवावयवो विशीर्णस्तदा तदभावे न चेतयेत् । विज्ञानालम्बनत्वेप्यहंप्रत्ययस्य भ्रान्तत्वं तदवस्थमेव; तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम् । एतेन—स्थूलोऽहमन्धोऽहं गच्छामीत्यादयोऽप्यध्यासतया व्याख्याताः । तदेवमुक्तक्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते भगवती श्रुतिरप्यूहं कर्तृत्वभोक्तृत्वसुखदुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति । तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहंप्रत्ययस्य स्वरूपनिमित्तफलैरुपव्याख्यानम्-अन्योन्यस्मिन्नित्यादि[१] ।

अतः युस्मदस्मदित्यादिनाध्यासवर्णनं भाष्यकृतं युक्तम् ।

अत एव जिज्ञासाधिकरणे ब्रह्मजिज्ञासितव्यमित्युक्तम् । जिज्ञासामुखेन च ब्रह्ममीमांसा उपलक्षिता । सकलानर्थमूलाविद्योच्छेदाय ब्रह्मज्ञानमिष्टमुपायमिच्छन् पुरुषः ब्रह्ममीमांसायां प्रवर्त्यते । ब्रह्मज्ञानञ्च न केवलेभ्यो वेदान्तेभ्यः सम्भवति, अपि तु मीमांसोपकरणेभ्यः तेभ्यः । तथा च ब्रह्मज्ञानार्थं ब्रह्मजिज्ञासा सूत्रमधिकारिणं साधनचतुष्टयसम्पन्नं ब्रह्मजिज्ञासायां प्रवर्तयत् ब्रह्ममीमांसायां प्रवर्तयति ।

तत्र यद्यपि भामतीकारमते—फलवदर्थावबोधपरतां स्वाध्यायाध्ययनविधेः सूत्रयतः 'अथातो धर्मजिज्ञासा' इत्यनेनैव प्रवर्त्तिता ब्रह्मजिज्ञासाऽपि तत्र धर्मग्रहणस्य

१. भामती पृ.-८-१५ ।

वेदार्थोपलक्षणत्वेनाधर्मवद् ब्रह्मणोऽप्युपलक्षणत्वात्। तथा च तत्र अथातो वेदार्थमीमांसेत्यर्थ केन उक्तसूत्रेण धर्ममीमांसावत् ब्रह्ममीमासाप्याक्षेप्तुं शक्यते। न तर्हि ब्रह्ममीमांसाशास्त्रं पृथगारम्भणीयमिति चेन्न आरम्भणीयमेव प्राच्या मीमांसया ब्रह्मणोऽव्युत्पाद्यत्वात् किञ्चाधिकारिविशेष निर्णयार्थं पृथगेवब्रह्ममीमांसा आरब्धव्यैव। अत एव न पौनरूक्त्यमित्यादि सर्वं भामत्यां वर्णितम्। तथा च अथातो ब्रह्मजिज्ञासेति सूत्रेण ब्रह्ममीमांसाया ब्रह्मज्ञानं प्रत्युपायता प्रदर्शिता।

सापि ब्रह्ममीमांसा तद्विषयब्रह्मणप्रसिद्ध्यप्रसिद्धिभ्यामाक्षिप्तं भाष्ये।

प्रसिद्धिश्च नान्यतः प्रमाणेनापि तु वेदान्तेभ्य एव, जिज्ञासात्मतत्त्वस्यान्यतोऽनुपलब्धेः। तदेवं विषयसम्बन्धप्रयोजनाभावात् न ब्रह्मजिज्ञास्यमित्याक्षेपः।

अस्य तत् पुनः ब्रह्मप्रसिद्धम् अप्रसिद्धं वेति भाष्यस्य विषयसम्बन्धप्रयोजनाक्षेप परकत्वं पञ्चपादिकातद्विवरणादिषु व्याख्यातम्। तथाहि—"नैव शक्यं जिज्ञासितुं इति प्रयोजनविषयसम्बन्धानाक्षिपति। कथं? प्रसिद्धशब्देन प्रतिपन्नमुच्यते, तद् यदि प्रतिपन्नमन्येन केनचित् तदास्य शास्त्रस्य न विषयः।

कस्मात्? प्रतिपाद्यत्वेन हि विषयता, प्रतिपन्ने च तस्मिन्नकिञ्चित्करं शास्त्रम्, इति नास्य विषयः स्यात्। ततश्चानेनानवगमान्नास्य प्रयोजनं ब्रह्मावगतिः स्यात्। अतः प्रयोजनमप्याक्षिप्तम्। अथाप्रसिद्धं न शक्यं जिज्ञासितुम्।

कथम्? यद् न कदाचिदपि बुद्धौ समारूढविशेषम्, कथं तत् प्रतिपाद्येत? अतः प्रतिपादनाशक्तेर्न तत् स्पृशत्यपि शास्त्रम्। प्रसिद्धं पुनर्यदि नामानेन प्रतिपाद्यते प्रसिद्धत्वादेव; तथाऽपि न तेनार्थेन निरालम्बनम्, अप्रसिद्धं पुनरालम्बनमपि न स्यात्। अतो न केनचिदर्थेन सम्बद्धं शास्त्रम्, इति सम्बन्ध आक्षिप्तः[१]।

तत्रैव पञ्चपादिकाविवरणम्—"तत्पुनर्ब्रह्म प्रसिद्धमि"त्यादिभाष्यस्य तात्पर्यमाह—

१. पञ्चपादिका पृ.-७८८-७९०।

प्रयोजन-विषय-सम्बन्धानाक्षिपतीति।

ननु विधिसामर्थ्यादेव प्रयोजनादिष्ववगतेषु कथमाक्षेपः ? इति चोदयति-कथमिति। परिहरति—प्रसिद्धशब्देनेत्यादिना। ननु प्रतिपन्नं शब्देनानूद्य प्रतिपादयितु शक्यत्वात् कथमविषयः ? इत्याह—कस्मादिति।

अनधिगतार्थताभावादिति परिहरति—प्रतिपाद्यत्वेनेति। विषयावगमद्वारा प्रयोजनस्य पूर्वागमेनैव सिद्धत्वात् नास्य प्रयोजनमपीत्याह—ततश्चानेनानवगमादिति। 'अथे'त्यप्रसिद्धपक्षे संबन्धे प्रयोजनं चाक्षिपति। ननु अनधिगतार्थ एव प्रमाणेन प्रतिपाद्यते, प्रयोजनं च तत्रैवेति चोदयति—कथमिति। परिहरति—यत्र कदाचिदपीति। प्रत्यक्षादिप्रमाणैर्विचारा-नपेक्षैरत्यन्तानधिगत एव प्रतिपाद्यते। यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते, तत्राप्रतिपन्नमुद्दिश्य विचारानुपपत्तेः, प्रतिपन्ने विमर्शादर्शनान्न विचारापेक्षप्रमाणेनानधिगतावगम इत्यर्थः। ननु अप्रसिद्धपक्षे संबन्धः कथमाक्षिप्तः? न प्रसिद्धपक्ष इति ? अत्राह—प्रसिद्धं पुनर्यदि नामेति[1]।

भामतीकारमतेऽपि विषयादीनामाक्षेपो युक्त एव। यद्यपि साक्षात्भामत्यां तत्र विषयाद्याक्षेपो नोक्तः तथापि तदभिप्रायो वक्तुं शक्यते—यदुक्तम् "प्रसिद्धस्य ज्ञातुं शक्यस्यापि आजिज्ञासनात् अप्रसिद्धस्येच्छाया अविषयत्वात् अशक्यज्ञानत्वाच्च न ब्रह्मजिज्ञास्यमित्याक्षेपः इत्यनेन तत्रत्यभामतीवाक्येन विशेषतः अविषयत्वादितिपदेन विषयादीनामाक्षेपोधर्तुं शक्यते। एवञ्च ब्रह्मणः प्रसिद्धौ अप्रसिद्धौ वा उभयथा जिज्ञासा अनुपपन्ना। आक्षेपपरिहारः अत्रोच्यते—अस्ति तावद् ब्रह्मनित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्म शब्दस्य हि व्युत्पद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। वृहतेर्धातोरर्थानुगमात्। सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिरित्यादि भाष्यम्। प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरूक्तव्याकरणादिपरिशीलनविदितपदतदर्थसम्बन्धस्य सदेव सोम्येदमग्र

१. पञ्चपादिकाविवरण-पृ.७८७-७९१।

आसीदित्युपक्रमाद् तत्त्वमसीत्यन्तात् सन्दर्भात् नित्यत्वाद्युपेत ब्रह्मस्वरूपावगमस्तावदापाततो विचाराद् विनाप्यस्ति। अस्ति ब्रह्मेत्यादिनावगम्येन तद्विषयमवगमं लक्षयति।

ब्रह्मशब्दमहिम्नैव नित्यं व्यापकं शुद्धं चिद्रूपं सुखस्वरूपं च ब्रह्म सामान्यतोऽधीत-वेदान्तादिशास्त्रस्य किञ्चिद् ज्ञायत एव। तथाहि वृहतेर्धातोर्व्यापकत्व वृद्धत्वाद्यर्थौ।

वृहतेर्धातोरर्थानुगमादिति भाष्ये वृहतेर्धातोरितिपाठः प्रतिभाति। तथाहि वृह् वृहि वृद्धौ भ्वादौ पठ्यते वर्हति वृंहति। वृहि शब्दे च, वृंहति, वृहिर् वृद्धौ वृंहति इति रूपम्। वृहि धातोः इकश्तिपौ धातुनिर्देशे इति श्तिप् प्रत्यये वृंहतिरिति रूपम् न तु वृहतिरिति। तत्र कित्त्वाभावात् अनिदितामिति नुमो नकारस्य लोपाभावात्। वृह धातोस्तु श्तिपिवर्हतिरिति रूपं स्यात्।

तत्र वृहि वृद्धौ इत्यस्माद्धातोः "वृंहेर्नाऽच्च"[1] उणादि सूत्रेण वृहि धातोमनिन् प्रत्ययः उपधाभूत नकारस्य अकारो भवति। अकारे कृते यणि ब्रह्मन् शब्दो निष्पद्यते। तत्र धातूनामनेकार्थत्वात् वृद्धिविभुत्वाद्यर्थाः प्रतीयन्ते। वृद्धौ संकोचाभावात् निरतिशयायां गृहीतायां कालाद्यपरिच्छिन्नत्वादयोऽर्थाः परिगृहीता भवन्ति वृंहति मायोपाधिकं सत् जगद्रूपेण विवर्तते इति ब्रह्म व्यापकं वस्तु।

अथवा—वृहत्त्वात् ब्रह्म। वृंह् वृद्धौ इत्यस्माद् धातोः 'वर्तमाने पृषद् वृहन्महज्जगच्छतृवच्च'[2] इति सूत्रेण निपातनात् अतिप्रत्ययः गुणाभावश्च। शतृवद्भावश्च भवति। वृहत् निरतिशयं महत् व्यापकं यदस्ति तद् ब्रह्मेति भावः। अत एवोक्तं भाष्ये वृंहतेरर्थानुगमादिति। भामत्यामुक्तम्—वृद्धिकर्मा वृहतिरतिशायने वर्तते इति। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वादि अस्याभ्यनुजानाति। यद्यपि वृंहतेः देशादिनिरवच्छिन्नं वृद्धत्वं महत्त्वमर्थः तथापि ब्रह्मपदस्य सत्यज्ञानादिपदान्तर-

---

१. पा.सू.उणादि-५८५।

२. पा.सू.उणादि-२४१।

समभिव्याहारात् नित्यत्वादयोऽर्था: प्रतीयन्त एवेति भाव: । भाष्ये ब्रह्मशब्दस्य सदेव सोम्येत्यादि सन्दर्भस्थस्येत्यर्थ: ।

तत्र न केवलं वेदान्तवाक्यानां पौर्वापर्येण पर्यालोचनया उक्तब्रह्मशब्दार्थ प्रतीति: अपि तु उक्तरूपेण ब्रह्मपदनिर्वचनादपीति भाष्याशय: ।

तत्रैव भाष्यभावप्रकाशिकाख्यायां व्याख्यायामपि चित्सुखाचार्येणोक्तम्— प्रकरणोपपदयो: सङ्कोचकयोरभावे वृद्धिकर्मणो बृहतेर्निरङ्कुशमहत्त्वबोधसामर्थ्याद् देशत: कालतो वस्तुतश्चानवच्छेदेन सिद्धो नित्य:; नित्यपदस्यावच्छेदत्रयशून्यतापरत्वात्, दोषभूयिष्ठे गुणहीने लोकेऽल्पताबुद्धिदर्शनादशुद्धत्वम्, ब्रह्मणि तु दोषदवीयस्त्वाच्छुद्धत्वम् । अत एव जाड्यरहिततया बुद्धत्वम् । अत एवाविद्या-काम-कर्मपारतन्त्र्यरहिततया मुक्तत्वम्, क्वचिदप्यव्यावृत्तज्ञानशक्तित्वं सर्वज्ञत्वं सर्वशक्तित्वं च ब्रह्मण: सिध्यति; अनेवंभूतेऽल्प-बुद्धिदर्शनादिति भाव:[१] ।

**त्वं पदार्थप्रसिद्धि:-**

ननु भवतु ब्रह्मजिज्ञासाया: प्राक् तत् पदार्थस्य प्रसिद्धि: त्वंपदार्थस्य तु प्रसिद्धि: कथम् । इति चेद्, उच्यते भाष्ये 'सर्वस्यात्मत्वाच्च ब्रह्मास्तित्व प्रसिद्धि:'' तत्र भामती— सर्वस्य पांसुलपादकस्य हालिकस्यापि ब्रह्मास्तित्व प्रसिद्धि:, कुत: आत्मत्वात् । सर्वो हि अहमस्मीत्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति ।

ननु शून्य एवात्मा अहमनुभवे प्रतिभासते इति चेन्न यदि हि नात्मास्तित्व प्रसिद्धि: स्यात् । सर्वो लोको नाहमस्मीति प्रतीयात् । न चेयं प्रतीति: भ्रम:, अबाधितविषयकत्वात् ।

**आत्माब्रह्मेतिप्रसिद्धि:-**

ननु भवतु आत्मन: प्रसिद्धि: ब्रह्म तु कथं प्रसिद्धम् । नहि कलश प्रसिद्ध्याकाशप्रसिद्धिर्दृष्टा । इति चेन्न आत्मा च ब्रह्मेति भाष्यात् । तत्त्वमसीत्यादौ तदस्त्वमा

१. भाष्यभावप्रकाशिका-पृ.-८१५-८१५ ।

सह सामानाधिकरण्यात् । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । "तस्मात् आत्मा ब्रह्म ।" "अयमात्मा ब्रह्म-----।" "आत्मा वा इदमग्र आसीत्---------।" "आत्मानं लोमुपासीत्----" इत्यादिश्रुतेः । "क्षेत्रज्ञञ्चापि मां विद्धि----।" "अहमात्मा गुडाकेश----"इत्यादिस्मृतेश्च । एवं श्रुतिस्मृतिषु आत्मनि ब्रह्मशब्दप्रयोगात् क्षेत्रज्ञ आत्मा ब्रह्मेतिसिद्धम् ।

नन्वेवम् आत्मनः प्रसिद्धत्वात् पुनरजिज्ञास्यत्वमापन्नम् इति चेत् अत्रोच्यते— यद्यपि आत्मा ब्रह्मेति शास्त्रतः सामान्येन लोकतश्च प्रसिद्धस्तथापि तद्विशेषं प्रति विप्रतिपत्तेः । विविधाः विरुद्धा वा प्रतिपत्तिविप्रतिपत्तिः । विप्रतिपत्तेः संशयमूलकत्वम् । संशयाच्च जिज्ञासोपपद्यतं इति । अत एव कल्पतरौ उक्तम्—'यद्यपि निर्दोषो वेदः ; तथापि सामान्यतो दृष्ट निबन्धनवचनव्यक्त्याभासप्रतिबद्धः सन्दिग्धार्थः स्यात्"[१] तत्रैव च परिमले उक्तम्— यद्यपि तत्त्वमसीत्यादिर्वेदान्तः स्वारस्येन ब्रह्मात्मैक्यं बोधयति; तथाप्यन्यत्र क्वचिद् दृष्टमित्येतावन्मात्रमवलम्ब्य प्रवृत्तान् वचनव्यक्त्याभासान् वाक्ययोजनाभासान् वादिभिरुत्प्रेक्षितान् पश्यतस्तैः प्रतिबद्धः सन् वेदान्तः संदिग्धार्थः स्यात् । तथाहि—'अनृक्षरा ऋजवः सन्तु पन्था' इत्यत्र पन्थान इति बहुवचनस्य 'सुपां सुलुगि'त्यादिसूत्रेण स्वादेशो दृष्टः, उत 'यत्सुन्वन्ति सामिधेनीस्तदन्वाहे'त्यत्र यत्तद्भ्यां सप्तम्यास्तेनैव सूत्रेणालुग् दृष्टः, 'गायत्रीं छन्दसां माते'त्यत्र द्वितीया प्रथमार्थे इति विभक्तित्ययो दृष्टः, एवं तत्त्वमसीत्यत्र तदित्यस्माच्चतुर्थ्याः स्वादेशो लुग्, विभक्तिव्यत्ययो वेति तस्मै जगत्कारणाय ब्रह्मणे त्वं त्वदात्मा समर्पणीय इत्यर्थः, 'ब्रह्मणे त्वा महस ॐ इत्यात्मानं युञ्जीते'ति श्रुत्यन्तरात् । अथवा-पञ्चम्याः स्वादेशादिभिःस्तस्तात्त्वं तस्माज्जातस्त्वमित्यर्थः; 'यतो वा इमानि भूतानि जायन्त' इति श्रुत्यन्तरात् । अथवा-षष्ठ्याः स्वादेशादिभिस्तस्य त्वं तत्स्वामिकस्त्वमित्यर्थः; 'सकारणं करणाधिप' इति श्रुत्यन्तरात् । अथवा-सप्तयाः स्वादेशादिभिस्तस्मिंस्त्वं

---

१. कल्पतरूः-पृ.७९ ।

तदाश्रितस्त्वमित्यथ:; 'प्राणबन्धनं हि सोम्य मन' इति तत्रैव श्रवणात्। अथवा-ब्राह्मणस्त्वं मनुष्यस्त्वमित्यादिवत् शरीरशरीरिभावनिबन्धनं तत्त्वमिति समानाधिकरण्यं; 'यस्यात्मा शरीरमि'ति श्रुत्यन्तरात्। अथवा-'अघोराऽपापकाशिनी'त्यत्रेवाऽकारप्रश्लेषात् अतत्वमसीति च्छेद:; 'द्वा सुपर्णे'त्यादिभेदश्रुत्यनुरोधादिति। एवं 'मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति। लोकदृष्टी: प्रतिघ्नन्ति वचनव्यक्तिपांसुभि:।' इति ग्रहाधिकरणं (जै.अ.३पा.३सू.१४) वार्तिकोक्तरीत तत्तदुत्प्रेक्षितवचनव्यक्त्याभासापादितसंदेहाक्रान्ता तत्त्वमस्यादिवाक्यजन्या ब्रह्मात्मैक्यधीरापातत: प्रसिद्धिरित्यर्थ:[१]।

यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति, ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम्। न, तद् विशेषं प्रति विप्रतिपत्ते:'[२] इति।

अत्र भामती—''अध्यापकाध्येतृपरम्परा लोक:, तत्र 'तत्त्वसीति वाक्याद् यदि ब्रह्म आत्मत्वेन प्रसिद्धमस्ति। आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेद विवक्षया गमयितव्यम्[३]।

अयं भाव: पामरादि लोके आत्मन: प्रसिद्धावपि तस्य ब्रह्मस्वरूपत्वमप्रसिद्धमिति भाष्यप्रयुक्तलोकशब्दस्य 'अध्यापकाध्येतृपरम्परा' इत्यर्थ: कृतो भामत्याम्। भाष्ये 'ब्रह्म आत्मत्वेन प्रसिद्धमस्ति। अत्र वाक्ये भामत्यामनुपपत्तिं प्रदश्र्य समाधानमुक्तम्—आत्मा ब्रह्मत्वेनेति वक्तव्येत्यादि पूर्वमुदाहृतम्।

अस्यायमभिप्राय:—'आत्मत्वेन' इत्यत्र यदि तृतीया इत्थं भावलक्षणे तदा आत्मत्वलक्षणं ब्रह्म इत्यर्थ: स्यात्। तथा च लोकशब्द: रूढ पामरादिलोकसामाधारण: स्यात्। पामरादिलोके च आत्मा अहमस्मीत्यादिप्रत्ययात् सिद्ध: स चैवं लक्षण: ब्रह्म स्यात् तर्हि तत् पदार्थमात्रस्य प्रसिद्धि: अनुदिता स्यात्। तस्या: तत्त्वमसीत्यादौ तत् पदार्थस्य

१. कल्पतरूपरिमल:-पृ.७९-८०।

२. भाष्यम्-पृ.-८१।

३. भामती-पृ.-८१।

कार्यकारणयोरनन्यत्वेऽपि समुद्रतरङ्गन्यायेन विभागस्तयोरुपपद्यते ।

ननु कार्यकारणयोः भेदो वा अभेदो वा भेदाभेदो वेति । अत्र केचित् उभयोर्भेदः । तथाहि कार्यमन्यत् कारणमन्यत् अभेदे सति कारणत्वं न स्यात् न ह्येकमेव वस्तु कारणं कार्यञ्च दृष्टम् । कारणस्य कार्याव्यहितप्राक्क्षणावर्त्तित्वात् ।

द्व्यणुकादिकार्यं च परमाणुभ्यो कारणेभ्यो भिन्नं तदारब्धं दृश्यते । व्यपदिश्यते च ।

अतः कार्यकारणयोः स्वरूपतो भेदो दृश्यते । व्यवहारतोऽपि भेदः । नहि मृत्पिण्डेन जलाहरणादि तथा दृश्यते यथा तत्कार्येण घटादिना । किञ्च घटेन कार्यं करिष्यामीति कृत्वा न कश्चित् घटं विहाय मृत्तिकामुपादत्ते । किञ्च सुवर्णकुण्डलयो र्यदि भेदो न स्यात् तदा एकमूल्येन विक्रीयेत । दृश्यते च कुण्डलादीनां मूल्याधिक्यम् ।

किञ्चाभेदे इदं कार्यं इदं कारणमित्यादि शब्दप्रयोगोऽपि न विभागश उपपद्यते । साधनव्यापाराणाञ्च वैयर्थ्यप्रसङ्गः स्यात् । यदि साधनैः प्रकृतमेव उत्पाद्यते चेत् प्रथममेव तस्य सत्त्वात् तदव्यापारव्यर्थता स्यात् । नच तदेव प्रकृतं वस्तु साधनव्यापारेण परिणामय्यान्यथारूपं क्रियते इति वाच्यम् तदपि आकृत्यादिना भेदो जायते एवेति चेत् न कार्यकारणयोरनन्यत्वमित्यस्य नाभेद एवार्थः अपि तु कार्यस्य कारणाव्यतिरेकेणाभावः । तथा नोभयोरभेद उच्यते किन्तु भेदोनिषिध्यते । तथाचोक्तं आरम्भणाधिकरणे भामत्यां— 'तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्य अवगम्यते इति प्रतीकमादाय "न खलु अनन्यत्वमित्यभेदं ब्रूमः किनतु भेदं व्यासेधाम । ततश्च नाभेदाश्रयदोषप्रसङ्गः किन्तु अभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति' इति ।

तथा च कार्यकारणयोर्व्यावहारिके प्रातीतिके भेदे सत्यपि पारमार्थिको भेदा नास्ति इति तात्पर्यवती श्रुतिः वाचारम्भणं विकारो नामधेयमित्याद्यातत्त्वतः उभयोरनन्यत्वं प्रतिबोधयति ।

एवञ्च सति एकविज्ञानेन सर्वं विज्ञातं भवतीति प्रतिज्ञापि उपपद्यते । नहि उभयो

कार्यकारणयोरनन्यत्वेऽपि समुद्रतरङ्गन्यायेन विभागस्तयोरुपपद्यते ।

ननु कार्यकारणयोः भेदो वा अभेदो वा भेदाभेदो वेति । अत्र केचित् उभयोर्भेदः । तथाहि कार्यमन्यत् कारणमन्यत् अभेदे सति कारणत्वं न स्यात् न ह्येकमेव वस्तु कारणं कार्यञ्च दृष्टम् । कारणस्य कार्याव्यहितप्राक्क्षणावर्त्तित्वात् ।

द्व्यणुकादिकार्यं च परमाणुभ्यो कारणेभ्यो भिन्नं तदारब्धं दृश्यते । व्यपदिश्यते च ।

अतः कार्यकारणयोः स्वरूपतो भेदो दृश्यते । व्यवहारतोऽपि भेदः । नहि मृत्पिण्डेन जलाहरणादि तथा दृश्यते यथा तत्कार्येण घटादिना । किञ्च घटेन कार्यं करिष्यामीति कृत्वा न कश्चित् घटं विहाय मृत्तिकामुपादत्ते । किञ्च सुवर्णकुण्डलयो र्यदि भेदो न स्यात् तदा एकमूल्येन विक्रीयेत । दृश्यते च कुण्डलादीनां मूल्याधिक्यम् ।

किञ्चाभेदे इदं कार्यं इदं कारणमित्यादि शब्दप्रयोगोऽपि न विभागश उपपद्यते । साधनव्यापाराणाञ्च वैयर्थ्यप्रसङ्गः स्यात् । यदि साधनैः प्रकृतमेव उत्पाद्यते चेत् प्रथममेव तस्य सत्त्वात् तदव्यापारव्यर्थता स्यात् । नच तदेव प्रकृतं वस्तु साधनव्यापारेण परिणामय्यान्यथारूपं क्रियते इति वाच्यम् तदपि आकृत्यादिना भेदो जायते एवेति चेत् न कार्यकारणयोरनन्यत्वमित्यस्य नाभेद एवार्थः अपि तु कार्यस्य कारणाव्यतिरेकेणाभावः । तथा नोभयोरभेद उच्यते किन्तु भेदोनिषिध्यते । तथाचोक्तं आरम्भणाधिकरणे भामत्यां— 'तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्य अवगम्यते इति प्रतीकमादाय "न खलु अनन्यत्वमित्यभेदं ब्रूमः किनतु भेदं व्यासेधाम । ततश्च नाभेदाश्रयदोषप्रसङ्गः किन्तु अभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति' इति ।

तथा च कार्यकारणयोर्व्यावहारिके प्रातीतिके भेदे सत्यपि पारमार्थिको भेदा नास्ति इति तात्पर्यवती श्रुतिः वाचारम्भणं विकारो नामधेयमित्याद्यातत्त्वतः उभयोरनन्यत्वं प्रतिबोधयति ।

एवञ्च सति एकविज्ञानेन सर्वं विज्ञातं भवतीति प्रतिज्ञापि उपपद्यते । नहि उभयो

भेदे सति अन्यस्य ज्ञानेन अन्यस्य ज्ञानमुपपद्यते। ज्ञानञ्चात्र तत्त्वविषयकं बोध्यम्। मृत्तिका इत्येवसत्यमिति निश्चयात्। एवञ्च कार्यसामर्थ्यस्याज्ञानेऽपि न दोषः।

तथा च कार्यकारणयोसतत्त्वतोऽनन्यत्वेऽपि कार्यात्मना कारणात्मना प्रतीयमानो भेदो दृश्यत एव। तदादाय न कारणत्वकार्यत्वव्याघातः।

भेदाभदौ च विरोधादेव स्वीकार्यौ।

एतदुक्तं भवति। वाचा केवलमारभ्यते विकार जातं न तु तत्त्वतोऽस्ति। यतो नामधेयमात्रमेतत्। यथा पुरुषस्य चैतन्यं राहोः शिर इति विकल्पमात्रम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। यथा सुवर्णपिण्डस्य कुण्डलमिति कटकमित्यादि शब्दाभिधानमात्रमेव न तु वस्तुतः सुवर्णात् तत् भिन्नं किञ्चिदस्ति। सुवर्णभिन्नतया कुण्डलाभिधेयस्य कस्यचित् अभावात् वस्तुशून्यत्वात् शब्दज्ञानानुयातित्वात् कुण्डलम् कटकमित्यादि विकल्प एव। न सुवर्णमपाह्य कुण्डलं किञ्चिदस्ति। ननु यदि सुवर्णं कथं न कुण्डलरूपकार्यात् प्रागपि सुवर्णपिण्डे कुण्डलपदप्रयोगादिरिति चेन्न एतदेव तूच्यते वाचारम्भणमिति पिण्डकुण्डलावस्थयोर्न वस्तुभेदोऽपि तु केवलशब्दप्रयोगस्यैव भेद इति। सच शब्दप्रयोगः सुवर्णपिण्डे आरोपिताकृतिनिमित्त इति नतु वस्तुभेदनिमित्तः। तस्मात् तत्त्वतः कुण्डलादीनामनन्यत्वं सिद्धं भवति। तथैव घटशरावादीनामपि तत्त्वं मृदेव। एवञ्च मृदिज्ञातायां तद्विकाराणां ज्ञानं जातमेव।

तथैव दार्ष्टान्तेऽपि ब्रह्मविवर्तस्य जगतः ब्रह्मणोऽनन्यत्वात् तत्विज्ञाने सर्वविज्ञानं सिद्धम्। आकाशादिकार्यजातं तु ब्रह्मणि विकल्पितं तत्त्वतो न भिन्नमपि तु नाममात्रमेव। तस्यैव शुद्धस्य ब्रह्मणः विकल्पितोपाधिवशात् आकाशादिनामाधेयम्। आकाशादिशब्देन च न ब्रह्मातिरिक्तं तत्त्वं किञ्चिदभिधीयते वास्तवं प्रतीयते तु अतिरिक्तमभिधीयत इति। यथा इदं रजतमित्यादि स्थले इदं शब्देन रजतशब्देन च तदेवाभिधीयते शुक्तिकाखण्डं किन्तु शुक्तिकातः भिन्नतया तत् काले प्रतीयते। तथैव ब्रह्मनिवर्तस्य समस्तस्य प्रपञ्चस्य

वाचारम्भणं सिद्धं तत्त्वं तु ब्रह्मैव । तथा च अवस्तुतया अनृतं विकारजातम् । इति वेदान्तहृदयम् । तत्त्वं सत्त्वं तच्च त्रिकालाबाध्यत्वं प्रतीयमानत्वे सति । देशकालादिपरिच्छेदशून्यं सद्वस्तु अस्त्येव । विकारजातं तु कदाचित् असित कदाचित् नास्तीति तस्मात् तत् असत् मिथ्या दृष्टनष्टस्वरूपत्वात् ।

एवञ्च कार्यकारणयोरनन्यत्वात् कारणस्यब्रह्मणएकत्वात् अभिन्ननिमित्तोपादानत्वं सिध्यति । ननु लोके उपादाननिमित्ततयो र्भेद दर्शनात् कथमभिन्नत्वमिति । अत एव व्याकरणे कार्यीनिमित्ततया नाश्रीयते इति परिभाषा पठ्यते उपपाद्यते च नागेशभट्टैः उपादाननिमित्तकारणयोर्भेदमाश्रित्यैव परिभाषेन्दुशेखरे इति चेत् न, लूतातन्तुदृष्टात्तस्य सद्भावात् लूता यथा स्वयं निमित्तं स्वशरीरतया चोपादानं तन्तुं प्रति तथैव ब्रह्मापि । यथा वा केशलोमादि प्रतिपुरुष उभयकारणं भवति । उक्तञ्च यथोर्णनाभिः सृजते गृह्णते च

**यथा पृथिव्यामोषधयः सम्भवन्ति ।**

**यथा सतः पुरुषात् केशलोमानि**

**तथाक्षरात् सम्भवतीह विश्वम् ।**[१]

स्मृतिरपि अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । इति । तथाचाभिन्नमितित्तोपादानत्वं ब्रह्मणः सिद्धम् । तथाच निर्विशेषमपिब्रह्म समूलस्यजगतोनिमित्तमुपादानञ्चेति । नच विकारवत् कारणस्यैवोपादानत्व दर्शनात् । ब्रह्मणोऽविकारत्वात् कथमुपादानत्वमितिवाच्यम् परिणामितयोपादानत्वाभावेऽपि विवर्ताधिष्ठानतयोपादानत्वसम्भवात् । विवर्ताधिष्ठानत्वं विवर्त्तकारणाज्ञानविषयत्वम् । उक्तञ्च वार्तिककृद्भिः ।

**अस्य द्वैतेन्द्रजालस्य यदुपादानकारणाम् ।**

**अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते ।**

नच जगतो ब्रह्मविवर्ते सिद्धे ब्रह्मणस्तदुपादानत्वे न स्यात् समवायिनः परिणामिनः

१. मुण्डकश्रुतिः ।

प्रकृतेस्तत्त्वादिति वाच्यम् । परिणाम्यपरिणाम्युभयप्रकृतिसाधारणं कार्यजनिहेतुत्वस्यैवोपदानत्वमिति स्वीकारात् तस्यचात्मनि सम्भवात् । सा चजनिः आद्यक्षणसम्बन्धरूपा सा चारोपिता आत्मनि । न चैतादृशोपादानत्वलक्षणं निमित्तेऽतिव्याप्तमिति वाच्यम् । स्वतादात्म्यवति कार्यहेतुत्वस्य विवक्षणात् । एवञ्च स्वतादात्म्यवति ब्रह्मणिप्रपञ्चरूपकार्यजनिहेतुत्वस्य विद्यमानत्वात् उपादानत्वं ब्रह्मणः सिध्यति ।

किञ्च जन्माद्यस्य यतः इति सूत्रभाष्ये "अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाव्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणात् भवति तद्ब्रह्मेति वाक्यशेषे कारणस्य ब्रह्मणोविशेषणद्वयमुपात्तम् । सर्वज्ञात् सर्वशक्तेरिति । अनेन स्वरूपलक्षणमुक्तम् । "यः सर्वज्ञः स सर्ववित्" "परास्य शक्तिर्विविधैव श्रुयते स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतिरत्र मानम् । तत्र सर्वं जानातीति सर्वज्ञः । सर्वज्ञत्वेन च ब्रह्मणो निमित्तत्वं सर्वशक्तित्वेन चोपादानत्वं सूचति श्रुतिर्भाच्यञ्च । तेन चाभिन्ननिमित्तोपादानत्वं सिध्यति ।

**जिज्ञास्य ब्रह्मणो लक्षणमिदम्–**

ननु कस्येदं लक्षणमुच्यते न तावद् शुद्धस्य तत्र जगत्कारणत्वाभावात् । ननु— कस्येदं लक्षणमुच्यते? न तावत् शुद्धस्य; तत्र जगत्कारणत्वाभावात्; कल्पितस्यापि तस्य तत्र सत्त्वे शुद्धत्वव्याघात्; परस्पराध्यासाङ्गीकारात् । अथ सोपाधिकस्य? न; तस्याब्रह्मत्वात्, तल्लक्षणस्यानाकाङ्क्षिततत्वाच्च; अतः पुनरप्यसम्भवीदं ब्रह्मलक्षणं प्राप्तमिति—चेत्, न; अज्ञातस्य सर्वान्तर्यामिणो जिज्ञास्यतया लक्षणाभिधानात् । यद्धि जिज्ञास्यमधिकारिणा, तल्लक्षणमाकाङ्क्ष्यते । अतस्तदेवाभिधातव्यम् । जिज्ञास्यञ्च सर्वान्तर्यामितया व्यवस्थितमज्ञातं ब्रह्म; ज्ञाते तस्मिन् किमयं भोक्तुरात्मा न वेति संशयाभावाज्जिज्ञासानुपपत्तेः । अत एव भाष्यकारः "ब्रह्म जिज्ञासितव्यमित्युक्तम्, किंलक्षणं पुनस्तद् ब्रह्मे"ति जिज्ञास्यलक्षण एवाकाङ्क्षां दर्शयामास । नच—एतावता ब्रह्मलक्षणमेतन्न भवतीति—वाच्यम्; तस्यैवाज्ञातस्य

स्वरूपविज्ञापनार्थमेतल्लक्षणकरणात् । कथम्? धर्मिज्ञानाधीनं हि निरूपणं तस्य; तस्य धर्मिज्ञानसाध्यत्वात् । तच्च न धर्मिज्ञानमात्रम् । किं तर्हि ! धर्मितावच्छेदकावच्छिन्नधर्मिज्ञानम्; पक्षतावच्छेदकावच्छेदेन साध्यसामानाधिकरण्यस्य निरूप्यमाणत्वात्, तदवच्छेदकस्य निरूपणात् पूर्वं ज्ञानापेक्षणात्; अन्यथा पक्ष एव साध्यसिद्धिनियमो न स्यात् । निरूपणधर्मितावच्छेदकं तु प्रकृते जगज्जन्मादिकारणत्वमेव; अन्यूनानतिरिक्तवृत्तित्वात् । अत एव ब्रह्मणो विशेषंस्वरूपास्पर्शित्वात् तटस्थलक्षणमेतदित्याहुर्वृद्धाः । ननु—एतदवच्छेदेन विशेषस्वरूप-साधनात् कथं तदस्पर्शितवमस्येति—चेत्, नैष दोषः; साध्यदशायां खलु तदवच्छेदकत्व-मभ्युपगम्यते; न सिद्धदशायाम्, संशयादिवत् तद्विरोधेन तत्काले तस्यानवस्थितेः । अतो युक्तं ब्रह्मणो जगत्कारणत्वस्य सत्यज्ञानानन्दादिस्वरूपास्पर्शित्वमिति[१] ।

**वाक्यशेषविमर्शः–**

अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेक कर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्मेति वाक्यशेषः[२] ।

ननु अन्यत्र सूत्रेषु क्वचिदपि वाक्यशेषस्याकृतत्वाद् कुतोऽत्र वाक्यशेषः कृतः इति विचार्यते ।

जगज्जन्मादिकारणत्वं तावत् प्रधानकालग्रहलोकपालक्रियायदृच्छास्वभावाभावेषु अतिप्रसक्तम् इति कुतः सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्मजगत्जन्मादिवारणमिति । शङ्कायां वाक्यशेषेण यथोक्तविशेषणविशिष्टस्य जगतः जन्मादि सर्वज्ञात् सर्वशक्तिमतो ब्रह्मणः सकाशादेव सम्भवति नान्यत इति प्रतिपाद्यते । व्याख्यातश्च आचार्यै तथैव । यथोक्तं कल्पतरौ स्यादेतत् प्रधानकालग्रहेत्यादिभामतीग्रन्थं प्रतीकमादाय "तद्गतविशेषणैः लक्षणेति व्याप्तिः परिह्रियते" इति ।

१. वार्त्तिक पृ.-८७६-८७७ ।
२. भाष्य १/१/२ ।

तथा च भामत्यामुक्तम्—अत्र नामरूपाभ्यां व्याकृतस्य इति चेतनभावकर्तृकत्व-संभावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत्खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं, यथा घटादि। विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं संभाव्यते। चेतनो हि बुद्धावालिख्य नामरूपे इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। अत एव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति। यथाहु—'बुद्धिसिद्धं तु न तदसत्' इति। तथाचाचेतनो बुद्धावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः। स्यादेतत्—चेतना ग्रहा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह—अनेककर्तृभोक्तृसंयुक्तस्येति। केचित्कर्तारो भवन्ति, यथा सूदर्त्विगादयः, न भोक्तारः। केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः। तस्मादुभयग्रहणम्। देशकालनिमित्तक्रियाफलानि इतीतरेतरद्वन्द्वः। देशादीनि च प्रतिनियतानि चेति विग्रहः। तदाश्रयो जगत्तस्य। केचित्खलु प्रतिनियतदेशोत्पादाः, यथा कृष्णमृगादयः। केचित्प्रतिनियतक्रियाः, यथा कोकिलारवादयः। केचित्प्रतिनियतनिमित्ताः, यथा न वाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः। केचित्प्रतिनियतक्रियाः, यथा ब्राह्मणानां याजनादयो नेतरेषाम्। एवं प्रतिनियतफलाः। यथा केचित्सुखिनः, केचिद्दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद्दुःखिनः। सर्वमेतदाकसिमकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटतेः; परिमितज्ञानशक्तिभिर्ग्रहलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात्। तदिदमुक्तम्—मनसाप्यचिन्त्यरचनारूपस्येति। एकस्या अपि हि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुनः कर्तुमित्यर्थः। सूत्रवाक्यं पूरयति—तद्ब्रह्मेति वाक्यशेषः[१]।

तत्रैव कल्पतरूपरिमलेऽप्युक्तम्—"कालः स्वभावो नियतिर्यदृच्छाभूतानि योनिः

१. भामती पृ.-८५-८६।

पुरुष इति चिन्त्य''मिति श्वेताश्वतरोपनिषन्मन्त्रेण कालकारणत्वादिवादाः प्रत्याख्याताः। ''कथमसतः सज्जायेते''ति श्रुत्या त्वसत्कारणत्ववादः । तैरिह पूर्वपक्षः कृतः । मन्त्रे पुरुषशब्दस्य विवरणं टीकायां—ग्रहलोकपालशब्देन कृतम् । इदं हिरण्यगर्भादीनामप्युपलक्षणम् । क्रियाशब्देन नियतिशब्दस्य प्रधानशब्देन योनिशब्दस्येति विवेकः । अतिव्यप्तिशब्देन कालादीनामेव कारणत्वोपपत्तौ ब्रह्म कारणं नाभ्युपगन्तव्यमित्यसम्भवो विवक्षितः । तत्र पुरुषपूर्वपक्षः श्रुत्यन्तरावलम्बनः। प्रश्नोपनिषदि हि ''षोडशकलं पुरुषं'' प्रस्तुत्य 'तं त्वा पृच्छामि क्वासौ पुरुष इति' भारद्वाजप्रश्ने 'तस्मै स होवाच इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्ति, स ईक्षांचक्रे कस्मिन्नवहमुत्क्रान्तउत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति, स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियं मनोन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम चेति'' जीवस्यैव प्राणादिनामान्तषोडशकलास्रष्टृत्वं श्रूयते । अयं च जीवपूर्वपक्ष इहैवाधिकरणे निराकार्यो न प्रधानादिपूर्वपक्षवदधिकिरणान्तरे निराकृतः । 'कस्मिन्नहमुत्क्रान्त' इत्यादिप्रश्नोपनिषद्वाक्यमपि परब्रह्मविषयमेव; 'तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति'' तदुपसंहारे पिप्पलादवचनात्, सकलोपनिषत्प्रसिद्धस्य जीवाधिकस्य परब्रह्मणश्चापलपितुमशक्यत्वात्, प्राणोत्क्रान्तिप्रतिष्ठाभ्यां परब्रह्मणः स्वोत्क्रान्तिप्रतिष्ठावत्त्वम्, ईक्षणं तु स्वस्य तथाभूतजीवाभेदाभिप्रायेणेति तन्निराकरणं द्रष्टव्यम्[१] ।

**जन्मस्थितिभङ्गग्रहणे प्रयोजनम्–**

ननु भावानां वृद्धिपरिणामापेक्षया अपिविकाराः सन्ति । कस्मात् जन्मादित्रयमेवात्र गृहीतमिति चेन्न । तेषामपि त्रिष्वेवान्तभावात् । वृद्धिरवयवोपचयः । तेनाल्पाववादवय-विनोद्वितन्तुकादेरन्य एव महान्पटो जायते इति । जन्मैव वृद्धिः । परिणामोऽपि जन्मैव । परिणाम स्त्रिविधः धर्मलक्षणावस्थाभेदात् । धर्मिणः सुवर्णादेः धर्मरूपपरिणाम कटकमुकुटादिः

१. कल्पतरूपरिमल-पृ.८५-८६ ।

उत्पत्तिरेव । एवं कटकादेः वर्तमानत्वातीतत्वभविष्यत्वरूपो लक्षणपरिणाम उत्पत्तिरेव । एव भावस्य नवपुराणत्वादि परिणाम अवस्थारूपोऽप्युत्पत्तिरेव । अपक्षयो नाम अवयवह्रासो नाश एव । एवं सर्वेषामन्येषां भावविकाराणां त्रिष्वेन्तर्भावः ।

वृद्धिपरिणामादीनां विकाराणां तेष्वनन्तर्भावेऽपि जन्मादीनामेव विकाराणामत्र ग्रहणं कर्त्तव्यम् । तथा सति जगन्मूलकारणं सर्वज्ञं सर्वशक्तिमत् ब्रह्मलक्षितं भवति । वर्धयतो हि जन्मादित्रयग्रहणे यतो वा इमानीति वैदिकं वाक्यं बुद्धिस्थं भवति । तेन यो‌त्पत्तिः ब्रह्मणः तत्रैव स्थिति प्रलयश्च गृह्यते । एवञ्च जन्मस्थितिभङ्गैस्त्रिभिरस्य ब्रह्मणो जगदुपादनत्वं सूचितं भवति । उत्पत्तिमात्रं तु निमित्तकारणसाधारणमिति नोपादानं सूचयेत् ।

यास्कपरिपठितानां षण्णां विकाराणां ग्रहणे च जायतेऽस्तीत्यादि नैरूक्तं वाक्यं बुद्धिस्थं स्यात् । तेषां च जगत्स्थिति कालेऽपि सम्भाव्यभानत्वात् जगदेव जन्मादीनां कारणं गृहीतं स्यात् मूलकारणं ब्रह्म तु न लक्षितं स्यात् । तस्मात् जन्मस्थितिभङ्गग्रहणम् ।

**मूलकारणं जगद्विवर्ताधिष्ठानम्–**

मूलकारणं ब्रह्मजन्मस्थितिभङ्गानाम् । अतएवोक्तम् पञ्चपादिकायाम्—यदवष्टम्भोविश्वो विवर्तते प्रपञ्चः, तदेव मूलकारणं ब्रह्म इति सूत्रार्थः[१] ।

व्याखतञ्चैतत् पञ्चपादिकावाक्यं विवरणे विस्तरेण—ननु भूत-भौतिकमूलकारणं न ब्रह्मेति प्रतिपत्तुं युक्तम्; मायाया अपि मूलकारणत्वात्, "मायां तु प्रकृतिमि"ति श्रुतेः । प्रक्रियतेऽनयेति प्रकृतिरिति करणमात्रं मायेति चेत्, न; प्रकृतिशब्दस्योपादाने रूढत्वाद् व्युत्पादनायोगात् । "आत्मन आकाशः" इति प्रकृत्यन्तरश्रवणाद् व्युत्पाद्यत इति चेत् न; तुल्यश्रुतित्वान्माया प्रकृतित्वविरोधात्, निमित्तेऽपि पञ्चमी प्रयोगात्, दृश्यमानजाड्यानुसारेण च मायोपादानत्वनियमोपपत्तेः । "इन्द्रो मायाभिरि"ति तृतीयैव श्रूयत इति चेत्, सत्यम् आत्मनो बहुत्वापत्तौ करणता भवति, प्रपञ्चोपादानत्वे का हानिः, निरपेक्षप्रकृतिद्वयानुपपत्तिरिति

---

१. पञ्चपादिका-पृ.-९०५ ।

चेत्, तर्हि परस्परविशिष्टतया द्विसूत्ररज्जुवत्प्रकृतिता स्यात् । अतो जगत्कारणे ब्रह्मणि मायाया अपि ब्रह्मत्वं लक्षितं स्यात् । मायेति प्रज्ञाऽभिधीयते । सा च ब्रह्मचैतन्यमेवेत्यविरोध इति चेत्, न; अन्वय-व्यतिरेकविरोधात् । परिदृश्यमानहस्त्यश्व-रथादौ प्रतिपन्नोपाधौ बाधिते च वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यां मायाशब्दः प्रयुज्यमानो दृश्यते । लोकसंवेदनविरोधाच्च । नहि प्रज्ञातिशयवन्तं मायाविनं वदन्ति । गर्हन्ति च विदुषि मायाशब्दप्रयोगम् । बुद्धिविषयत्वान्मायाशब्दस्य न ब्रह्मचैतन्यप्रज्ञायां प्रसङ्गः । स्वप्नादिविविधमायाकारप्रतिभानाद्वा बुद्धेः कार्यवादिनो मायाशब्दस्योपचारात्करणे प्रयोग इत्यनवद्यम् । अपि च "भूयश्चान्ते विश्वमायानिवृत्तिः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" "देवी ह्येषा गुणमयी मम माया दुरत्यया" 'माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ।" इति निवर्त्य तर्तव्यत्व-गुणमयत्वज्ञानावरणत्वलिङ्गाच्च न ब्रह्मचैतन्यं माया । बुद्धिरेव मायेति चेत्, न; प्रकृतिशब्दविरोधात् । मन्त्रौषधादि मायेति चेत्, न; दृश्यमानगन्धर्वनगरादौ मायाशब्दप्रयोगात्, मन्त्रौषधादौ तदप्रयोगात् । तथाऽपि जडात्मिका मायाशक्तिः पारमार्थिकीति चेत्, न; "नासदासीन्नो सदासीत्तम आसीदि"ति जगत्प्रागवस्थायाः सदसद्विलक्षणानिर्वचनीयत्वश्रवणात् । लोके च हस्त्यश्व रथादिषु व्यभिचारिषु मिथ्यावस्तुमात्रेऽनुयायिनि मायाशब्दप्रयोगात् । "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायामयेयाय तस्मै विद्यात्मने नमः ।" इति मायाऽविद्ययोः सामानाधिकरण्याच्च । तस्मादनिर्वचनीयमायाविशिष्टं कारणं ब्रह्मेति प्राप्तम्, तत्राह—अतो यदवष्टम्भो विश्वो विवर्तत इति । तैविध्यमत्र सम्भवति—रज्जवाः संयुक्तसूत्रद्वयवन्मायाविशिष्टं ब्रह्म कारणमिति वा, "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति श्रुतेर्मायाशक्तिमत्कारणमिति वा, जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्तत्कार्यमपि ब्रह्मपरतन्त्रं भवति, यथाऽशुतन्त्र तन्त्वारब्धोऽपि पटोशुतन्त्रः प्रतीयते । ततश्चोत्पद्यमानकार्यस्य यद् आश्रयोपाधि

ज्ञानानन्दलक्षणं च, तद् ब्रह्मेति शुद्धब्रह्मलाभ इति, तदाह यदवष्टम्भ इति ।

केचित्तु—ब्रह्मैव जगदाकारेण परिणमते मृदिव घटाकारेणेति—वदन्ति, तद् व्यावर्तयति—विश्वो विवर्तत इति । एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्तः । एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः, तत्र ब्रह्म न विवर्तते, किंतु परिणमत एवेति तैस्तत्र प्रमाणं वक्तव्यम् ।सृष्टिश्रुतेः परिणमत इति चेत्, सा खलु सृष्टिश्रुतिः ज्ञानानन्द-सत्य-निरवयवापरिच्छिन्न-ब्रह्मस्वरूपोच्छेदात्कार्यमात्रमेव स्यात् । पुनः प्रलयावस्थायां ज्ञानानन्दादिरूपेण परिणमत इति चेत्, अनिर्मोक्षप्रसङ्गात् । 'अज आत्मा महान् ध्रुवः'' ''न जायते चे''त्यादिश्रुतिविरोधश्च स्यात् । अथ पूर्वविपरीतब्रह्मस्वरूपापरित्यागेनैव कार्यरूपापत्ति ब्रूयात् सृष्टिश्रुतिः, एवं तर्हि विवर्तं प्रतिपादयति; शुक्तिकारजतमायाव्याघ्रादिषु विवर्तस्य तल्लक्षणत्वात् । अथ सृष्टिश्रुतिः सृष्टिमात्रविषया, न पूर्वस्वरूपपरित्यागापरित्यागयोर्व्याप्रियत इति चेत्, तथाऽपि व्यवस्थितब्रह्मवाक्यैरेकवाक्यत्वात् तत्स्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रह्मणो ब्रुवाणा विवर्तमेव दर्शयतीत्यनवद्यम् । योऽपि कश्चिदाह निरवयवमपि परिणमत इति । तथाहि—हेमद्रव्ये रुचकाकारेण परिणममाने तदवयवा अपि परिणमेरन्? इति वक्तव्यम् । यदि परिणमेरन्, तर्हि तदवयवा अपि तथा, इति निरवयवपर्यन्तः परिणामः स्यात् । अथ न परिणमेरन्, तर्ह्यवयवी न परिणमेत; आश्रयविकारमन्तरेणाश्रितविकारायोगात् । तस्माद् यथा संयोगाऽवयव्येकदेशसमवेतः परम्परया निरवयवपरमाणुसंयोगपुरःसरः, तथा निरवयवपरिणाम पुरःसरोऽवयविपरिणाम इति ॥

स वक्तव्यः—कश्चायं परिणाम इति ? यदि तावत् स्वावयवानां पूर्वसंयोगात् संयोगान्तरापत्त्या वाऽवयवान्तरसंयोगेन वा संमूर्छितावयवत्वं परिणामः, न तर्हि निरवयवे परिणामः; स्वावयवाभावान्निरवयवस्य । नचावयवानां संयोगान्तरेण संमूर्छितत्वमन्तरेणावयविनः परिणामोऽवस्थान्तरं वाऽन्यथाभावो वा निरूपयितुं शक्यते । नच वस्तुनो वस्त्वन्तरसंयोगो वा परिस्पन्दो वा गुणान्तरोदयो वा परिणामः; ब्रह्मणि तेषामभावात् । आकाशे च

वस्त्वन्तरसंयोगिनि परिस्पन्दमाने च भ्रमरे लौहित्योदये च घटे द्रव्ये परिणामबुद्ध्यभावात्। अथ तदनुषक्तद्रव्यान्तरोत्पत्ति परिणाम इति, तत्र किं हेमावयवानां रुचकरूपेणैव परिणामः ? किं वा द्रव्यान्तररूपेण ? न तावत् द्रव्यान्तररूपेण; तत्र रुचकद्रव्यातिरिक्तकार्यद्रव्यादर्शनात्, नापि रुचकाकारेणैव; तस्यावयविपरिणामत्वात्, अवयवानां च रुचकानुगमस्य रुचकानुगतावयव्यनुगमेनैवान्यथासिद्धत्वात्। नच रुचकावस्थाव्यतिरेकेण हेमावयवानामवस्थान्तराणि दृश्यन्ते; येन परिणामभेदः स्यात्; । न च संयोगभेद एवावयवपरिणाम इत्युक्तम्। नचावयवि द्रव्यं विना हेमावयवा रुचकाकारेण परिणमन्त इति युक्तम्; आरम्भवादप्रसङ्गात्। अथादृश्यमानोऽप्यवयवपरिणामोऽवयविपरिणामानुपपत्त्या कल्प्यते; आश्रयविकारमन्तरेणाश्रितविकारानुपपत्तेः, नैतत्सारम्, अवयविजन्म-विनाशयोरवयवानामपि तत्तन्त्राणां जन्म-विनाशप्रसङ्गात्, अवयविगमनेऽवयवानां गमनवत्। परिणामोऽपि भविष्यतीति चेत्, न; अवयविनि घटत्वजातिसमवायिन्यवयवानां घटत्वजातिसमवायाभावात्। ननु अवयवानामन्यथाभावमन्तरेण कथमवयविनोऽन्यथाभावः? न हि द्रव्यस्यावस्थान्तरद्रव्यान्तरापत्तिवद् नैल्यं गुणान्तरमापद्यतेऽवस्थान्तरं वा। नचावयविकार्यव्यतिरेकेणावयवानां कार्यं दृश्यत इत्युक्तम्। न हि पटे कार्यान्तरावभासेऽपि तन्तवोऽतन्त्वात्मनाऽवभासन्ते । पटकार्ये तन्त्वनुगमः स्वानुगतानुगमादन्यथासिद्ध इत्युक्तम्। किंच अवयविपरिणामोपाधावेवावयवपरिणामो दृष्टः, इति न निरुपाधिनिरवयवात्मपरिणामसिद्धिः। यत्तु निरवयवसंयोगवत्परिणाम इति, तत्रापि दृश्यमानोऽवयविसंयोगो न परमाणुसमवेतः; तद्गतरूपादिवदप्रत्यक्षत्वप्रसङ्गात्। नाप्यवयव्येकदेशसंयोगेन निरवयवे संयोगः कल्पयितुं शक्यते; अवयविन्येव जातिसमवायवदवयवसंयोगमन्तरेणावयविन्येव संयोगोपपत्तेः। अवयवानां संयोगानुगमस्यावयव्यनुगमेनान्यथासिद्धत्वात्। अवयवेष्वेव संयोगो नावयविनीति चेत्, न; अवयविभ्यामसंयुक्ताभ्यां कार्यान्तरानारम्भप्रसङ्गात्। तस्मादवयविन्येव संयोगो नावयवेषु। अवयविसमवाये संयोगस्य कृत्स्नवृत्तिता संयोगस्य प्राप्नोतीति चेत्, तर्हि निरवयवसंयोगेऽपि कृत्स्नवृत्तेः

प्रचयाभावप्रसङ्ग इति । कथं पुनर्ब्रह्मणो निरवयवत्वलाभः? उच्यते; अवयवावयविनोः स्वयंप्रकाशत्वे सतीतरेतराविषयत्वान्न सावयवत्वं ब्रह्मणा स्वात्मन्यनुभवितुं शक्यम् । अन्यतरस्यास्वयंप्रकाशत्वेऽन्यतरेण वेद्यत्वाद् घटात्मनोरिव नांशांशिभावसिद्धिः । श्रुतिश्च ''निष्कलं निष्क्रियमि''ति क्रियावयवशून्यतामाह । नियन्तृत्वादिक्रियाऽपि श्रूयत इति चेत्, तर्हि परस्परविरोधे सति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया । ''मायाभिः पुरुरूप ईयते'' इति प्रवृत्तेर्मायानिबन्धनत्वं श्रवणात् चेतनस्य सुषुप्ते पुरुषार्थत्वावगमाद् ब्रह्मणः स्वत प्रवृत्तिप्रयोजनाभावाच्च विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्त एवेति सिद्धम् ।

तस्मात् जगत् मूलकारणब्रह्मविवर्त एव । अयं विवर्तवादः आरम्भणाधिकरणे भामत्यां प्रतिपादितम् । 'वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्'[१] इति श्रुमिमूलक ''तदनन्यत्वमारम्भण शब्दादिभ्यः''[२] इति सूत्रे भामत्यां कारणव्यतिरेकेण प्रपञ्चविकारजातस्य अभावं वदता आचार्येण श्रीवाचस्पतिमिश्रेण समस्तस्यापि प्रपञ्चस्यानृतत्वं रज्ज्वां भुजङ्गस्येव विवर्त्तित्वं प्रतिपादितम् । तथाहि—स्यादेतत्—यदि कारणात् परमार्थभूतादन्यन्यत्वमाकाशादेः प्रपञ्चस्य कार्यस्य, कुतस्तर्हि न वैशेषिकाद्युक्तदोषप्रपञ्चावतारः ? इत्यत आह—व्यतिरेकेणाभावः कार्यस्यावगम्यत इति । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामः, ततश्च नाभेदाश्रयदोषप्रसङ्गः । किंत्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति । भेदनिषेधहेतुं व्याचष्टे—आरम्भाशब्दस्तावदिति । एवं हि ब्रह्मविज्ञानेन सर्वं जगत्तत्त्वतो ज्ञायेत, यदि ब्रह्मैव तत्त्वं जगतो भवेत् । यथा रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वम् । तत्त्वज्ञानं च ज्ञानमतोऽन्यन्मिथ्याज्ञानमज्ञानमेव । अत्रैव वैदिको दृष्टान्तः— यथा सोम्यैकेन मृत्पिण्डेनेति । स्यादेतत्—मृदि ज्ञातायां कथं मृन्मयं घटादि ज्ञातं भवति? नहि तन्मृदात्मकमित्युपपादितमधस्तात् । तस्मात्तत्वतो भिन्नम् । नचान्यस्मिन्विज्ञातेऽन्यद्विज्ञातं

---

१. छा.६/१/१ ।

२. ब्र.सू.२/१/१४ ।

भवतीत्यत आह श्रुतिः—"वाचारम्भणं विकारो नामधेयम्" । वाचया केवलमारभ्यते विकारजातं, न तु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतत् । यथा पुरुषस्य चैतन्यमिति राहोः शिर इति विकल्पमात्रम् । यथाराहुर्विकल्पविदः—'शब्दज्ञानानुपातीवस्तुशून्यो विकल्पः' इति । तथाचावस्तुतयानृतं विकारजातं, मृत्तिकेत्येव सत्यम् । तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदि ज्ञातायां येषां सर्वेषामेव तत्त्वं ज्ञातं भवति । तदिदमुक्तम्—नचान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यत इति । निदर्शनान्तरद्वयं दर्शयन्नुपसंहरति—तस्माद्यथा घटकरकाद्याकाशानामिति । ये हि दृष्टनष्टस्वरूपा न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः, तथा च सर्वं विकारजातं, तस्मादवस्तुसत् । तथाहि—यदस्तितदस्त्येव, यथां चिदात्मा । नह्यसौ कदाचित् क्वचित् कथंचिद्वास्ति, किंतु सर्वदा सर्वत्र सर्वथास्त्येव, न नास्ति । नचैवं विकारजातम्; तस्य कदाचित् कथंचित् कुत्रचिदवस्थानात् । तथाहि—सत्स्वभावं चेद्विकारजातं, कथं कदाचिदसत्? असत्स्वभावं चेत्, कथं कदाचित् सत्? सदसतोरेकत्वविरोधात् । नहि रूपं कदाचित् क्वचित् कथंचिद्वा गन्धो भवति । अथ तस्य सदसत्त्वे धर्मौ, ते च स्वकारणाधीनजन्मतया कदाचिदेव भवतः, तर्हि विकारजातं दण्डायमानं सदातनमिति न विकारः कस्यचित्? अथासत्त्वसमये तन्नास्ति, कस्य तर्हि धर्मोऽसत्त्वम्? नहि धर्मिण्यप्रत्युत्पन्ने तद्धर्मोऽसत्त्वं प्रत्युत्पननमुपपद्यते । अथास्य न धर्मः किंत्वर्थान्तरमसत्त्वम्, किमायातं भावस्य? नहि घटे जाते पटस्य किंचिद्भवति । असत्त्वं भावविरोधीति चेत्, न; अकिंचित्करस्य तत्त्वानुपपत्तेः । किंचित्करत्वे वा तत्राप्यसत्त्वेन तदनुयोगसंभवात् । अथास्यासत्त्वं नाम किंचिन्न जायते, किंतु स एव न भवति । यथाहुः—'न तस्य किंचिद्भवति न भवत्येव केवलम्' इति । अथैष प्रसज्यप्रतिषेधो निरुच्यतां, किं तत्स्वभावोऽभाव उत भावस्वभावः स इति । तत्र पूर्वस्मिन् कल्पे भावानां तत्स्वभावतया तुच्छतया जगच्छून्यं प्रसज्येत । तथा च भावानुभवाभावः । उत्तरस्मिंस्तु सर्वभावनित्यतया नाभावव्यवहारः स्यात् । कल्पनामात्रनिमित्तत्वेऽपि निषेधस्य भावनित्यतापत्तिस्तदवस्थैव । तस्माद्भिन्नमस्ति

कारणाद्विकारजातं न वस्तुसत् । अतो विकारजातमनिर्वचनीयमनृतम् । तदनेन प्रमाणेन सिद्धमनृतत्वं विकारजातस्य कारणस्य निर्वाच्यतया सत्त्वं 'मृत्तिकेत्येव सत्यम्' इत्यादिना प्रबन्धेन दृष्टान्ततयानुवदति श्रुतिः[१] ।

एतेन प्रबन्धेनेदं सिद्धं यत् प्रपञ्चे मिथ्या अनृतः विवर्तभूतो ब्रह्मणस्तदनन्योऽनिर्वचनीय इति ।

**ब्रह्मसत्तायां श्रुतिर्मानम्–**

ननु जगज्जन्मादिहेतुत्वं सर्वज्ञसर्वशक्तिमत्त्वं सत्यज्ञानादित्वञ्चास्तु ब्रह्मलक्षणम् । तादृश ब्रह्मसत्तायां किं प्रमाणम् । जगज्जन्मादिनिमित्तकारणत्वं तु यतो वा इमानीति श्रुत्यनुगृहीतानुमानेन क्षित्यङ्कुरादिकर्तृजन्यं कार्यत्वाद् घटवदित्याकारेण जगत्कर्तुरीश्वरस्यैव सिद्धिः न तु शुद्धबुद्धमुक्ताद्वयनिर्विशेषस्वभावस्य ब्रह्मणः । रूपादिरहितत्वाच्च नेन्द्रिय गोचरं ब्रह्म । नाचार्थापत्तिः प्रमाणं तादृशब्रह्म विना कस्याप्यनुपपत्तेः । न च तटस्थ लक्षणप्रतिपादकं यतो वा इत्यादि श्रौतं वाक्यम्, स्वरूपप्रतिपादकं सत्यज्ञानमनन्तमित्यादि वाक्यं वा तत्र प्रमाणं तेषां वाक्यानां ईश्वरसिद्धौ गतार्थत्वात् । तस्मात् नास्ति किञ्चित् ब्रह्मणि प्रमाणमिति चेत्, अत्रोच्यते—यत् साक्षात् अपरोक्षाद् ब्रह्मेत्यादि श्रुतिबलात् सद्रूपब्रह्मणः अपरोक्षत्वात् । अनुभूयते च सन् घटः सन्पट इत्यादि प्रत्यक्षविज्ञाने घटादि प्रपञ्चानुगतं सत्त्वम् । तच्च लाघवादेकमेव सत्त्वं सर्वानुगतम् । तस्मिन्नेव सर्वप्रपञ्चस्य कल्पितत्वात् । अत एवाद्वैतसिद्धौ श्रीमधुसूदनसरस्वतीभिः प्रतिपादितं परिच्छिन्नत्वप्रकरणे—अत एव—'घटादयः, स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्; यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, 'एवं ब्रह्मण्यनुगच्छति विभज्यते–'सन् घटः' 'सन् घटः' इत्यानन्दबोधोक्तमपि—साधु । विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्व-रूपवस्तुपरिच्छेदस्य विवक्षितत्वाद् न ब्रह्म-तुच्छयोर्व्यभिचारः ।

१. भामती-पृ.-४५४-४५६ ।

नच—'खण्डो गौर्मुण्डो गौरि'त्येवमादिस्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वाद् व्यभिचार इति—वाच्यम्; सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमाद् व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववद् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तद्व्यवहारजनकत्वोपपत्तेः।

अत एव—'घटादिकम्, सद्रूपे कल्पितम्, प्रत्येकं सदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्—इति ब्रह्मसिद्धिकारोक्तमपि-साधु।

ननु—सदर्थस्य ब्रह्मणो रूपादिहीनस्याऽऽसंसारमज्ञानावृतस्य शब्दैकगम्यस्य कथं 'घटः सन्' इत्यादिबुद्धिविषयता स्यात्? तथाच 'घटोऽनित्यः' इत्यनेन घटगतानित्यतेव 'घटः सन्' इत्यनेनापि घटगतमेव सत्त्वं गृह्यते। नच—स्वरूपेणाप्रत्यक्षस्य राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति—वाच्यम्; शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात्, राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य योग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषता युक्तेति—चेत्, न; यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्त्वम्; किन्तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव, तथाच चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति 'सन् घटः' इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात्। नच रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिर्बाधकेति—वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात्, सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म, नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः; सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च।

तदुक्तं वार्तिककृद्भिः—"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः। अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता"। इति। च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्। नच—शब्दावच्छिन्नस्याकाशस्यापि श्रावणत्वं स्यादिति—वाच्यम्; स्वभावतो योग्यस्य हि केनचिद् निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता संपाद्यते, यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसंबन्धेन। एवं चावरणेन

प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति, नभस्तु स्वभावायोग्यमेव; न प्रतिरुद्धयोग्यताकम्, येन शब्दावच्छेदेन योग्यं भवेत्। यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, नत्वन्यग्रहे, ब्रह्म तु न द्रव्यम्; "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्, अतो नानुपपत्तिः। अस्तु वा द्रव्यम्; तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षू रूपमपेक्षते। ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेव, इति न तद्ग्रहे रूपाद्यपेक्षा[1]।

विवरणेप्यनुमानेन न ब्रह्मसिद्धिरिति वर्णितम् तथाहि—ननु अनुमानेनैव यथोक्तविशेषणमीश्वरं तार्किका व्यवस्थापयन्ति, किं युक्तिसहितेनागमेनेति ? अत आह— एतदेवानुमानमित्यादिना। युक्तिर्हि संभावनाबुद्धिमात्रमुत्पादयति, अनुमानं पुनरर्थं निश्चापयति। व्याप्त्यनुपपत्त्याभास उदाहरणमात्रप्रदर्शनं युक्तिः, अव्यभिचारिणी व्याप्तिरनुमानम्। तत्र कुलालादिदृष्टान्तैर्न सर्वज्ञेश्वरकारणत्वं निश्चेतुं शक्यते; विपरीतोदाहरणसंभवात्, किन्तु प्रमाणान्तरे सति कुलालादि दृष्टान्तैः संभावयितुं शक्यते। अतो युक्तिरेवैषा। तत्राज्ञानादर्थनिश्चायकमनुमानं मन्यन्त इति। किं तदनुमानमिति ? उच्यते—सर्वं कार्यम्, स्वरूपोपादानोपकरण संप्रदान-प्रयोजन-सामर्थ्यविषयविज्ञानवत्कर्तृकम्, विविधविन्यासकार्यत्वात्; घटादिवत्, इति वैशेषिकानुमानम्। सांख्य-योगाः—ज्ञानैश्वर्य-शक्तयः क्रमेणोत्कृष्यमाणाः, क्वचित् सर्वविषयज्ञानैश्वर्य-शक्तिमति पर्यवस्यन्ति, तरतमभावेनोत्कृष्यमाणधर्मत्वात्; परिमाणवत्—इत्यनुमिमते। नैयायिकास्तु—सर्वं कर्मफलजातम्, कर्म-तत्फल-तद्भोक्तृ-देश-कालादिविशेषविज्ञानवताप्रदीयमानम्, कर्मफलत्वात्; सेवादिकर्मफलवत्—इत्यनुमिमते।

तत्र वैशेषिकानुमाने जगतो बहुकर्तृत्व-परिच्छिन्नज्ञानैश्वर्यादिमत्कर्तृत्वानुमानेषूदाहरण-संभवाद् युक्तिमात्रमेतत्। योगानुमानेऽपि ज्ञानैश्वर्य-शक्तीनां क्वचित् काष्ठाप्राप्तिमात्रेऽनुमीयमाने लक्ष्यपदार्थविषयज्ञानादिषु पर्यवसानसिद्धेः कुतः सर्वज्ञत्वादिसिद्धिः ? सर्वविषयज्ञानाद्यनुमाने

१. अद्वैतसिद्धिः पृ.-५८३-५९३।

गुरुत्व-राग-द्वेष-दुःख-भ्रान्त्यादिष्वनैकान्तिकता, इति युक्तिमात्रमेतत् । नैयायिकानुमानेऽपि कर्मफलस्य शरीरेन्द्रियादिमद्बहुदातृत्वदर्शनादेकेश्वरासिद्धेः श्रुतिप्रतिपन्न-सर्वकारण-सर्वेश्वर-सर्वफलदात्रद्वितीयब्रह्मप्रतिपत्तावुदाहरणमात्रेण संभावनाबुद्धिहेतुत्वाद् युक्तिमात्रम्, इत्यज्ञानाद् किं तदिति निश्चायकमनुमानं मन्यन्ते[१] । तस्माद् युक्तिमात्रमेतत् । आगमेन सिद्धेऽर्थे तदनुगमार्थमनुमानं युक्तिर्वा सम्भवति चेत् । तन्नविपरीतमस्माकम् । अत एव भाष्यकारा अप्याहुः—सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढयायानुमानमपि वेदान्ताविरोधिप्रमाणं भवद् न निवार्यते । श्रुत्यैव सहायत्वेनात्मनः तर्काभ्युपेतत्वात् । तथाहि "**श्रोतव्यो मन्तव्य**"[२] इति पण्डितो मेधावी गान्धारानेवोपसम्पद्यते, 'एवमेवेहाचार्यवान् पुरुषो वेद'[३] इति पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति"[४] ।

एवञ्च सगुणं निर्गुणं वा ब्रह्म नानुमानगगम्यं वेदार्थत्वाद् धर्मवदिति फलितम् । ननु सगुणं ब्रह्मानुमानेन कथं न गम्यमिति चेत् न यतः उक्तानुमानेन निमित्तकारणम् ईश्वरः सिध्यति नाभिन्ननिमित्तोपादानरूपः । तस्माद् नानुमानेन केवलेन गम्यं ब्रह्म । अपितु आगममात्रगम्यम् । तं तु औपनिषदं पुरुषं पृच्छामीति श्रुतेः ब्राह्मण उपनिषद् गम्यत्वावगमात् ।

यद्यपि धर्मे केवलं श्रुतिरेव मानम्, ब्रह्मणि पुनः श्रुत्यादेयोऽनुभवादयश्च । श्रुत्यादयः=श्रुतीहासपुराणस्मृतयः । अनुभवः=अन्तःकरणवृत्तिभेदः ब्रह्मसाक्षात्कारः तस्याविधानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम् । तच्च फलमिव फलमिति गमयितव्यम् ।

यदि उपनिषद्गम्यं ब्रह्म, किं तर्हि तद्वाक्यं, यदनुरोधात् जन्मादिसूत्रग्रथनम् । वेदान्तवाक्यकुसुमग्रथनार्थमेव ब्रह्ममीमांसासूत्रमिति भाष्यकाराणामभ्युपगमः । उच्यते—

१. विवरण पृ. ९१८-९१९ ।

२. वृ. २/४/४ ।

३. छा. ६/१४/२ ।

४. शा.भा. सू. १/१/२ ।

"भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति" इत्युपक्रम्याह—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व । तद्ब्रह्मेति"[१] । तस्य च निर्णयवाक्यम्—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति"[२] । अन्यान्यप्येवंजातीयकानि वाक्यानि नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि[३] ।

एवञ्च यंत इत्येकवचननिर्देशात् कारणस्य तदर्थमात्रस्यैव विधित्सितत्वाद् अर्थात् सर्वज्ञं सर्वशक्ति जगत्कारणं वाक्याद् गम्यते । पुनस्तविजिज्ञासस्वेत्यनूद्य तद्ब्रह्मेति ब्रह्मशब्दप्रयोगाद् वृहत्यर्थान्वियेन सर्वतोऽनवच्छिन्नस्वभावं जगत्कारणं ब्रह्मपदार्थ इति गम्यते ।

**ब्रह्मणः निरूपाधित्वसिद्धिः-**

ननु निरुपाधिकब्रह्मस्वरूपकथनमन्तेण सोपाधिकानां सर्वज्ञत्वादीनां कस्यचिद् धर्मतया प्रतिपत्तिर्न युक्ता, तन्न; 'यत् सुषिरं तदाकाशम्' 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवत् स्वरूपलक्षणमे किंचिद् वक्तव्यम् । ब्रह्मशब्दाभिधेयमेव स्वरूपलक्षणमिति चेत्, न; बृहत्त्व-धर्ममात्राभिधानात् । महान् घट इत्युक्ते महत्त्वसय निरुपाधिर्घटो धर्मितया प्रतीयते, तथेहापि वक्तव्यं सच्छब्दाभिधेयं लक्षणमिति चेत्, न; महासामान्यमात्राभिधानात् । सन्नित्युक्ते घट इत्यवान्तरसामान्यव्यक्तिर्महा-सामान्यपर्यष्वसानत्वेनापेक्ष्यते, तथेहाप्यवान्तरसामान्यव्यक्तिर्वक्तव्या । विज्ञानमेव बृहत्त्व-सर्वज्ञत्वादिधर्मवत्तया निरुपाधि ब्रह्मस्वरूपलक्षणमिति चेत्, न; तस्य सुख दुःख राग-द्वेषादिमहासामान्यत्वात् तस्याप्यवान्तरसामान्यव्यक्तौ पर्यवसानं वक्तव्यमिति, तदाह—तस्य च निर्णयवाक्यमानन्दाद्ध्येवेति । आनन्द एव हि ब्रह्मत्व सर्वज्ञत्व कारणत्वादिधर्मवत्तया निरुपाधि ब्रह्मस्वरूपं निर्णीयते । तथाहि—"यत्र नान्यत्पश्यती"त्यारभ्य "यो वै भूता

१. तैत्ति.३/१ ।

२. तैत्ति.३/६ ।

३. भाष्य-पृ.-९३८-९४४ ।

तत्सुखामि''ति सुखस्यैव बृहत्त्वधर्मवत्तामाह। विज्ञानं तर्हि निरुपाधिकब्रह्मगुण इति चेत्, किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलवद् गुण-गुणिभावात् ? किं वा द्रव्यं घट इतिवत्परापरसामान्यभावादिति? न तावद् गुण-गुणिभावात्; ''साक्षी चेता केवलो निर्गुणश्चे''ति श्रुतेः ''एकधैवानुद्रष्टव्यं नेह नानास्ती''ति च गुण-गुणिभावभेदप्रतिषेधात्, गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामनिरूपणात्।

**निर्गुणत्वप्रतिक्षेपनिरासः-**

अत्र सर्वसङ्करवादी न निर्गुणं द्रव्यमस्तीति जल्पति। मा भून्निर्गुणं द्रव्यम्, ब्रह्म तु न द्रव्यम्; ब्रह्म तु न द्रव्यम्; प्रमाणाभावात्। समवायिकारणत्वाद् द्रव्यमिति चेत्, न; आरम्भवादानभ्युपगमात्। उपादानकारणत्वाद् द्रव्यमिति चेत्, न; गुणादीनामपि ग्रहणधर्मत्वादिधर्मोपादानत्वात्। न निर्गुणं वस्त्विति चेत्, अन्त्यगुणेष्वनेकान्तः। तस्मात्तत्त्वज्ञानप्रद्वेषमात्रमेतद् न निर्गुणं ब्रह्मेति। तस्माद् 'द्रव्यं घटः' 'सन् घटः' इति वत्परापरसामान्यनिबन्धनं विज्ञानमानन्दमिति सामानाधिकरण्यम्। तस्माद् विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेति। तत्र सर्वज्ञाद्वितीयत्वादिधर्माणां प्रपञ्चोपाधितयाऽनिर्वचनीयत्वान्न तैर्ब्रह्म सगुणं सद्वितीयं वा भवति। विज्ञानसामान्यमपि दुःख-रागादिप्रपञ्चोपाधितयाऽनिर्वचनीयं सद् ब्रह्मणि विज्ञानशब्दप्रवृत्तिमात्रहेतुर्भवति। विज्ञानगुणत्वाभावे न विज्ञानं ब्रह्मेति चेत्, न; विज्ञानसामान्यालम्बनस्य विज्ञानव्यवहार गोचरत्वात्, विज्ञानप्रयुक्तार्थक्रियाकारित्वाच्च। सामान्यास्याभासत्वात् तदालम्बनं ब्रह्मज्ञानं मिथ्याज्ञानमिति चेत्, न; मुख्यसामान्यान्तराभावात्, अस्यैव च मुख्यत्वात्। तस्माद्विज्ञानस्वभाव आनन्दो ब्रह्मे'ति।

**निर्विशेषत्वाक्षेपनिरासः-**

यत्तु श्रीभाष्ये—''ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति, तन्मते 'ब्रह्मजिज्ञासा' ''जन्माद्यस्य यतः'' इत्यसङ्गतं स्यात्। निरतिशयं बृहत् ब्रह्मेति निर्वचनात्, तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च। एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु

चेक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारि-साधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषे ब्रह्मणि प्रमाणम् । 'जगज्जन्मादिभ्रमो यतः, तद्ब्रह्मे'ति स्वोत्प्रेक्षेऽपि न निर्विशेषवस्तु सिद्धिः । भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशमानतयैवोच्यते, प्रकाशत्वं जडाद् व्यावर्तकं भवति । तथाच सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यादिति-श्रुति-सूत्रादीनां नाद्वैतमते स्वारस्यमिति—प्रतिपादयन्ति, तत्र पूर्वोक्तप्रकारेण निर्विशेषात्मस्वरूपेऽपि "बृहत्त्वात् बृंहणत्वाच्चात्मैव ब्रह्मेति गीयते" इत्युक्तरीत्या ब्रह्मशब्दनिर्वचनसंभवात् "जन्माद्यस्य यतः" इत्यादिसूत्र-तदुदाहृतश्रुतिनां तत्पदवाच्यार्थजगत्कारणतायामेव तात्पर्यस्य प्रतिपादनेन तर्कस्यापि सगुणविषयत्वस्यैव भाष्य एवं व्यवस्थापनेन च जन्मादिसूत्रतद्विचारणीयश्रुति-वाक्यानामवान्तरतात्पर्यमादायैव जगत्कारणत्वव्यवस्थापनेन निर्विशेषस्य कारणत्वानुमान-गम्यत्वादीनामनङ्गीकारात्, जगज्जन्मादीनां बाधितत्वं पर्यवसानतो वाक्यान्तरगम्यमेवात्र विवक्ष्यते, न तु जगज्जन्मादिभ्रमाधिष्ठानत्वं ब्रह्मलक्षणमिति 'जन्मादिभ्रमो यत" इति विवरणस्यास्मदनभिमतत्वाच्च, नोक्तानां दूषणानामवसरः । न हि वाच्यार्थेऽपि कारणत्वं बाधितमित्यस्माकं सिद्धान्तः, किन्तु बाधितस्यापि स्वाधिष्ठानज्ञापकत्वेन तटस्थलक्षणत्वं न विरुद्धमित्येव "यदिदं रजतमभात् सेयं शुक्तिरि'त्यादिवाक्येन बोध्यते, न तु शुक्तिलक्षणं रजतमिति । न हि तटस्थलक्षणलक्ष्यमाणं तेन लक्षणेन परमार्थतः सधर्मकं कुत्रापि दृष्टम् । साक्षित्वमप्यज्ञानोपहितचैतन्यत्वमन्तःकरणोपहितचैतन्यत्वं वेति न शुद्धचैतन्यमद्वैतमते साक्षिपदार्थः, इति ब्रह्मसविशेषत्वापादनमिदं निरवकाशमेव । यथाच जगज्जन्मादिकारणत्वं स्वरूपलक्षणमेव, न तटस्थलक्षणमिति श्रीमध्वसम्प्रदायानुसारितात्पर्यचन्द्रिका-सिद्धान्तोऽनवसरः, तदीयमधिकरणशरीरं चानुपपन्नम् । सर्वथा तु नाद्वैतिनामधिकरणद्वयमपि निर्विशेषब्रह्मवादविरोधीति दिक् ।

**ब्रह्मणः वेदादिकर्तृत्वेन सर्वज्ञत्वादिसिद्धिः-**

अपि च शास्त्रयोनित्वादिति सूत्रेण शास्त्रं ऋग्वेदादि योनिर्ज्ञापकं यस्य तच्छास्त्रं योनिः तत्त्वादित्यर्थकेन शास्त्रप्रमाणकत्वं ब्रह्मणः उपपादितं भाष्ये तत्रैवेति बोध्यम् । शास्त्रवेदादि ब्रह्मणि सर्वज्ञ सर्वशक्तिमति सर्वजगत् कर्तरि प्रमाणमिति तृतीयसूत्रेणा "शास्त्रयोनित्वात्" (१/१/३) इत्यनेनापि सिद्धं भवति । उक्तञ्च भामत्यां "न केवलं शास्त्रयोनित्वादस्य भगवतः सर्वज्ञता शास्त्रयोनित्वादपि बोद्धव्या"[१] ।

तत्र शास्त्रस्य ऋग्वेदादेर्योनिः कारणम् शास्त्रयोनिः तच्च ब्रह्मैव महत ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपवृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य सर्वज्ञगुणान्वितस्य न सम्भवोऽन्यत्र सर्वज्ञात् सर्वशक्तिमतो ब्रह्मणः । श्रुतिरपि परब्रह्मण एव शास्त्रसम्भवमाह— "अस्य महतो भूतस्य निःश्वसितमेतत् ऋग्वेदोयजुर्वेद"[२] । ननु सर्वज्ञकल्पस्य ऋग्वेदादेः कर्ता सर्वज्ञकल्प एव न तु सर्वज्ञः ईषदसमाप्तौ कल्पप् प्रत्यय स्मरणादिति चेन्न यच्छास्त्रं येन प्रणीतं सः तच्छास्त्रीय विषयविज्ञानाधिकविज्ञानवान् दृश्यते यथा पाणिन्यादिः ।

तथा च—ऋग्वेदादिशास्त्रं स्वविषयादधिकतरविज्ञानवत् प्रणीतं वाक्यप्रमाणत्वात् पाणिन्यादिशास्त्रवत् इति प्रयोगात् वेदादिशास्त्रकर्तुरीश्वरस्य सर्वज्ञत्वं सिद्धम् । ननु जन्माद्यस्येति सूत्रेण जगत्कर्तृत्वं प्रतिपादितं जगदन्तर्गतवेदादिकर्तृत्वमपि तेनैव सूत्रेण प्रतिपादितमेवेति । पुनरनेन सूत्रेण ब्रह्मणः शास्त्रकारणत्वप्रतिपादनं पुनरुक्तिरिति चेन्न अनेन सूत्रेण हेत्वन्तरस्याभ्युच्चयात् पुनरुक्तेरभावात् । अत एव भामत्यामुक्तम्— न केवलं जगद्योनित्वादस्य सर्वज्ञता शास्त्रयोनित्वादपि बोद्धव्येति । कल्पतरौ चास्य वाक्यस्याशयो वर्णितः "अभ्युच्चयार्थत्वेन हेतुपौनरुक्त्यं परिहरति—न केवलमिति" हेत्वन्तरसमर्थनाच्चाधिकरणान्तरम् ।

१. भामती पृ.९६ ।
२. बृ.२/४/१० ।

कल्पतरावपि सर्वज्ञत्व साधकमनुमानमुक्तम् तथाहि ब्रह्मवेदविषयाद्दधिकविषयज्ञं तत्कर्तृत्वात् यथा भगवान् पाणिनिरिति प्रयोगाद् सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलात् सर्वज्ञत्वसिद्धिः ।

**वेदापौरुषेयत्वविचारः-**

ननु वेदानां नित्यत्वादपौरुषेयत्वात् कथं तेषां सर्वज्ञब्रह्मकर्तृत्वं सिध्यतीति उक्तानुमाने बाधः स्यादिति चेत् अत्रोच्यते भामत्याम्—येऽपि तावत् वर्णानां नित्यत्वमास्थिपत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम् । आनुपूर्वीभेदवन्तो हि वर्णाः पदम् । पदानि चानुपूर्वीभेदवन्ति वाक्यम् । व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात् । व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या । पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता । तस्मान्नृत्तानुकरणवत् पदाद्यनुकरणम् । तथाहि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणानुकरोति नर्तकी, नतु तदेव व्यनक्ति । एवं यादृशीमानुपूर्वी वैदिकानां वर्णपदानीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः, नतु तांमेवोच्चरयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात् । तसमान्नित्यानित्यवर्णवादिनां लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः । यथाहुः—'यत्रतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' । तत्र सृष्टिप्रलयमनिच्छन्तो जैमनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिश्यपरम्परामविच्छिन्नामनादि-माचक्षते । वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्य-विद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं; पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविचरनात् । तथाहि—यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते । नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेघो भवति । अग्निर्वा क्लेदयति । आपो वा दहन्ति, तद्वत् । यथात्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयानर्थहेतुः, एवं सर्गान्तरेष्वपीति तदनुरोधात्

सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचित्र स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्चास्माकमपि समानमन्यत्राभिनिवेशात्। नचैकस्य प्रतिभानेऽनाश्वास इति युक्तम्। नहि बहूनामप्यज्ञानां विज्ञानां वाशयदोषवतां प्रतिभाने युक्त आश्वासः। तत्त्वाानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसंपन्नानामुपपद्यते तत्स्वरूपावधारणं तत्प्रत्ययेन चार्वाचीनानामपि तत्र संप्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं, प्रमाण्यं चेति[१]। विवरणे च "ननु एवं सति बुद्धिपूर्वत्वात् सापेक्षं स्यात्" इति पञ्चपादिका वाक्यप्रतीकमादाय सापेक्षत्वं वेदानां पौरुषेयत्वञ्च निरस्तम्। तथाहि—ननु किमत्रानुमानेन प्रसाध्यते? यदि तावदुपाध्यायस्याध्यापनोच्चारणवच्छास्त्रशब्दोपलक्षितानां सर्वेषां शब्दानां ब्रह्मण्यप्युच्चारणं साध्यते ? तदा नोपाध्यायवत् सर्वज्ञं ब्रह्म भविष्यति। अथ सकलवाक्यार्थं प्रमाणान्तरेणोपलभ्य तत्पतिपत्त्यर्थं परस्मै वाक्यं विरचयति ? प्राप्तं तर्हि पौरुषेयत्वम्; तल्लक्षणत्वात्पुरुषवचसाम्, इति चोदयति—नन्वेवं सतीति।

अत्र केचित्परिहारमाचक्षते—प्रमाणान्तरेणार्थमुपलभ्य विवक्षित्वा परस्मै विरचितः शब्दः पौरुषेय इत्युच्यते। तत्रेदमनेन कर्तव्यमिति वक्तुरभिप्रायभेदो रागः पुरुषवचसामर्थः। द्विविधश्च रागः—नित्योऽनित्यश्च। तत्रानीश्वराणामभ्झिलषितसाधनज्ञानस्यानित्यतया तज्जन्यरागस्याप्यनित्यत्वात् तद्विषयाणां पुरुषवचसां प्रमाणान्तरसापेक्षतया पौरुषयत्वमङ्गीक्रियते, ईश्वरस्य पुनर्निखिलेष्टसाधनविषयज्ञानानां नित्यतया तन्मूल रागस्यापि नित्यत्वादीश्वरप्रणीतानामपि वैदिकवचसां नित्यरागविषयतया पौरुषेयता न जेगीयते—इति, नैतत्सारम्, ईश्वरे सकलाभिलषितसाधनज्ञाननित्यत्वे प्रमाणाभावात्, अनुमानानां चातद्गोचरत्वस्य दर्शितत्वात्। शब्द इति चेत्, न; इतरेतराश्रयापातात्—नित्यज्ञानमूलनित्यरागजन्यत्वे शब्दस्यानपेक्षं प्रामाण्यम्, अनपेक्षे च शब्दे नित्यज्ञानसिद्धिरिति। 'रागश्च

१. भामती-पृ.९८-९९।

नित्यः', 'नित्याभिलषितसाधनज्ञानामूलः' इति च व्याहन्यते । कुतश्चैतद् लब्धम्—नित्यानित्याभिप्रायभेदेन पुरुषवचसामपि सतां सापेक्षत्वानपेक्षत्वविभागो विद्यत इति ? नच पुरुषाभिप्रायः शब्दार्थ इति च वक्ष्यते । तस्मादसमञ्जसमेतत् ।

अन्ये तु सङ्गिरन्ते—व्यासाद्यभिप्रायभेदतात्पर्यवतामपि भारतवचसामिदानीन्तन-वाचकवदध्ययनविधितात्पर्यवतामेव वेदानां सृष्टिकाले समुच्चारणमीश्वरस्य वेदप्रणयनं नाम । ततश्च रागतात्पर्याभावाद् वेदप्रामाण्यमीश्वरस्य सर्वज्ञता चेति, अत्र वयं पृच्छामः—सृष्टिसमये किं प्रमाणान्तरेणार्थमुपलभ्य वेदवाक्यं व्यनक्ति? यथा पाणिन्यादिः, आहोस्विदुपाध्यायवत् पूर्वसिद्धवाक्यमुच्चरयति? तत्र पूर्वस्मिन् कल्पे पौरुषेयताऽपत्तिः, उत्तरस्मिन्नुपाधयवदेवासर्वज्ञतापत्तिः । अभिप्रायतात्पर्याभावादपौरुषेयतेति चेत्, उपलभ्य रचनायां कुतो रागतात्पर्याभावः ? पूर्वमेव विधितात्पर्यादिति चेत्, तथापीतरन्न विहन्यते । न चोभयतात्पर्यमुपपद्यते; सत्यपि विधितात्पर्येऽवगम्यार्थं रचनैव सापेक्षत्वे निमित्तं समधिगतम् । नचोपलभ्य रचनायां विधितात्पर्यमुपपद्यत इति यत्किञ्चिदेतत् ।

अपरे तु मन्यन्ते—निर्विकल्पज्ञानपूर्वकाणि किल वेदवाक्यानि न सापेक्षत्वदोषमश्नुवते; ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वात्, लौकिकवचसां तु सविकल्पज्ञानपूर्वत्वात्सापेक्षता—इति, नायमपि विभागः सिध्यति; उपलभ्य रचनाया एव सापेक्षत्वनिमित्तत्वात्, स्वरूपज्ञानस्याप्यभिलषितसाधनोपरागे सविकल्पकत्वात् । तस्मान्नैते परिहाराः ।

स्यात्तर्हि वेदानां पौरुषेयता । ननु अपौरुषेयो वेदः; अविच्छिन्नव्यवहारे सत्यस्मर्यमाणकर्तृकत्वात्; आत्मवदित्यपौरुषेयतानुमीयत इति, न; चिरवृत्तेष्वपीदानीमनुमान-प्रमीयमाणकर्तृकेष्वनैकान्तिकत्वात्, वेदानां कर्तुरनुमानागमाभ्यां प्रमीयमाणत्वात् । तथाहि विशिष्टबहुज्ञपुरुषप्रणीतः, वेदः, बह्वर्थविषयवाक्यप्रमाणत्वात्, भारतवत्, "इदं सर्वमसृजत" "ऋचो यजूंषि सामानी"त्यागमः । तस्मात्पौरुषेयो वेद इति । अत्र पृच्छामः—कथं पौरुषेये वेदे प्रामाण्यं लभ्यते कपिल-कणादाक्षपादानामिति ? सर्वज्ञप्रणीततयेति चेत्, न तावदनुमेयः

सर्वज्ञ इत्युक्तम् । आगमाच्चेत्सिद्धिः, न; इतरेतराश्रयात्—सर्वज्ञे सिद्धे तत्प्रणीततया वेदप्रामाण्यम्, ततश्च सर्वज्ञसिद्धिरिति । स्यादेतत्—महाजनपरिग्रहाद् वेदप्रामाण्यमिति, न; सुगताद्यागमानुसारिणामेव देशविशेषेष्वानन्त्यश्रवणात् । नच देहात्मभाव-चन्द्रप्रादेशत्वादीनां महाजनपरिगृहीतानां प्रामाण्यं दृश्यते । नच महाजनपरिग्रहः प्रमाणपक्षपाती । तस्मान्न प्रामाण्यलाभः ।

**वेदपौरुषेयत्वे कर्मफलसम्बन्धत्वानुपपत्तिः-**

किञ्च पुरुषो वा केन प्रमाणेनोपलभ्य धर्माधर्मौ, वेदवाक्यं विरचयेत्? नतावदिन्द्रियपञ्चकेन; रूप-रस-गन्ध-स्पर्श-तत्तत्समवेत-विशेषग्राहित्वात्, वर्तमानग्रहणनियमाच्च, धर्मस्य च साध्यत्वात् । ननु आत्मसमवायी धर्मस्तद्ग्रहणेनैव ज्ञानेन तद्गुणतया मनसैव चक्षुरादिना वा गृह्यत इति, किमिति तर्हि न गृह्णीमः ? नच विशिष्टः पुरुषो गृह्णाति; तदिन्द्रियाणामप्येतादृशत्वात्, योगजधर्मसामर्थ्याद्विशिष्टानि तदिन्द्रियाणीति चेत्, तथाऽपि मार्जारादिदृष्टिवत्स्वविषयेऽतिशयमात्रं गृह्णीयुः, नाविषयं धर्मम् । "दिव्यं चक्षुर्ददाम्यहम्" "प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः" इति स्मरणादस्ति योगिनां दिव्यं चक्षुरिति चेत्, न; तस्यापि विश्वरूपादिस्वविषयातिशयदर्शित्वात् । न चात्मसमवेततयाऽपि धर्मो वर्तमानो भवति, येन प्रत्यक्षः स्यात् । कल्पान्तरीयोऽनुष्ठितो धर्मोऽस्मिन् कल्पादौ वर्तत इति चेत्, न; कल्पान्तरीयधर्मोपदेशायोगात् । ततोऽपि कल्पान्तरानुष्ठितधर्मं प्रत्यक्षेणोपलभ्योपदिशतीति चेत्, अन्धपरम्परा स्यात् । तस्मान्न प्रत्यक्षमूलो वेदः । नापि शब्दमूलः; अनवस्थानात् । तस्मात्प्रामाण्यहानान्न पौरुषेयो वेद इति ।

मा भूत् प्रामाण्यमिति सुगतार्हताः । तैरिदं वक्तव्यम्—प्रत्यक्षानुमानदृष्टव्यतिरिक्तः कर्मफलसंबन्धो विद्यते? नवेति? विद्यते चेत् कथमपौरुषेयागममन्तरेण तस्य सिद्धिः ? सर्वज्ञसुगतप्रणीतागमादिति चेत्, किं कपिलादयः सर्वज्ञा न भवन्ति? सर्वे तीर्थकराः

सर्वज्ञा इति चेत्, धर्माधर्मयोर्विवादः कथं स्यात्? नचैकः सर्वज्ञो नेतर इति प्रमाणमस्ति। नच सर्वे सर्वज्ञप्रणीता धर्मा एवेति युक्तम्; अन्योन्यधर्मनिराकरणात्। नचापौरुषेया एव सुगताद्यागमा इति युक्तम्; अनुस्मर्यमाणकर्तृकत्वात्। अपौरुषेयत्वे च न विवदामः—उदितानुदितहोमवद् व्यवस्थोपपत्तेः।

आह लोकायतः—मा भूत् प्रत्यक्षदृष्टातिरिक्तः कर्मफलसंबन्धः, पौरुषेयता तु वेदस्यानुमानसिद्धा न निवार्यत इति। स वक्तव्यः—किं लौकिकवचांसि प्रमाणानि? न वेति? न चेत्, न मया ते वादो युक्तः; शब्दैरेव परस्परविरुद्धार्थप्रतिपादनरूपत्वाद्वादस्य। अथ लौकिकवचांसि प्रमाणानि, वेदवचोभिस्तर्हि किमपराद्धम्? ननु पौरुषेयत्वं वेदस्यानुमानात् तस्य च मूलप्रमाणाभावादप्रामाण्यमुक्तम्, न; स्वाभाविकत्वाच्छब्दानामर्थावबोधसामर्थ्यस्य पुरुषप्रत्ययानुसारित्वाभावात्, अन्यथा सागरं विवक्षन्मेरुशब्दं ब्रूयात्। स्वभावसिद्धशब्द-सामर्थ्यानुसारेण हि लौकिकाः शब्दं प्रयुञ्जते, सत्यम्; कदाचित्सर्वाभिधान सङ्केतसामर्थ्यात्। इदानीं व्यवस्थयाऽभिधानमिति चेत्, तन्न; विवादगोचरापन्नः पूर्वतनशब्दार्थसंबन्धव्यवहारः, तथाविधपूर्वपूर्वव्यवहारपरम्परानिबन्धनः; अभिधानाभिधेयव्यवहारत्वात्; इदानीन्तनतद्-व्यवहारवत्, इत्यनादितानुमानात्। साङ्केतिकशब्देष्वनैकान्तिक इति चेत्, न; अभिधानाभिधेयविषयत्वादनुमानस्य। जातिमात्राभिधायिनो वा सर्वदेशेष्वभिधानतया संप्रतिपन्ना वा यस्मिन्नुत्पद्यमाने क्वचिद् गृहीतसंबन्धा एवोपरज्यन्ते शब्दाः, तानि चाभिधानानि, नैवं साङ्केतिकाः शब्दा इति। मा भूत् तर्ह्यभिधानसङ्केतः, वेदवाक्यरचना तु पुरुषनिबन्धनैवेत्यत आह—न स्याद् ब्रह्मवदनादित्वादिति। विवादगोचरापन्नं सृष्टिकालीनं वेदाध्ययनम्, पूर्वपूर्वतथाविधवेदाध्ययनानुस्मृतिनिबन्धनं भवितुमर्हति, वेदाध्ययनत्वात्, इदानीन्तनवेदाध्ययन-वदिति विशेषतोदृष्टानुमानेन वाक्यत्वाद्भारतवदिति सामान्यतोदर्शनाद् बलीयसा वेदस्यानादित्वसिद्धेः कुतः पौरुषेयता? ननु सर्वेष्वपि ग्रन्थेष्विदमनादित्वानुमानमनुविशति, न; तैरेव ग्रन्थैस्तत्तत्कर्तृणां प्रतिपादनात्तदागमविरोधात्, इहापि श्रुत्यैव वेदस्य कर्ता प्रतिपाद्यत

इति चेत्; न तावत् ''स तया वाचेदं सर्वमसृजत ऋचो यजूंषि सामानी'ति श्रुतिः प्रजापतिविषया सती तस्य प्रमाणान्तरेणार्थमुपलभ्य शब्दरचनां ब्रवीति; 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै' इति श्रुतौ प्रागेव वेदसद्भावावगमात् । 'अस्य महतो भूतस्ये''ति श्रुतिरीश्वरविषयाऽपि सती प्रकरणसामर्थ्याद्विदोषादानत्वमेव ब्रवीति ।

किं चेदं पौरुषेयत्वं साध्यते? यदि तावत् पुरुषनिर्वर्त्यतामात्रम्, संप्रतिपन्नमेव; तत्तत्क्रमविशिष्टानामेव वर्णानां वेदशब्दाभिधेयत्वात् क्रमस्य तूच्चारणोपलब्ध्योरन्यतरस्य प्रतिक्षणनिर्वर्त्यतया तद्विशिष्टवर्णानामपि प्रत्युच्चारणं जन्यत्वात्, पूर्वपूर्वक्रमानुस्मरणेन तत्सदृशोत्तरोत्तरक्रमनिवर्तनात्, क्रमसादृश्यपरम्परायाश्चानिदंप्रथमतया तद्विशिष्टवर्णनित्यत्वाभिधानात् । अथ वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वात्पौरुषेय इति, तत्र प्रत्यनुमानमुच्यते— वेदः, स्वार्थप्रवृत्तप्रमाणान्तरजन्यो भवति, असर्वज्ञवचनत्वाभावे सति धर्माधर्मब्रह्मप्रमाणत्वात्; परपरिकल्पितेश्वरबुद्धिवदिति । अध्ययनस्येदं प्रथमता वेदस्य पौरुषेयतेति, न; अध्ययनस्यानादित्वानुमानस्य दर्शितत्वात् । तस्मान्नास्ति वेदस्य पौरुषेयत्वमिति[१] ।

---

१. विवरण-पृ.-९५७-९६४ ।

# पञ्चमोऽध्यायः

## वेदान्तानां ब्रह्मणि समन्वयः

"तत्तु समन्वयात्"[१] इति सूत्रेण सर्वेषां वेदान्तानामद्वैते निर्विशेषे सर्वज्ञे सर्वशक्तिमति ब्रह्मणि समन्वय उक्तः। शास्त्रयोनित्वादिति सूत्रेण ब्रह्मणः शास्त्रयोनित्वं ऋग्वेदादिशास्त्रकारणत्वं तथा ऋग्वेदादिशास्त्रज्ञाप्यत्वमुक्तम्। शास्त्रयोनिशब्दस्योभयथा व्याख्यानं कृतं भाष्यकारेण शास्त्रस्य योनिः, कारणं ब्रह्म, शास्त्रं योनिज्ञापकं प्रमाणं यस्येति तद्ब्रह्मेति। तत्र च प्रतिज्ञामात्रेण शास्त्रप्रमाणकत्वमुक्तम्। हेतुस्तुनोपात्तः। न हि प्रतिज्ञामात्रेण वस्तुसिद्धिः। तस्माद् शास्त्रप्रमाणकत्वे प्रमाणं वक्तव्यम्। एवं पूर्वाधिकरणेन सहास्य समन्वायाधिकरणस्याक्षेप-रूपासंगतिर्भवति। ननु शास्त्रस्य कारणं ब्रह्मेत्यस्यां व्याख्यायामपि प्रमाणं वक्तव्यम्। न पुनः शास्त्रप्रमाणकत्वपक्षे एव प्रमाणरूपहेतुजिज्ञासेति चेन्न जन्माद्यस्य यत इति सूत्रविषयभूतवाक्यमेव यतो वा इमानीत्यादिरूपं तत्र प्रमाणम्।

**शास्त्रप्रमाणत्वे पूर्वपक्षः-**

ननु शास्त्रप्रमाणकत्वपक्षेऽपि बहूनि श्रुतिवाक्यानि सन्ति? इति चेत्, सन्तु न तु सूत्रविषयतया प्रदर्शितानीति तान्येव प्रदर्शयितु समन्वय मुखेन, एतत् सूत्रं प्रवृत्तम्। तत्रायं पूर्वपक्षः—जैमिनिशास्त्रे हि 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां'[२] इति सूत्रेण सकलस्य मन्त्रार्थवादनामधेयादेशम्नायस्य प्रयोजनपर्यवसानाय क्रियार्थत्वावश्यंभावात् अक्रियार्थानां वैदिकवाक्यानामानर्थक्यं निष्प्रयोजनत्वं वर्णितम्। तस्माद् क्रियार्थमर्थवादजातम-नित्यमप्रमाणमिति पूर्वपक्षं कृत्वा "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः"[३]

१. ब्र.सू.-१/१/४।
२. जै.सू.१/२/१।
३. जै.सू.१/२/२।

इत्यनेन सूत्रेण अर्थवादवाक्यानामपि विधिवाक्येनैकवाक्यत्वात् विधीनां स्तुतिरूपेण अर्थेन प्रयोजनेनार्थवत्ता बोधिता। तथा च वेदान्तवाक्यानामपि अर्थवादरूपत्वं कस्याश्चित् क्रियायाविधेः प्रतिपादकत्वाभावात् तेषामपि आनर्थक्यं प्राप्तम्। अथवा कर्तृदेवताप्रकाशनार्थत्वेन विधिवाक्यैकवाक्यतया क्रियाविधिशेषत्वं तेषां स्यात्।

अथवा उपासनादिक्रियान्तरविधायकत्वं तेषां स्यात् न तु सिद्धे ब्रह्मणि परिनिष्ठिते वस्तुनि प्रतिपादकतया सार्थक्यम् नहि परिनिष्ठितवस्तुप्रतिपादनं सम्भवति। प्रत्यक्षादि-प्रमाणान्तरविषयत्वात् वेदान्तानां परिनिष्ठितवस्तु प्रतिपादकत्वेऽपि आनर्थक्यं स्यात्। नहि तादृशवस्तुनः हानोपादानादि सम्भवति। हेयोपादेयरहिते वस्तुनि पुरुषार्थाभावात् भूतवस्तुप्रतिपादकत्वेन च वेदान्तानामनुवादकत्वात् अप्रमाण्यं स्यात्। ब्रह्मसिद्धमिति तस्मिन् वेदान्तवाक्यं कथं प्रमाणं स्यात्। तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति।

तथा चात्र भामती—शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्यकारः—कथं पुनरिति। किमाक्षेपे। शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म, भूतमभिदधतां वेदान्तानामपुरुषार्थोपदेशिनाम-प्रयोजनत्वापत्तेः, भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत्तदर्थानुवाद-कत्वेनाप्रामाण्यप्रसङ्गात्। न खलु लौकिकानि च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत्तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात्। न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमवबोधयन्ति स्वतःप्रमाणम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत। नच तैरप्रमाणैर्भवितुं युक्तम्, नचाप्रयोजनैः, स्वाध्यायनविध्यापादित-प्रयोजनवत्त्वनियमात्। तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम्। यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, ततः संनिहितोपासनादिक्रियापरत्वं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत। नच तैरप्रमाणैर्भवितुं युक्तम्, नचाप्रयोजनैः, स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात्। तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादि-

प्रतिपादनपरत्वेनैव क्रियार्थत्वम् । यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, ततः संनिहितोपासनादिक्रियापरत्वं वेदान्तानाम् । एवं हि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्यं च प्रयोजनवत्त्वं च सिध्यतीति तात्पर्यार्थः । पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदार्ढ्याय । आनर्थक्यं चाप्रयोजनवत्त्वं, सापेक्षतया प्रमानुत्पादकत्वं चानुवादकत्वादिति । अतः इत्यादि वाऽन्तं ग्रहणकवाक्यम् । अस्य विभागभाष्यं नहि इत्यादि उपपन्ना वा इत्यन्तम् । स्यादेतत्—अक्रियार्थत्वेऽपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति, तथा च 'विधिना त्वेकवाक्यत्वात्' इति राद्धान्तसूत्रमनुग्रहीष्यते । न खल्वप्रवृत्तप्रवर्तनमेव विधिः, उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात्, वेदान्तानां चाज्ञातं ब्रह्म ज्ञापयतां तथाभावादित्यत आह—नच परिनिष्ठित इति । अनागतोत्पाद्यभावविषय एव हि सर्वो विधिरुपेयः; अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्पराविनाभावात् सिद्धे च तेषामसंभवात् । तद्वाक्यानां त्वैदंपर्यं विद्यते । यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिलम्भात् 'अग्निहोत्रं जुहोति' इत्युत्पत्तिमात्रपरं वाक्यम्, नत्वत्र विनियोगादयो न सन्ति, सन्तोऽप्यन्यतो लब्धत्वात्केवलमविवक्षिताः । तस्मात् भावनाविषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति[1] ।

अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां विधीनां परस्परमविनाभाव उक्तो भामत्याम् ।

तस्यायं भावः—अधिकारविधितः प्रवृतितलाभादुत्पत्तिविधिरज्ञातकर्मस्वरूपबोधपर इत्यर्थः । अनागतेति । भावो भावना, तद्विषयः सर्वो विधिः । यतः स उत्पाद्यः, उत्पाद्यत्वे हेतुरनागतत्वम् । अधिकारः फलसंबन्धबोधनम् । विनियोगोऽत्र क्रियायाः फलशेषत्वज्ञापनम् । प्रयोगः अनुष्ठापनम् । कर्मस्वरूपज्ञानमुत्पत्तिः । फलसंबन्धः क्रियाया न शेषत्वमन्तरेण, तच्च नानुष्ठानं विना, अनुष्ठानं च नाज्ञाते इत्यविनाभावः । सिद्ध चेत्यपुंव्यापारानपेक्षं फलमारभेत, सदारमेतेति नाधिकारादिसंभव इत्यर्थः ।

**उत्तरपक्षः**–अत्रोच्यते तत् ब्रह्मणः शास्त्रयोनित्वं समन्वयात् सिध्यति । सम्यगन्वयः

---

१. भामती पृ. १००-१०१ ।

समन्वयः। अन्वये सम्यक्त्वं तात्पर्यम्। एवञ्च सर्वाणि वेदान्तवाक्यानि तात्पर्येण अद्वितीयादि लक्षणे ब्रह्मणि समनुगतानि। तथा च भाष्यम्—"तद्ब्रह्मसर्वज्ञं सर्वशक्तिजगदुत्पत्तिलयकारणं वेदान्तशास्त्रादेवावगम्यते, कथं समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येण एतस्यार्थ प्रतिपादकत्वेन समनुगतानि"[१]।

कानि पुनः वेदान्तवाक्यानि तात्पर्येण सिद्धं ब्रह्मप्रतिपादयन्ति। 'सदेव सोम्येदमग्र आसीद्' 'एकमेवाद्वितीयम्'[२], 'आत्मा वां इदमेक एवाग्र आसीद्'[३] 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमवाह्यम्' 'आयमात्मा ब्रह्म सर्वानुभूः'[४] ब्रह्मैवेदममृतं पुरस्तात् इत्यादीनि।

कथं ज्ञायते एषां वाक्यानां ब्रह्मणि तात्पर्यमितिचेन्न तेषां षड्विधतात्पर्यलिङ्गोपेतत्वात्। लिङ्गानि च—

**उपक्रमोपसंहाराभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।**

तथाहि—"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी"त्युपक्रमोपसंहारयोरैकरूप्येण प्रत्यगात्माद्वितीयरूपं ब्रह्मावगम्यते। तथा—'एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'ति नवकृत्वोऽभ्यस्यते। प्रमाणान्तरेण चानधिगतमद्वितीयं ब्रह्मात्मत्वं प्रतिपाद्यते। "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च निरतिशयपुरुषार्थावाप्तिब्रह्मविज्ञानफलमवगम्यते। "अनेन जीवेनात्मनाऽनुप्रविश्य" "येनाश्रुतं श्रुतमि"त्यादिब्रह्मण्यर्थवादश्चोपादीयते। मृल्लोहतप्तपरशु-ग्रहणादिदृष्टान्तैः स्वपितिनामनिर्वचनेन च सृष्टि-स्थिति-संहारैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति।

---

१. भाष्य १०२।
२. छा.६/२/१।
३. ऐत-२/१/१।
४. बृ. २/५/१९।

तथा तैत्तिरीयके—"सत्यं ज्ञानमनन्तं ब्रह्म" "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्युपक्रमोपसंहारयोः प्रत्यगद्वितीयं ब्रह्मावगम्यते। तथा 'सच्च त्यच्चाभवद् यदिदं किंच तदात्मानं स्वयमकुरुत यतो वाचो निवर्तन्ते" इति च प्रत्यगद्वितीयं ब्रह्माभ्यस्यते। प्रमाणान्तरेणानधिगतं च प्रतिपाद्यते। "स सर्वान् कामान् समश्नुते" इत्यादि च फलं ब्रह्मविज्ञानेऽवगम्यते। सृष्टिश्रुतयश्चाद्वितीयब्रह्मप्रतिपत्त्यर्थवादभूता दृश्यन्ते। तथा कोशपञ्चकोपन्यासेन प्राणनादिव्यापारलिङ्गैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति। एवं सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्वप्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि। एवं तात्पर्येण समन्वयाद् ब्रह्मैव वेदान्तप्रमेयमिति।

पञ्चपादिकायां "केयं सम्यक्ताऽन्वयस्य? पदानां परम्परानवच्छिन्नार्थानाम् अनन्याकांक्षाणाम्। अव्यतिरिक्तकैरसप्रातिपदिकार्थमात्रान्वयः"[१]।

अस्य व्याख्यानं विवरणकारैः कृतम्। तथाहि—सम्यगन्वय इत्यादिना सूत्रभागं व्याचष्टे। पदानामन्वय इति सम्बन्धः। तत्र क्रिया-कारकसंसर्ग विषयतया पदानामन्वयं व्यावर्तयति—परस्परानवच्छिन्नार्थानामिति। तत्रोद्भिदादिशब्दस्य यजति सामानाधिकरण्येनोद्भिद्यागमात्रवर्तिनोरुद्भिद्यागशब्दयोरनवच्छिन्नार्थत्वेऽपि नियोगकाङ्क्षा विद्यते, तथेहापि स्यादिति, नेत्याह—अनन्याकाङ्क्षाणामिति। एवं शब्दानां क्रियावाक्येभ्यो वैलक्षण्यमुक्त्वाऽर्थवैलक्षण्यं दर्शयितुं तत्र क्रिया-कारक-संसर्गेभ्यो वैलक्षण्यमाह—अव्यतिरिक्तेति। ननु नीलोत्पलवद् भेदाभेदविषयतयाऽप्यभिधेयाव्यतिरेक इति, नेत्याह—एकरसेति। तत्रोद्भिद्यागशब्दयोर्यागविशेषैकरसार्थवर्तिनोरप्यर्थस्य नियोगाकाङ्क्षावदिहाप्यन्याकाङ्क्षेति, नेत्याह—प्रातिपदिकार्थेति। तत्रापि लिङ्गसंख्ययोरवश्याभ्युपगमनीयतेति, नेत्याह—मात्रान्वय इति। जगत्कारणसामान्यानुवादेन तत्र ज्ञानानन्दशब्दावानन्दविशेषं गमयतः। एक-सत्यानन्तशब्दा भेदमिथ्यात्वद्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते। "सर्वज्ञः

---

१. पञ्चपादिका पृ. ९९८।

सर्वशक्तिरि'त्यादिशब्दाश्चानिर्वचनीयप्रपञ्चोपाधितया तत्र वर्तन्ते । "अयमात्मा तत्त्वमसी''त्यादिशब्दाश्च मुख्यलक्षणाभ्यां ब्रह्मण्येव वर्तन्त इति । सर्वे जगत्कारणविषया: शब्दा मुख्यलक्षणोपाधिभिरेकरसमेव ब्रह्म प्रतिपादयन्ति । नचानिर्वचनीयभेदाभावयो: शब्दप्रवृत्तनिमित्तयो: परमार्थसत्यैकरसभेदनिमित्ततेति[१] ।

**वेदान्तवाक्यानामेकरसाखण्डब्रह्मप्रतिपादकत्वम्–**

अनेकेषां पदानां लक्षणया अखण्डैकरस वस्तुवृत्तितायामुदाहरणं सोऽयं मित्यादिवाक्यम् प्रकृष्टप्रकाशश्चन्द्र इत्यादि वाक्यं लौकिकमुदाहरणम् । तत्र तत्त्वमसीत्यादि वाक्येन अनेकपदसमुदायात्मकेनाखण्डार्थबोधे सोऽयमित्यादिवाक्यमुदाहरणम् । सत्यं ज्ञानमित्यादि लक्षणवाक्येनाखण्डार्थबोधे प्रकृष्टप्रकाशश्चन्द्र इत्युदाहरणम् ।

द्विविधा हि वाक्यप्रवृत्तिरेका ब्रह्मात्मनो रेंकत्वविषया, द्वितीया च सत्यज्ञानादिलक्षणब्रह्मविषया ।

**तत्त्वमसीति वाक्यार्थबोध:–**

तत्र सोऽयं देवदत्त इति पदत्रयस्य एकस्मिन् प्रातिपदिकार्थमात्रे देवदत्ते तत्तेन्दतापरित्यागरूपभागलक्षणया पर्यवसानम् । तथाहि—प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति—'सोऽयं देवदत्त:' इति । तत्र न तद्देशकालयोरेतद्देशकालयोश्च परस्परैक्यं प्रत्यभिजानाति; भेदप्रत्ययात् । अत एव विशिष्टयोरप्यैक्यं न प्रत्यभिज्ञायते, किन्तु सोऽयमिति विशिष्टद्वयोपलक्षित: प्रत्यभिज्ञागोचर: । प्रत्यभिज्ञातं परस्मै 'सोऽयमि'ति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति । ननु 'सोऽयमि'ति पदार्थयोर्यदैक्यम्, तदेव वाक्येनापि प्रतिपाद्यते चेत्, अनुवादप्रसङ्ग: । नच देवदत्तस्यैक्यद्वयमस्ति, येन वाक्यप्रमेयमपरमैक्यं स्यात्, प्रत्यभिज्ञायां तर्हि कथम्? न ह्यभिज्ञयोरवगतदेवदत्तैक्यमस्ति । एकस्य कालद्वयसंबन्ध: प्रत्यभिज्ञागोचर

१. पञ्चपादिकाविवरण पृ.-९९८-१००० ।

इति चेत्, कालद्वयसंबन्धिपदार्थाभिज्ञयोरेव सिद्धे परिशेषात्तदैक्यं प्रत्यभिज्ञाविषयः। तत्र चानुवादो दर्शितः।

स्यादेतत्—क्षणिकत्वपरिहाराय तत्रत्यभिज्ञाप्रामाण्यं तावद् वक्तव्यम् तत्र कालक्ष्यपरामर्शेन तत्संबन्धिपदार्थैक्ये प्रत्यभिज्ञाविषयेऽपि पदार्थभेदप्रतिभासविरोधितैव प्रमाणफलम्, नाज्ञातार्थाधिगतिः। अतः कालक्ष्यपरामर्शेन तत्संबन्धिपदार्थैक्यमेवावलम्बमाना पदार्थभेदप्रतिभासविरोधितया प्रामाण्यमश्नुते प्रत्यभिज्ञा। एवं तर्हि 'सोऽयमि'ति वाक्यस्याप्येवमेव प्रामाण्यं भविष्यति। तथा तत्त्वमसिवाक्यस्यापि त्वंपदार्थैकदेशपरित्यागेन त्वंपदेन लक्ष्यमाणद्रष्टृस्वरूपस्य पारोक्ष्यपरित्यागेन तत्पदाभिधेयब्रह्मस्वरूपैक्ये वाक्यजन्य-ज्ञानगोचरेऽपि जीव-ब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतयाऽनुवादप्राप्तावपि भेदप्रतिभास-विरोधितया प्रामाण्यमुपपद्यत इति।

ननु पदार्थयोः प्रत्येकमसाधारणमैक्यं पदार्थप्रत्ययगोचरः, पदार्थयोरितरेतरैक्यं वाक्यगम्यम्, इत्यस्त्येव प्रमेयभेदः, नैतत् सारम्; भिन्नव्ययोरैक्यप्रतिपादने तथा स्यात्। यदैकमेव द्रव्यं भिन्नोपाधिपरिकल्पित भेदप्रतिभासव्युदासेन प्रतिपाद्यते, तदा निवर्त्यविशेषादेव प्रामाण्यम्, न प्रमेयविशेषात्। तदुक्तम्—"सिद्धं तु निवर्तकत्वादि"ति। इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्यं 'सोऽयमि'तिवदेकस्य द्रव्यस्योपाधिपरिकल्पितभेदव्युदासेनैकद्रव्यपर्यवसायीत्यवगम्यते। ननु तत्त्वंपदाभ्यां लक्ष्यमाणपदार्थयोरपि भेदो विद्यते? न वा? विद्यते चेत्, ऐक्यप्रमितिर्न स्यात्। न चेद् भेदः, वाक्यार्थ एव पदार्थः स्यात्, सत्यम्, वाक्यार्थ एव पदार्थः। स च लक्षणया प्रतिपाद्यते; मुख्याभिधेयैक्यायोगात्। तस्मात् तत्त्वंपदाभ्यामेकमेव ब्रह्मोपाधिपरामर्शेन प्रतिपाद्यत इति सिद्धम्[१]।

एवं प्रकृष्टप्रकाशश्चन्द्र इति वाक्यमपि लक्षणया चन्द्रस्वरूपमात्रे पर्यवसन्नम्।

---

१. पञ्चपादिकाविवरण पृ.-१००८-१०१०।

तथाहि—प्रकाशशब्दः सामान्याभिधानमुखेन व्यक्तिविशेषे वर्तते। प्रकृष्टशब्दश्च लक्षणया प्रकर्षगुणाभिधानमुखेन प्रकाशविशेषे वर्तते। तत्र गुणसामान्ययोश्चन्द्रपदाभिधेयत्वाभावाज्जहल्लक्षणया तदुभयं निरस्य तत् समवायिप्रकाशविशेष एव चन्द्र पदाभिधेयतया सर्मप्यते इति प्रकृष्टप्रकाशचन्द्रशब्दानामेकार्थ वृत्तितासिद्धा। एवमेव सत्यादिवाक्यमपि लक्ष्येऽखण्डे ब्रह्मणि अनृतजडदुःखान्तवत्त्वानात्मत्वभ्रान्तिनिवृत्तिद्वारा लक्षणया पर्यवस्यन्ति। उक्तञ्च सुरेश्वराचार्यै—

**प्रतिपद्यपदार्थं हि विरोधात् तद्विरोधिनः।**
**पश्चाद्दभावं जानाति वध्यघातवत्पदात्।**
**शब्दात् प्रतीयते तावत् संगतिर्धर्मधर्मिणोः।**
**मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः।**
**तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्।**
**स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम्।**
**तद्विरोध्यर्थ संत्यागः सामर्थ्यात् स्यान्न शब्दतः॥**

इति। एवञ्च वेदान्तानामखण्डार्थे लक्षणया तात्पर्येण समन्वय उक्तः।

एवञ्च शास्त्रपरकत्वं सिद्धम्।

**वेदान्तानां सिद्धार्थबोधकत्वेऽपि प्रामाण्यम्–**

ननु वेदान्तानां तात्पर्येण सिद्धवस्तु परकत्वे मानान्तरसापेक्षत्वात् अनुवादत्वेन अप्रामाण्यप्रसङ्गः स्यात्। वेदान्ता मानान्तरसापेक्षा सिद्धवस्तुपरत्वात् पुरुषवाक्यवत्। तथाच वेदान्ता अप्रमाणभूताः मानान्तरसापेक्षत्वाद् अनुवादवाक्यवदिति न्यायेनः अप्रामाण्यं स्यादिति चेत् अत्रोच्यते भामत्यां—अयमभिसंधिः—पुवाक्यनिदर्शनेन हि भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते। तत्रैवं भवान् पृष्टो व्याचष्टाम्, किं पुवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन। यदि भूतार्थत्वेन ततः प्रत्यक्षादीनामपि परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः। तान्यपि हि भूतार्थान्येव। अथ पुरुषबुद्धिप्रभवतया पुवाक्यं सापेक्षं, एवं तर्हि तदपूर्वकाणां

वेदान्तानां भूतार्थानामपि नाप्रामाण्यं, प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मनाम्। यद्युच्येत सिद्धे किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिध्येत्, तदेव तु भूतार्थत्वेन न सिध्यति; भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्बुद्धिपूर्वं विरचनोपपत्तेः, वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानुमानस्याप्रत्यूहमुत्पत्तेः। तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारं, नतु भूतार्थत्वेन। कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरागोचरतयात्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्व सिद्ध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे। अत्र ब्रूमः—किं पुनरिदं कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम्। अपूर्वमिति चेत्, हन्त कुतस्त्यमस्य लिङ्गाद्यर्थत्वं; तेनालौकिकेन संगतिसंवेदनविरहात्, लोकानुसारतः क्रियाया एव लौकिक्याः कार्याया लिङ्गादेरवगमात्। 'स्वर्गकामो यजेत' इति साध्यस्वर्गविशिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत्स्वर्गानुकूलम्। नच क्रिया क्षणभङ्गुरामुष्मिकाय स्वर्गाय कल्पत इति परिशेष्याद्वेदत एवापूर्वे कार्ये लिङ्गादीनां संबन्धग्रह इति चेत्, हन्त चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसंबन्धादपूर्वकार्यत्वप्रसङ्गः। तथा च तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः। स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात्। अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थत्वेनात्र तदुपपादकेन। उपपादितं चापौरुषेयत्वमस्माभिर्न्यायकणिकायां, इह तु विस्तरभयान्नोक्तम्। तेन पौरुषेयत्वेऽसिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यभिघातः। नचानधिगतगन्तृता नास्ति, येन प्रामाण्यं न स्यात्; जीवस्य ब्रह्मताया अन्यतोऽनधिगमात्[१]।

न च प्रवृत्तिनिवृत्तिकरत्वाभावात् वेदान्तानामपुरुषार्थत्वं शङ्क्यम्। हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः।

---

१. भामती-पृ.-१०५-१०६।

अयं भावः—कार्यप्रतिपादकवाक्यानां विध्यर्थावगमात् पारंपर्येण पुरुषार्थरूपस्वर्गादि प्राप्तिः। तत्त्वमस्यादि सिद्धपर वाक्यानां तु अन्यप्रमाणानवगतस्य शास्त्रैक प्रमाणगम्यस्य ब्रह्मात्मभावस्यावगतिपर्यन्तार्थविज्ञानात् वाह्यार्थानुष्ठानायासमन्तरेणैक साक्षादेव परमपुरुषार्थ प्रतिलम्भ इति विध्यर्थज्ञानात् प्रकर्षः। तदुक्तं भामत्याम्—

"एतदुक्तं भवति—द्विविधं हीप्सितं पुरुषस्य। किंचिदप्राप्तं ग्रामादि, किंचित्पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं, यथा स्वग्रीवावनद्धं ग्रैवेयकम्। एवं जिहासितमपि द्विविधं, किंचिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किंचित्पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम्। तत्राप्राप्तप्राप्तौ चात्यक्तत्यागे च बाह्योपायानुष्ठान-साध्यत्वात् तदुपायतत्त्वज्ञानादस्ति पराचीनानुष्ठानापेक्षा। न जातु ज्ञानमात्रं वस्त्वपनयति। नहि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते, समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठानानपेक्षेण शक्येते प्राप्तुमिव हातुमिव। समारोपमात्रजीविते हि ते, समारोपितं च तत्त्वसाक्षात्कारः समूलघातमुपहन्तीति। तथेहाप्यविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः शोकदुःखादिरहिते समारोपितनिबन्धनस्तद्भावः 'तत्त्वमसि' इति वाक्यार्थतत्त्वज्ञानवगतिपर्यन्तानिवर्तते। तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति, त्यक्तमपि शोकदुःखाद्यत्यक्तमिव त्यक्तं भवति, तदिदमुक्तम्—ब्रह्मात्मावगमादेव जीवस्य सर्वक्लेशस्य समवासनस्य विपर्यासस्य। स हि क्लिश्नाति जन्तूनतः क्लेशः, तस्य प्रकर्षेण हानात् पुरुषार्थस्य दुःखनिवृत्तिसुखाप्तिलक्षणस्य सिद्धेरिति।"[१]

ननु तत्त्वमस्यादिवाक्यानां स्वरूपचैतन्यमात्रपरत्वं लक्षणयैव, न तु शक्त्येति खलु भवतां मतम्। तत्र च श्रुतहान्यश्रुतकल्पना प्रसज्यते। कार्यविधिशेषत्वे तु वाच्यार्थकल्पनयैव निर्वाहात्र श्रुतहान्यश्रुतकल्पने इति चेत्, केयं श्रुतहान्यश्रुतकल्पना नाम ? प्रतीयमानार्थ-परित्यागेनार्थान्तरकल्पनमिति चेत्, वेदान्तार्थवादत्वपक्षेऽपि समानमेतत्। तत्रापि हि

१. भामती-पृ.-१०७।

प्राशस्त्यलक्षणैव विवक्षिता । ननु तात्पर्यविषयत्वात् प्राशस्त्यस्य न लक्षणा दोषः, किन्तु गुण इति चेत्, आयातं मार्गेण; यतस्तात्पर्यविषयार्थबोधकत्त्वे न श्रुतहानिर्न वाऽश्रुतकल्पना, तात्पर्यविषयाबोधन एव श्रुतहानिरश्रुतकल्पना च दोष इति स्वीकारात् । किमतः ? इदमतो भवति, यद् अद्वितीयस्वरूपचैतन्य एव वेदान्तानां तात्पर्यस्यावगमाद् अन्यत्र चातात्पर्यावगमात् पूर्वपक्षिणामेव मते श्रुतिहानिरश्रुतकल्पना च, नास्माकं मते, इति श्रुतहान्यादिवारणं कामयतां सर्वेषामस्मन्मतादरणमेव युक्तम् ।

**देवतादिप्रतिपादनपरत्वनिरासः-**

ननु आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीतेत्यादि वाक्यानामुपासनाप्रतिपादकानां स्ववाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं स्यादिति चेत् ।

अत्रोच्यते तादृशवाक्यानां स्ववाक्यगतदेवतोपासनापरत्वेऽपि न ब्रह्मात्मताप्रतिपादकत्वेन विरोधः ।

अयं भावः—उपर्युक्तवाक्ये देवता सगुणं ब्रह्म आत्मा । आत्मानमेव लोकं चैतन्यम् । तत्रैवं सति सगुणब्रह्मरूपदेवतोपासनापरत्वेऽपि शुद्धबुद्धब्रह्मताप्रतिपादनेन विरोधः । न हि एतावता अद्वैततात्पर्यविघातः । षड्विधलिङ्गोपेताद्वैतश्रुतिभिः ब्रह्मात्मताप्रतिपादेन तेषां वाक्यानां मुख्यं तात्पर्यम् । तत्र तेषामारोपितभेदगर्भोपासना परत्वे मुख्यतात्पर्यस्य न विघातः । सगुणोपासनाऽपि चित्तशुद्धिद्वारेण अद्वैत विज्ञाने श्रौत उपयोक्ष्यत एवेति । शुद्धबुद्धमुक्तस्वरूपं ब्रह्मतु नोपासनाविधेः शेषः । एकत्वे हेयोपादेय शून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दात् उपास्योपासकभेदापजीव्योपासनायाः असम्भवात् । अर्थवादवाक्यानां विधि निषेध स्तुतिनिन्दापराणां तु विधिनैव स्तुतिनिन्दाद्वारा प्रवृत्तिनिवृत्तिपराणामन्वयः इति न तेषां विधिसंस्पर्शमन्तरेण प्रामाण्यम् । नहि अर्थवादवाक्यानां स्वार्थावगतिमात्रेण कस्यचिद् पुरुषार्थस्य सिद्धिः । पुरुषार्थाभावाच्च वैयर्थ्यमापतेत् । न च व्यर्थमेव तत् मन्तव्यम्, स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना गृहीतत्वात् पुरुषार्थतन्त्रत्वात् ।

वेदान्तवाक्यानां तु स्वार्थावगमादेव सर्वक्लेश प्रहाणाद् पुरुषार्थसिद्धेः।

तथा च वेदान्तवाक्यं विधिसंस्पर्शे नैव प्रमाणम् सप्रयोजनमध्ययनविधिगृहीत्वात् अर्थवादवाक्यवदिति प्रयोगे साक्षात् पुरुषार्थप्रतिपादकत्वमुपाधिः।

वेदान्तवाक्यं विधिसंस्पर्शमन्तरेणापि प्रमाणं पुरषार्थप्रतिपादकत्वात्।

**प्रतिपत्तिविधिशेषतया ब्रह्मबोधकत्वनिरासः-**

अत्रापरे प्रत्यवतिष्ठन्ते यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिशेषतयैवशास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि सिद्धानि विधिशेषतया शास्त्रेणैव समर्प्यन्ते तद्वद्। अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म; तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते, तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य। तथाहि शास्त्रतात्पर्यविद आहुः—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति। 'चोदनेति क्रियायाः प्रवर्तकं वचनम्'। 'तस्य ज्ञानमुपदेशः-'[१] 'तद्भूतानां क्रियार्थेन समाम्नायः-'[२] 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्-'[३] इति च। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते, एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्। नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्, कर्मकाण्डे भव्यो जिज्ञास्य इह तु भूतं नित्यनिवृत्तं ब्रह्म जिज्ञास्यमिति; तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम्; कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। 'आत्मा वा अरे द्रष्टव्यः'[४] इति। 'य

---

१. जै.सू. १/१/५।

२. जै.सू. १/१/२५।

३. जै.सू. १/२/१।

४. बृह. २/४/५।

आत्माऽपहतपाप्मासोऽन्वेष्टव्यः स विजिज्ञासितव्यः'[१] 'आत्मेत्येवोपासीत'[२] 'आत्मानमेव लोकमुपासीत'[३] 'ब्रह्म वेद ब्रह्मैव भवति'[४] । इत्यादिविधानेषु सत्सु-कोऽसावात्मा किं तद्ब्रह्म इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति । कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासंभवात् सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिवाक्यवद्वेदान्तवाक्यानामार्थक्यमेव स्यात् । ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात् । स्यादेतदेवं, यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रानितर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, नतु निवर्तते; श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[५] इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात् । तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति[६] ।

अत्र आचार्यदेशीयानां मतमुपस्थाप्यते तेषां वृत्तिकाराणामयमाशयः शास्त्रप्रमाणकत्वं ब्रह्मणोऽस्तु, किन्तु सिद्धार्थेषु पदानां संगतिग्रहासम्भवात् कार्ये एव संगतिगहसम्भवात् कार्यपराणामेव शब्दानां लोके वेदे च प्रामाण्यम् अतः उपासनारूपकार्यविधिशेषतयैव ब्रह्मसमर्प्यते आत्मानमेव लोकमुपासीत्यादि वाक्ये । न चोपासनाविधि शेषतया ब्रह्मावबोधने ब्रह्मोपासनमेव मोक्षप्रयोजनं स्यात् नतु विर्विशेषब्रह्मस्वरूपावबोधः इति वाच्यम् । इष्टापत्तेः अत एव निर्विशेषचैन्यमात्रबोधकं वेदान्तवाक्यमपि उपास्यविशेषसमर्पणविधया उपासना

१. छान्दो. ८/७/१ ।
२. बृ.१/४/७ ।
३. बृ.१/४/१५ ।
४. मुण्ड ३/२/९ ।
५. बृह.२/४/५ ।
६. भाष्य पृ.-१०८-११३ ।

विधिप्रसण्येवेति । एतन्मते जीवब्रह्मणोरैक्यमेव तथापि न तज्ज्ञानमात्रेण मुक्तिः किन्तु ब्रह्मेत्यासनयैव । भाष्यकारमते च निर्विशेषब्रह्मात्मताज्ञानादेव मोक्ष इति विशेषो बोध्यः । अत एवाचार्यदेशीयत्वमुच्यते एतन्मतसमर्थकस्य ।

अत एवोक्तम्—

**अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया ।**
**मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चयः ।**

तथा च यत्रोपासनाविधि र्न दृश्यते तत्रापि तत्कल्पनं कर्त्तव्यमिति हृदयम् । एतन्मते जीवब्रह्मणोरभेद इव भेदोऽपि वर्तते भेदाभेदस्वीकारात् । न ज्ञानमात्राद् क्रियाकारकादिनिवृत्तिः इति वेदान्तविज्ञातस्यापि निर्गुणस्य ब्रह्मण उपास्यत्वं न विरुद्धम् । यत्र च सगुणब्रह्मोपासना विहित तत्र तु सगुणं ब्रह्म शास्त्रेण उपास्यतया समर्प्यते इति । भामत्याञ्चोक्तपूर्वपक्षभाष्यस्य वृत्तिकारमत प्रतिपादकस्याशयो वर्णितः ।

"न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति; तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते, तत्र न तेषां संगतिग्रहः । नचाहेयमनुपादेय रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान्; तस्याबुभुत्सितत्वात्, अबुभुत्सितावबोधने च प्रेक्षावत्ताविघातात् । तस्मात् प्रतिपित्सितं प्रतिपिपादयिपन्नयं लोकः प्रवृत्तिनिवृत्तिहेतुभूतमेवार्थं प्रतिपादयेत् । कार्यं चावगतं तद्धेतुरिति तदेव बोधयेत् । एवंच बृद्धव्यवहारप्रयोगात् पदानां कार्यपरतामवगच्छति । तत्र किंचित्साक्षात्कार्याभिधायकं, किंचित्तु कार्यार्थस्वार्थाभिधायकं, किंचित्तु कार्यार्थस्वार्थाभिधायकं; नतु भूतार्थपरतया पदानाम् । अपि च नरान्तरस्य व्युत्पन्नस्यार्थप्रत्ययमनुमाय तस्य च शब्दभावाभावानुविधानमवगम्य शब्दस्य तद्विषयबोधकत्वं निश्चेतव्यम् । नच भूतार्थरूपमात्रप्रत्यये परनरवर्तिनि किंचिल्लिङ्गमस्ति, कार्यप्रत्यये तु नरान्तरवर्तिनि प्रवृत्तिनिवृत्ती स्तो हेतू इत्यज्ञातसंगतित्वान्न ब्रह्मरूपपरा वेदान्ताः । अपिच वेदान्तानां वेदत्वाच्छास्त्रत्वप्रसिद्धिरस्ति । प्रवृत्तिनिवृत्तिपराणां च संदर्भाणां शास्त्रत्वम् । यथाहुः—'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन

वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ।' इति तस्माच्छास्त्रत्वप्रसिद्ध्या व्याहतमेषां स्वरूपपरत्वम् । अपिच न ब्रह्मरूपप्रतिपादनपराणामेषामर्थवत्त्वं पश्यामः । नच रज्जुरियं न भुजङ्ग इति यथाकथंचिल्लक्षणया वाक्यार्थतत्त्वनिश्चये यथा भयकम्पादिनिवृत्तिः, एवं 'तत्त्वमसि' इति वाक्यार्थावगमान्निवृत्तिर्भवति सांसारिकाणां धर्माणाम्; श्रुतवाक्यार्थस्यापि पुंसस्तेषां तावदस्थ्यात् । अपि च यदि श्रुतब्रह्मणो भवति सांसारिकधर्मनिवृत्तिः, कस्मात् पुनः श्रवणस्योपरि मननादयः श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसङ्गादपि न ब्रह्मस्वरूपपरा वेदान्ताः, किंत्वात्मप्रतिपत्तिविषयकार्यपराः । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतयाऽपूर्वमिति चाख्यायते । नच विषयानुष्ठानं विना तत्सिद्धिरिति स्वसिद्ध्यर्थं तदेव कार्यं स्वविषयस्य कारणसयात्मज्ञानस्यानुष्ठानमाक्षिपति । यथा च कार्यं स्वविषयाधीननिरूपणमिति ज्ञानेन विषयेण निरूप्यते, एवं ज्ञानमपि स्वविषयमात्मानमन्तरेणाशक्यनिरूपणमिति तन्निरूपणाय तादृशमात्मानमाक्षिपति, तदेव कार्यम् । यथाहुः—'यत्तु तत्सिद्ध्यर्थमुपादीयते आक्षिप्यते तदपि विधेयमिति तत्रे व्यवहारः' इति । विधेयता च नियोगविषयस्य ज्ञानस्य भावार्थतयानुष्ठेयता, तद्विषयस्य त्वात्मनः स्वरूपसत्ताविनिश्चितिः । आरोपिततद्भावस्य त्वन्यस्य निरूपकत्वे तेन तन्निरूपितं न स्यात् । तस्मात्तादृगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्यस्तादृगात्मविनिश्चयः । तदेतत्सर्वमाह—यद्यपीति । विधिपरेभ्योऽपि वस्तुतत्त्वविनिश्चय इत्यत्र निदर्शनमुक्तं—यथा यूपेति । 'यूपे पशुं बध्नाति' इति बन्धनाय विनियुक्ते यूपे तस्यालौकिकत्वात्कोसौ यूप इत्यपेक्षिते 'खादिरो यूपो भवति यूपं तक्षति यूपमष्टाश्रीकरोति' इत्यादिभिर्वाक्यैस्तक्षणादिविधिपरैरपि संस्कारविष्टं विशिष्टसंस्थानं दारू यूप इति गम्यते । एवमाहवनीयादयोऽप्यवगन्तव्याः । प्रवृत्तिनिवृत्तिपरस्य शास्त्रत्वं न स्वरूपपरस्य, कार्यं एव च संबन्धो न स्वरूपे, इति हेतुद्वयं भाष्यवाक्येनोपपादितम्—प्रवृत्तिनिवृत्तिप्रयोजनत्वात् इत्यादिना तत्सामान्योद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् इत्यन्तेन । नच स्वतन्त्रं कार्यं नियोज्यमधिकारिणमनुष्ठातारमन्तरेणेति नियोज्यभेदमाह—सति च विधिपरत्व

इति । 'ब्रह्म वेद ब्रह्मैव भवति' इति सिद्धवदर्थवादादवगतस्यापि ब्रह्मभवनस्य नियोज्यविशेषाकाङ्क्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भः । पिण्डपितृयज्ञन्यायेन तु स्वर्गकामस्य नियोज्यस्य कल्पनायामर्थवादस्यासमवेतार्थतयात्यन्त-परोक्षावृत्तिः स्यादिति । ब्रह्मभावश्चामृतत्वमिति अमृतत्वकामस्य इत्युक्तम् । अमृतत्वं चामृतत्वं, न कृतकत्वेन शक्यमनित्यमनुमातुम्, आगमविरोधादिति भावः । उक्तेन धर्मब्रह्मज्ञानयोर्वैलक्षण्येन विध्यविषयत्वं चोदयति—नन्विति । परिहरति—नार्हत्येवमिति । अत्र चात्मदर्शनं न विधेयम् । तद्धि दृशेरुपलब्धिवचनत्वात् श्रावणं वा स्यात् प्रत्यक्षं वा । प्रत्यक्षमपि लौकिकमहं प्रत्ययो वा, भावनाप्रकर्षपर्यन्तजं वा । तत्र श्रावणं न विधेयं; स्वाध्यायविधिनैवास्या प्रापितत्वात्, कर्मश्रावणवत् । नापि लौकिकं प्रत्यक्षं तस्य नैसर्गिकत्वात् । नचौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयं, तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात् । तस्मादौपनिषदा-त्मोपासनामृतत्वकामं नियोज्यं प्रति विधीयते । 'दृष्टव्यः' इत्यादयस्तु विधिरूपा न विधय इति । तदिदमुक्तम्—तदुपासनाच्चेति । अर्थवत्तया मननादिप्रतीत्या चेत्यस्य शेषः प्रपञ्चो निगदव्याख्यातः ।"[१]

तत्र रात्रि सत्रन्यायेन प्रतिलम्भः पिण्डपितृयज्ञन्यायेन त्वित्यादिभामत्या अयमाशयः—चतुर्थे चिन्तितम्—"क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजनिः" । "प्रतितिष्ठन्ति ह वा एता रात्रीरुपयन्ति" इति श्रूयते । तत्र रात्रिशब्देन "आयुर्जुहोति" इत्यादिवाक्यविहिताः सोमयागविशेषा उच्यन्ते । किमत्र स्वर्ग एवाधिकारिविशेषणम्? उत प्रतिष्ठेति संशयः । तत्र प्रतिष्ठाकाम इति कामपदसंमभिव्याहारेणाश्रवणाद् विधिशक्तिलभ्यः स्वर्ग एवाधिकारिविशेषणम्, नच "प्रतितिष्ठन्ती"ति वाक्यशेषबलात् प्रतिष्ठैवाधिकारविशेषणं लभ्यत इति वाच्यम्; "सन्देहे हि वाक्यशेषस्वीकारः, न निश्चये"इत्यभ्युपगमात् । निश्चितश्चात्र सर्वाभिलषितस्वर्गोऽधिकारिविशेषणत्वेन; विधिसामर्थ्यात् । नचैवं "प्रतितिष्ठन्ती"ति

---

१. भामती पृ.-१०९-११३ ।

प्रतिष्ठाविषयश्रुतेर्व्याकोप इति वाच्यम्; तस्या अपि लक्षणया स्वर्गपरत्वकल्पनौचित्यात्। नच—रात्रिसत्रक्रतोः प्रधानत्वेनाङ्गत्वाभावात् सूत्रे कथं क्रतौ फलार्थवादमङ्गवदित्यङ्गफलार्थवादोदाहरणमिति—वाच्यम्; अङ्ग आर्थवादिकफलवदिहाप्यार्थवादिकं प्रतिष्ठाफलं न विवक्षितमित्येतावन्मात्र उदाहरणत्वान्न दोषः। एवं प्राप्ते अभिधीयते—"फलमात्रे यो निर्देशादश्रुतौ ह्यनुमानं स्यात्" "प्रतितिष्ठन्ती"ति प्रतिष्ठाफलस्य निर्देशात् प्रतिष्ठाफलमेवाधिकारिविशेषणम्, यत्तु—विधिशक्त्या स्वर्ग एवाधिकारिविशेषणमित्यनुमीयते—इति, तन्न; मुख्यार्थस्तुतिपदानुगुण्येन विधिशक्तौ पर्यवसितायामानुमानिकस्वर्गकल्पनायोगात्। तस्माद्वाक्यशेषस्थमेव प्रतिष्ठालक्षणं फलमित्येवंरूपेण रात्रिसत्रन्यायेन प्रकृतेऽपि "ब्रह्मविदाप्नोति परम्" इत्यार्थवादिकं ब्रह्मभवनलक्षणममृतत्वं फलमित्यमृतत्वकामस्य नियोज्यस्य सिद्धिः। ननु—पिण्डपितृयज्ञन्यायेन स्वर्गकामस्येव नियोज्यस्यात्र कल्पनया प्रतिलम्भो भवत्वित्यत आह—पिण्डपितृयज्ञान्यायेन त्विति। यद्यपि विश्वजिन्नायेनापि स्वर्गकामस्य स्वर्गकामस्य नियोज्यस्य कल्पयितुं शक्यत्वाद् विश्वजिन्यायेनेत्येव वक्तुं युक्तम्, न पिण्डपितृयज्ञन्यायेनेति; तथापि विश्वजिति नैमित्तिकाधिकारे फलकल्पना कृत्वाचिन्तयेति पिण्डपितृयज्ञः स्थिरोदाहरणत्वेनोदाहृत इति द्रष्टव्यम्। अर्थवादस्यासमवेतार्थतयेति। 'ब्रह्म वेद ब्रह्मैव भवति' इत्यर्थवादस्याश्रूयमाणस्वर्गार्थकतया ब्रह्मभवनशब्देन श्रुतब्रह्मभावश्चामृतत्वमेवेत्यमृतत्वकामस्येत्युक्तं लक्षणायां वक्तव्यायामत्यनतपरोक्षवृत्तिता स्यादित्यर्थः। एवं च श्रुतब्रह्मभावश्चामृतत्वमेवेत्यमृतत्वकामस्येत्युक्तं भाष्यकृतेत्याह—इति ब्रह्मभावश्चेति। मोक्षोऽमृतत्वशब्दार्थः। तथाच पिण्डपितृयज्ञन्यायो नात्र प्रसरतीति भावः।

पिण्डपितृयज्ञन्यायश्चतुर्थे चिन्तितः—'पितृयज्ञः स्वकालत्वादनङ्गः स्यात्"। "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्यत्रानारभ्याधीतवाक्ये श्रुतः पिण्डपितृयज्ञः क्रत्वर्थः ? पुरुषार्थो वा ? इति संशये कर्मवाच्यामावास्याशब्दोऽपराह्णशब्दसमानाधिकृत इह कालपर एव। नच साधारण्यम्; काले रुढत्वात्, कर्मणि च तत्संबद्धे लाक्षणिकत्वात्।

तस्मात् कर्मसमभिव्याहाराभावात् विश्वजिन्न्यानेन स्वर्गकामनियोज्यकल्पनया स्वर्गफलपिण्ड-पितृयज्ञ इति । ब्रह्मभवनस्यामृतत्वमुक्तम् ।

तादृशपूर्वपक्ष अत्राभिधीयते—एकदेशिमतं न युज्यते । कर्मब्रह्मविद्याफलयो वैलक्षण्यात् । उपासनापि मानसी-क्रियैव । विहितोपासनापि पक्षमासादिकालपरिच्छिन्न सातिशयेति तत्फलमपि कालादिपरिमितं सातिशयञ्च स्यात् । अत एवानित्यं स्यात् । न च क्वचिद् कर्मफलं नित्यं दृष्टम् । तथा च श्रुति: "यद् यथेह कर्मचितालोक: क्षीयते एवमेवामुत्र पुण्यचितो लोक: क्षीयते" एवञ्च मोक्षोऽपि अनित्य: सातिशय: उपासनाकर्मजन्यत्वात् कृषियागादिकर्मजन्यफलवत् । पुण्यापुण्यकर्मफले सुखदु:खे मनुष्यलोकादारभ्य आब्रह्मलोकाद् तारतम्ययुक्तेऽनित्ये च दृष्टे । ब्रह्मज्ञानफलं तु निरतिशयं अशरीरत्वं नित्यमकार्यं मोक्षाख्यमस्ति । अत: यदि सिद्धब्रह्मप्रतिपादकवेदान्तानां कार्यपरकत्वस्यात् तर्हि तत् फलमपि तथैव स्यादिति तात्पर्यम् । ननु ब्रह्मज्ञानान्मोक्ष इति पक्षेऽपि ब्रह्मज्ञानजन्य एव मोक्षो मन्तव्य: इति तसनित्यत्वमापतेदेवा ज्ञानास्यापि अनित्यत्वात् तत् फलस्यापि अनित्यत्वमिति तुल्य एव दोष इति चेन्न । ज्ञानपक्षे मोक्षोनोत्पद्यतेऽपि तु विज्ञानाद् अविद्याऽपनय मात्रेणाविर्भवति । अत: मोक्षफलं फलमिवफलम् । एतदुक्तं भवति—त्वयाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मजा जीवस्य स्वाभाविकी वेदान्तगम्यास्थीयते । सा चोपासनाविषयस्य विधेर्न फलं; नित्यत्वादकार्यत्वात् । नाप्यनाद्यविद्यापिधानापनय:; तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदय:; तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात् । उपासनासंस्कार-वदुपासनाऽपूर्वमपि चेत:सहकारीति चेत्, दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा चित्राकारीर्यादिनियोगानामनियतनियतफलानाम् । न; गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षाया: षड्ज़ादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभाव-साक्षात्कारेऽनपेक्षाया एव सामर्थ्यात् । तथा चाऽमृतीभावं प्रत्यहेतुत्वादुपासनापूर्वस्य,

नामृतत्वकामस्तत्कार्यमवबोद्धुमर्हति। अन्यदिच्छत्यन्यत्करोतीति हि विप्राषिद्धम्। नच तत्कामः क्रियामेव कार्यमवगमिष्यति नापूर्वमिति—सांप्रतम्; तस्या मानान्तरादेव तत्साधनत्वप्रतीतेर्विधेर्वैयर्थ्यात्। नचावघातादिविधितुल्यता; तत्रापि नियमापूर्वस्यान्यतोऽनवगतेः। नच ब्रह्मभूयादन्यदमृतत्वमार्थवादिकं किंचिदस्ति, येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन तु स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः। तस्ताद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावात्, अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव संभवात्, उपासनायाः संस्कारहेतुभावस्य च साक्षात्कारोपजनने मनः साचिव्यस्य च मानान्तरसिद्धत्वात्, 'आत्मेत्येवोपासीत' इति न विधिः, अपितु विधिसरूपोऽयम्। यथोपांशुयाजवाक्ये 'विष्णुरुपांशु यष्टव्यः' इत्यादयो विधिसरूपा न विधय इति तात्पर्यार्थः[१]।

**परिणामिनित्यता कूटस्थनित्यताविमर्शः-**

अतः अनुष्ठेय कर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्। इदञ्च मोक्षाख्यं ब्रह्मविज्ञानविज्ञाप्यं अविद्यापनयमात्रेण इतरानुष्ठानानपेक्षं फलमिवफलं ब्रह्मरूपमेव ज्ञातत्वोपलक्षितं कूटस्थनित्यं न परिणामिनित्यम्। विक्रियमाणेऽपि यत्र तदेवदेमिति बुद्धिर्न विहन्यते तत् परिणामि नित्यम्। यथा पृथिव्यादि जगन्नित्यत्ववादिनां सांख्यानाम्।

अयं भावः—परिणामिनित्यता कूटस्थनित्यता चेति द्विविधा नित्यता। तत्र परिणामि नित्यता न पारमार्थिकी। भामती ग्रन्थे प्रथमं परिणामिनित्यतापक्ष उपपाद्य ग्रन्थकारेण खण्डितः। तथाहि—तत्सर्वात्मना वा परिणमेदेकदेशेन वा। सर्वात्मना परिणामे कथं न तत्त्वव्याहतिः। एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो वाऽभिन्नो वा। भिन्नश्चेत् कथं तस्य परिणामः; नह्यन्यस्मिन्परिणममानेऽन्यः परिणमतेऽतिप्रसङ्गात्। अभेदे वा कथं न सर्वात्मना परिणामः। भिन्नाभिन्नं तदिति चेत्, तथाहि; तदेव कारणात्मनाऽभिन्नं भिन्नं च

१. भामती-पृ.-११४-११५।

कार्यात्मना । कटकादय इवाभिन्ना हाटकात्मना । भिन्नाश्च कटाकाद्यात्मना । नच— भेदाभेदयोर्विरोधान्नैकत्र समवाय इति; युक्तम् विरुद्धमिति नः क्व संप्रत्ययो यत्प्रमाणविपर्ययेण वर्त्तते; यत्तु यथा प्रमाणेनावगम्यते तस्य तथा भाव एव । कुण्डलमिदं सुवर्णमिति समानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्त: । तथाह्यात्यन्तिकेऽभेदेऽन्यतरस्य द्विरवभासप्रसङ्गः । भेदे वात्यन्तिके न सामानाधिकरण्यं, गवाश्ववत् । आधाराधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं, नहि भवति कुण्डं बदरमिति । नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति । सोऽयमबाधितोऽसंदिग्ध: सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति । तथा च कार्याणां कारणात्मत्वात्, कारणस्य च सद्रूपस्य सर्वत्रानुगमात्, सद्रूपेणाभेद: जगतः, भेदः कार्यरूपेण गोधटादिनेति । यथाहु:—'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यत्मना भिदा ॥' इति । अत्रोच्यते—कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इति चेत्, किमयं कार्यकारणयो: कटकहाटकयोरस्ति न वा । न चेत्, एकत्वमेवास्ति, नच भेदः । अस्ति चेद्भेद एव नाभेदः । नच भावाभावयोरविरोधः, सहावस्थानासंभवात् । संभवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः, भेदस्याभेदाविरोधात् । अपिच कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन्; कटकस्य हाटकादभेदात् । तथाच हाटकमेव वस्तुसन्न कटाकादयः, भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदो न कटकत्वेन, तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते? नानुवर्तते चेत्कथं हाटकात्भिन्नं कटकः ? ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात्कुसुमभेदाः । नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति । सत्तानुवृत्त्या च सर्ववस्त्वनुगमे इदमिह नेदम्, इदमस्मान्नेदम्, इदमिदानीं नेदम्, इदमेवं नेदमिति विभागो न स्यात् । कस्यचित् क्वचित् कदाचित् कथंचिद्विवेकहेतोरभावात् । अपिच दूरात्कनकमित्यवगते न तस्य कुण्डलादयो विशेषा

जिज्ञास्येरन्; कनकादभेदात्तेषां, तस्य च ज्ञातत्वात्। अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते। नन्वभेदोऽप्यस्तीति किं न ज्ञाताः, प्रत्युत ज्ञानमेव तेषां युक्तं, कारणाभावे हि कार्याभाव औत्सर्गिकः, स च कारणसत्तयाऽपोद्यते। अस्ति चोभेदे कारणसत्तेति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्युः। तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते, यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करभात्। गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः, तस्मात्ते हेम्नो भिद्यन्ते। कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यम्? इति चेत्, नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम्। अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम्? न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते इत्युक्तम्। तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेद-कल्पनेति युक्तम्। विद्यमानतन्त्रत्वाद्भेदस्य, विद्यमानानां च प्रत्येकमेकत्वात्, एकाभावे चानाश्रयत्व भेदस्यायोगात्, एकस्य च भेदानधीनत्वात्, नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वात्, अभेदोपादानैवानिर्वचनीयभेदकल्पनेति सांप्रतम्। तथाच श्रुतिः—'मृत्तिकेत्येव सत्यम्' इति। तस्मात् कूटस्थनित्यतैव पारमार्थिकी न परिणामिनित्यतेति सिद्धम्[१]।

## मोक्षस्वरूपम्

एवञ्च ब्रह्ममोक्षाख्यं पारमार्थिकं कूटस्थं नित्यं व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयं ज्योतिःस्वभावम्। तच्च नोपासनाकर्मजन्यमनित्यत्वापत्तेः। न चोपासनया अविद्याया अपगमः सम्भवति अविरोधात्। किन्तु स्वविरोधिविद्योदयादेव। नहि प्रकाशतिरेकेण तमोनिवर्तते किन्तु प्रकाशोदयादेवेति। यदि कर्त्तव्यशेषत्वेन मोक्षोपदेशः स्यात्। इति तदा ध्रुवं तस्यानित्यत्वम्। नित्यश्च मोक्ष इति सर्ववादिभिरङ्गीकारात्।

१. भामती-पृ.-११७-११९।

किञ्च कर्त्तव्यशेषत्वेन यदि मोक्ष उपदिश्येत तर्हि अवश्यमेव अनुष्ठानान्तरापेक्षः स्यात्। मोक्षोपदेशश्रुतिषु तु ब्रह्मज्ञानतत्फलमोक्षयोर्मध्ये न किञ्चित् अनुष्ठानान्तरमुपदिश्यमानं दृश्यते । तथाहि भाष्ये—तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपिच 'ब्रह्म वेद ब्रह्मैव भवति'[१], 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'[२] । 'आनन्दं ब्रह्मणो विद्वान् । न विभेति कुतश्चन'[३] 'अभयं वै जनक प्राप्तोऽसि'[४] । 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्'[५] 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः'[६] इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च'[७] इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम् । यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि'[८] 'श्रुतं ह्येव मे भगवदृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु'[९] 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनात्कुमारः'[१०] इति चैवामाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथाचाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'[११] इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति[१२] । तस्मान्नित्यो ब्रह्माख्यो मोक्षः ब्रह्मसाक्षात्कारेण

---

१. मुण्ड.३/२/९ ।
२. मुण्ड.२/२/८ ।
३. तैत्ति.२/९ ।
४. बृह.४/२/४ ।
५. वाजसनेयिब्राह्मणोप. १/४/१० ।
६. ईशा.७ ।
७. बृह.१/४/१० ।
८. प्रश्न.६/८ ।
९. छान्दो. ७/१/३ ।
१०. छान्दो. ७/२६/२ ।
११. न्या.सू.१/१/२ ।
१२. भाष्य-पृ.-१२१-१२३ ।

अविद्यापनय द्वारा ज्ञाप्यो । तथा हि भाष्यम्—अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षस्तस्य मानसं, वाचिकं, कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादिविकार्यं उत्पाद्यं वा घटादि नित्यं दृष्टं लोके । नचाप्यत्वेनापि कार्यापेक्षा; स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं; सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः, आकाशस्येव । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावद्गुणाधानेन संभवति; अनाधेयातिशयब्रह्मस्वरूपत्वानमोक्षस्य । नापि दोषापनयनेन; नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथादर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेन्न, क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया, तमविकुर्वती नैवात्मानं लभते । यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत । अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्ठम् । तस्मान्न स्वाश्रया क्रियात्मनः संभवति अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते । ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः । न; देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलं, अहमरोग इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संक्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति ; 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'[१] इति मन्त्रवर्णात् । 'आत्मेन्द्रियमनोयुक्तं

१. मुण्ड.३/१/१ ।

श्लोकेत्याहुर्मनीषिण:'[१] इति च। तथाच 'एको देव: सर्वभूतेषु गूढ: सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्ष: सर्वभूताधिवास: साखीचेता केवलो निर्गुणश्च'[२] इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्'[३] इति चैतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयत:। ब्रह्मभावश्च मोक्ष:। तस्मान्न संस्कार्योऽपि मोक्ष:। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम्। तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह-नोपपद्यते[४]।

**ब्रह्मविज्ञानस्य सम्पदादिरूपत्वखण्डनम्–**

ननु एतत् ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपम्। यथा "अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति"[५] आरोप्यप्रधाना सम्पद् अनुचिन्तनं नाम तथा च 'ब्रह्मविज्ञानं सम्पद्रूपमनुचिन्तनमात्रं अध्यासरूपं वा अधिष्ठानप्रधानं यथा मनो ब्रह्मेत्युपासीत'[६] 'आदित्य ब्रह्मेत्यादेश:'[७] इति च मन आदिषु ब्रह्मदृष्टेरध्यास: तद्वद्। विशिष्टक्रियायोगनिमित्तं वास्यात्। वायुर्वा व संवर्ग: प्राणो वा व संवर्ग इति वद्। आज्यावेक्षणादिकर्मवत् कर्माङ्गसंस्काररूपमिति वा स्यात् न तु ब्रह्मरूपस्थितवस्तुविषयं येन न विधिगोचरो भवेदिति।

अयं भाव:—ननु अभियुक्ताभिमततत्त्वज्ञानविरोधादिदमेव ब्रह्मात्मैकत्वविज्ञानमतत्त्वज्ञानं किं न स्यात्? नचैवं श्रुतिविरोध: स्यादिति वाच्यम्; तद्विज्ञानस्य संपदादिरूपत्वेनापि श्रुत्युपपत्ते:। दृष्टानि हि श्रुतौ तादृशानि संपदादिलक्षणानि बहूनि विज्ञानानि। तथाहि—संपन्नाम यत्किंचिद्धर्मसामान्येनान्यस्य रूपं संपाद्य चिन्तनम्। तद्यथा—'अनन्तं वै मनोऽनन्ता विश्वे देवा:" इति मनसो विश्वदेवानां चानन्तत्वधर्मसामान्याद् मनसि विश्वदेवत्वं संपाद्य चिन्तनं विधीयते; एवं 'तत्त्वमसी"त्यादावपि चेतनत्वाधर्मसामान्यादात्मनि ब्रह्मत्वं संपाद्योपासनं

१. काठ. १/३/४।
२. श्वेता. ६/११।
३. ईशा. ८।
४. भाष्य-पृ.-१२५-१२८।
५. बृ.३-१-९।
६. छा. ३/१८-१।
७. छा.३/१९/१।

संपद्रूपं भविष्यति, अध्यासो वा भविष्यति। अध्यासो नाम स्वरूपातिरस्कारेणान्यस्मिन्नन्यतामारोप्य चिन्तनम्। तद्यथा—"मनो ब्रह्मेत्युपासीत," "आदित्यो ब्रह्मेत्यादेशः" इत्यादौ मन आदित्याद्यधिष्ठानरूपमतिरस्कृत्यैव तस्य ब्रह्मत्वेनानुचिन्तनम्। तद्वज्जैवं रूपमात्मनोऽतिरस्कृत्यैवाहं ब्रह्मास्मीति ब्रह्मत्वमारोप्य चिन्तनं भविष्यति। एतेनाध्याससंपदुपासनयोर्भेदो दर्शितः। यत्किञ्चिद्धर्मसामान्यापुरस्कारेणाधिष्ठानप्राधान्येनाध्यासः प्रवर्तते। यथा शालग्रामस्य यद्रूपं तदेव विष्णो रूपमिति। यत्किञ्चिद्धर्मसामान्यपुरस्कारेणाधिष्ठानरूपं तिरस्कृत्याधिष्ठेयरूपप्राधान्येन च संपत् प्रवर्तते, यथा विश्वे देवा एव मनः; उभयमनन्तगुणकमिति। विशिष्टक्रियायोगनिबन्धनं वा जीव ब्रह्माभेददर्शनं भविष्यति; यथा "वायुर्वाव संवर्गः"इत्यत्र विश्वसंवरणक्रियायोगाद्वायु-प्राणयोरभेदेनोपासनम्, तद्वज्जीवस्यापि स्वादृष्टद्वारा ब्रह्मवज्जगत्स्रष्टृत्वात् तादृशक्रियायोगेनाभेदेनोपासनं तयोरविरुद्धमिति। फलं न श्रुतमिति चेत्=अथैवं मन्यसे 'अनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति" इत्यादौ संपदाद्युपासने फलं स्वप्रकरणे श्रुतम्, नैवम्—'अहं ब्रह्मास्मी'त्युपासने फलं स्वयोग्यं किञ्चित्स्वप्रकरणे श्रुतम्; अतो व्यर्थाऽसावुपासनाकल्पनेति चेत्, न; स्वप्रकरणपठितार्थवादगतमोक्षफलसद्भावात्तदश्रवणासिद्धेः। तदयोग्यं तत्फलमिति चेत्, आह—भवेदर्थवादगतं फलं तस्य, यदि तद्योग्यं भवेत्, नचैवम्; क्रियाफलस्यानित्यत्वोक्तेः, मोक्षस्य नित्यत्वोक्तेश्चेति चेत्, एवं तर्हि विश्वजिन्न्यायेन फलं तद्योग्यं स्वर्गः कल्प्यताम्। अस्तु वाऽऽज्यावेक्षणन्यायेन क्रियाङ्गकर्तृसंस्कारो मदभिप्रेततत्त्वज्ञानाङ्गकर्तृसंस्कारो वा; यथा 'पत्न्यवेक्षितमाज्यं भवती''त्यत्र पत्न्यवेक्षणेन क्रियाङ्गमाज्यं संस्क्रियते, तथा 'ब्रह्माहमस्मी'त्युपासनाविज्ञानेन क्रियाङ्गं तत्त्वज्ञानाङ्गं वा कर्ता संस्क्रियत इति। तस्मान्नास्त्यार्षतत्त्वज्ञानस्य श्रुतिविरोधेनातत्त्वज्ञानत्वमिति।

अत एव, भामत्यामुक्तम्—"स्यादेतत्—नैकत्वविज्ञानं स्थितवस्तुविषयं, येन मिथ्याज्ञानं भेदावभासं निवर्तयन्न विधिविषयो भवेत्, अपितु संपदादिरूपम्। तथाच विधेः प्रागप्राप्तं पुरुषेच्छया कर्तव्यं सत् विधिगोचरो भविष्यति। यथा वृत्त्यनन्तत्वेन मनसो

विश्वेदेवसाम्याद्विश्वान्देवान्मनसि संपाद्य मन आलम्बनमविद्यमानसमं कृत्वा प्राधान्येन संपाद्यानां विश्वेषामेव देवानामनुचिन्तनं तेन चानन्तलोकप्राप्तिः। एवं चिद्रूपसाम्याज्जीवस्य ब्रह्मरूपतां संपाद्य जीवमालम्बनमविद्यमानसमं कृत्वा प्राधान्येन ब्रह्मानुचिन्तनं तेन चामृतत्वफलप्राप्तिः। अध्यासे त्वालम्बनस्यैव प्राधान्येनारोपिततद्भावस्यानुचिन्तनं, यथा 'मनो ब्रह्मेत्युपासीत्' 'आदित्यो ब्रह्मेत्यादेशः'। एवं जीवमब्रह्म ब्रह्मेत्युपासीत' इति। क्रियाविशेषयोगाद्वा, यथा 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः'। बाह्या खलु वायुदेवता वह्न्यादीन् संवृङ्क्ते। प्रायणकाले हि स एव सर्वाणीन्द्रियाणि संगृह्योत्क्रातीति। सेयं संवर्गदृष्टिर्वायौ प्राणे च दशाशागतं जगद्दर्शयति यथा, एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति। तदेतेषु त्रिष्वपि पक्षेष्वात्मदर्शनोपासनादयः प्रधानकर्माण्यपूर्वविषयत्वात्, स्तुतशस्त्रवत्। आत्मा तु द्रव्यं कर्मणि गुण इति संस्कारा वात्मनो दर्शनं विधीयते। यथा दर्शपूर्णमासप्रकरणे 'पत्न्यवेक्षितमाज्यं भवति' इति समाम्नातं, प्रकरणिना च गृहीतमुपांशु-यागाङ्गभूताज्यद्रव्यसंस्कारतयावेक्षणं गुणकर्म विधीयते, एवं कर्तृत्वेन क्रत्वङ्गभूते आत्मनि 'आत्मा वा अरे द्रष्टव्यः' इति दर्शनं गुणकर्म विधीयते। 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत'[१] इति न्यायादत आह—न चेदं ब्रह्मात्मैकत्वविज्ञानमिति। कुतः संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञान इति। दर्शपूर्णमासप्रकरणे हि समाम्नातमाज्यावेक्षणं तदङ्गभूताज्यसंस्कार इति युज्यते। नच 'आत्मा वा अरे द्रष्टव्यः' इत्यादि कस्यचित्प्रकरणे समाम्नातम्। नचानारभ्याधीमपि 'यस्य पर्णमयी जुहूर्भवति' इत्यव्यभिचरितक्रतुसंबन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वाक्येन यथा पर्णतायाः क्रतुशेषभावमापादयति, एवमात्माऽव्यभिचरितक्रतुसंबन्धः, येन तद्दर्शनं क्रत्वङ्गं सदात्मानं क्रत्वर्थं संस्कुर्यात्। तेन यद्ययं विधिस्तथापि 'सुवर्णं भार्यम्' इति वत् विनियोगभङ्गेन प्रधानकर्मैवापूर्वविषयत्वान्न गुणकर्मेति स्थवीयस्तयैतद्दूषणमनभिधाय सर्वपक्षसाधारणं दूषणमुक्तम्[२]।

१. जै. अ. २ पा.१ सू.८।

२. भामती-पृ.-१२२-१२४।

अत्र भामत्याम्—स्तुतशस्त्रवदित्युक्तम् । तस्यायंभाव: मीमांसाशास्त्रे भेदलक्षणे स्थितम्-स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्‌देवताभिधानत्वात्[१] ।

''आज्यै: स्तुवते''-''प्रउगं शंसति'' इति स्तुत-शस्त्रे समाम्नाते । आज्य प्रउगशब्दौ स्तोत्र-शस्त्रविशेषनाम्नी । प्रगीतमन्त्रसाध्यं देवतादिगुणसम्बन्धाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यं शस्त्रम् । ते किं देवताप्रकाशनाख्यसंस्कारार्थत्वेन गुणकर्मणी ? उतापूर्वार्थत्वेन प्रधानकर्मणी? इति संन्देहे—गुणसम्बन्धाभिधानाद् गुणिन्या देवताया अभिधानेन याज्यावत्क्रतूपयोगि-देवतास्मरणस्य दर्शनाद् गुणकर्मत्वे प्राप्ते—सिद्धान्त: ; ''अपि वा श्रुतिसंयोगात् प्रकरणे स्तौति-शंसति क्रियोत्पत्तिं विदध्याताम्'' । स्तुतिरिह विहिता श्रूयते—स्तौति-शसंति इति । स्तुतिश्च गुणाभिधानम्, न स्वरूपप्रकाशनम् यथा—'विशालवक्षा: क्षत्रिययुवे'ति । यत्राभिधानविवक्षा, न तत्र स्तुतिं प्रतीम:; यथा यो 'विशालवक्षा:, तमानये'ति । तस्मात् स्तौति-शंसति श्रौतार्थलाभाय प्रकरणेऽपूर्वोत्पत्तिं प्रति स्तात्र-शस्त्रे विदध्याताम्, इति स्त्रोत्र-शस्त्रे अपूर्वार्थत्वात् प्रधानकर्मणी, एवमिहात्मोपासनं प्रधानकर्म, आत्मा तु भूतो भव्यशेष इति । आत्मोपासनं प्रधानकर्मेत्युक्तम्, संप्रति संस्कारार्थत्वेन क्रत्वर्थत्वेन वाऽऽत्मदर्शनं गुणकर्म वा भवितुमर्हतीत्याह—संस्कारो वेति । तत्र दृष्टान्तमाह—यथेति । दार्ष्टान्तिकमाह—एवं कर्तृत्वेनेति । द्रव्यसंस्कारकस्य गुणकर्मत्वे जैमिनीयसूत्रमुदाहरति यैस्त्विति । यै:=अवघातादिभि:, द्रव्यं चिकीर्ष्यते=संस्कर्तुमिष्यते, गुणस्तत्र प्रतीयेत=तत्र द्रव्ये गुणभूतं कर्म प्रतीयेतेत्यर्थ: ।

एवं ब्रह्मज्ञानस्य सम्पदादिरूपत्वमाशङ्क्य भाष्यभामतीप्रबन्धेषु समाधानमुक्तम्—तत्र भाष्ये उक्तम्—''सम्पदादिरूपे हि ब्रह्मत्मैक्य विज्ञानेऽभ्युपगम्यमाने-------''[२] ।

भामतीग्रन्थ उदाहृत: । तत्र भामत्यामुक्तम्—सुवर्णं भार्यमिति वदिति । शेषलक्षणेऽभिहितम्—'अद्रव्यत्वात्तु शेष: स्यात्'[३] 'तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य

१. जै.२/१/१३ ।

२. भाष्य १२३ ।

३. जै.अ.३पा.४सू.२९ ।

भ्रातृव्यो भवती'त्यनारभ्याधीते संशयः—किं शोभनवर्णहिरण्यधारणं क्रत्वङ्गमुत पुरुषधर्मः इति। तत्र फलकल्पनाभयात्क्रतुनिवेशः दुर्वर्णु इत्यादि त्वेवंकामशब्दविरहान्न फलपरम्। नच सत्रवद्विपरिणामः, क्रत्वङ्गत्वेन गतिसंभवात्। तथा च वैदिककर्मत्वसाम्यादग्निहोत्रादि-प्रकरणनिवेश इति प्राप्ते—अद्रव्यत्वाद् द्रव्यदेवतासंबन्धराहित्यान्न स्वतन्त्रं कर्म, किंतु क्रतुशेष इति सूत्रार्थः। सिद्धान्तस्तु—'अप्रकरणे तु तद्धर्मस्ततो विशेषात्'[1]। तद्धर्मः पुरुषधर्म एवं जातीयकः। यतोऽप्रकरणेऽयमाम्नातः प्रकरणाधीतद्धर्माद्विशिष्यते। नचाहवनीये जुह्वतीति होमानुवादेनाहवनीयविधानवत्क्रत्वनुवादेन धारणं विहितं, येन साक्षाद्वाक्येन क्रतुसंबन्धि भवेत्। नाप्यव्यभिचारिक्रतुसंबन्धाश्रयद्वारा वाक्यात्पर्णमयीवत्क्रतुमुपनिपतेत्; सुवर्णधारणस्य लोकेऽपि विद्यमानत्वेन क्रत्वव्यभिचाराभावात्। तस्माद्विनियोगभङ्गेन हिरण्यसाधनकं धारणं वाक्यशेषगतफलाय विधीयते इति पुरुषधर्म इति। एवमिहाप्यात्मसाधनकदर्शनेनामृतत्वं भावयेदिति विधानात् प्रधानकर्मतैवेति। तस्यायं भावः[2]।

भाष्ये च तत्त्वमस्यादिवाक्यानां ब्रह्मात्मैकत्व प्रतिपादनपरः पदसमन्वयः पीड्येतेत्युक्तम्। सम्यगन्वयः समन्वयः तात्पर्यम्। भिद्यते हृदयग्रन्थिरित्यादौ अविद्यानिवृत्तिश्रवणोपरोधः स्यात्। ब्रह्मवेदब्रह्मैव भवतीत्यादौ ब्रह्मभवापत्ति र्विरुध्येत। एवञ्च ब्रह्मात्मैकत्वमविद्यानिवृत्तिः ब्रह्मप्राप्तिरिति त्रिधानुपपत्तिरुक्ता। तस्मान्न ब्रह्मविज्ञानस्य सम्पदादिरूपत्वम्।

**तत्त्वमसीत्यादिवाक्यानां ब्रह्मात्मैकत्वबोधनम्-**

**पदसमन्वयोपरोधः**-अयं भावः—एतानि हि "तत्त्वमसी"त्यादिनि वाक्यानि महावाक्यानि भवन्ति; सर्वेषामवान्तरपदार्थप्रतिपादकानां वाक्यानामेतदाकाङ्क्षयैतैरेक-वाक्यतापन्नत्वात्, यथा समिदादिवाक्यानां दर्श-पौर्णमासवाक्येन तदाकाङ्क्षयैकवाक्यता-पन्नत्वाद् भवति "दर्श-पौर्णमासाभ्यां यजेत स्वर्गकामः" इति वाक्यं तेषां महावाक्यमिति,

१. जै.अ.३पा.४सू.२६।

२. वेदान्तकल्पतरु-पृ.-१२४।

तद्वत् । तथाच सर्वोऽपि वेदान्तगतो ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमुदाय एतेषामेव "तत्त्वमसी"त्यादिमहावाक्यानां भ्ङ्गवतीत्यतो वस्तुप्रकाशकसर्ववेदान्तभागस्यापि पीडाऽनेन दर्शिता भवति । वस्तुग्रहणेनारोपितब्रह्मात्मैकत्वप्रतिपादनपरत्वं वारयति ।

कथं पुनः—"तत्त्वमसी"त्यादिवाक्यैकवाक्यतापन्नपदसमन्वयस्य ब्रह्मात्मैकत्व-प्रतिपादनपरत्वमवधार्यते? उपक्रमोपसंहारादिषड्विधलिङ्गादिति ब्रूमः । तथाचोक्तम्—
"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" ।।इति ।
तदेव हि लोके वेदे वाऽतत्परमित्युच्यते, योऽर्थो येन न विवक्ष्यते; यथा विषभोजनवाक्यम्, यथा वा वायुक्षेपिष्ठादिवाक्यम्; स्वार्थस्याविधित्सितत्वात् । विधित्सितत्वाविधित्सितत्वे एव हि विवक्षितत्वाविवक्षितत्वे इति मन्तव्यम् । एतच्च ग्रहाधिकरणवार्तिके सुविस्पष्टम् । विधित्सितत्वमप्यज्ञातज्ञापनमेवेत्यवधार्यम् । तथाच तत्प्रतीतिशेषत्वमेव लोकवेदसाधारणं तात्पर्यमुक्तं भवति । वक्ष्यमाणरीत्या प्रमाणान्तरसंवादाद्यभावो वा तात्पर्यमिथ्यन्यदेतत् ।

अविवक्षा तु तत्रैव भवति, यत्र प्रमाणान्तरसंवाद-विसंवादौ प्रयोजनाभावो वा, यत्र यद्वस्तु लोके वेदे वोपक्रम्य मध्ये वा परामृशन्ति, उपसंहरन्ति च, तत्र प्रमाणान्तरसंवादाविसंवादौ प्रयोजनाभावो वा नान्यतरोऽपि दृष्टः, यथा ज्वरितस्य कषायपानादौ, यथा वा स्वर्गकामस्य ज्योतिष्टोमादाविति स्वाभाविकप्रतिबन्धग्रहादुपक्रमोपसंहारौ भवति तात्पर्यस्य लिङ्गम् । एवमभ्यासादावपि । तत्रैव तदभावेन व्याप्तिर्द्रष्टव्या । न ह्यतात्पर्यविषयं वस्तु पुनः पुनः कथ्यते । न वा तदपूर्वम्, नापि फलवत्, नच श्रूयते, नापयुपपत्तिभिरुपपाद्यते, इति कुत्रचिल्लोके वेदे वा दृष्टचरमिति ।

उपक्रमोपसंहारयोस्तु नैकैकस्य तात्पर्यलिङ्गत्वम्; व्यभिचारात् । दर्श-पौर्णमासवाक्ये व्रतेनोपक्रम-दर्शनात्, छान्दोग्य-मुण्डकयोर्गार्हस्थ्याश्रमशिरोव्रताभ्यामुपसंहारदर्शनादिति । तथाचैकैकमप्येतेषां यत्रास्ति, तत्र नातात्पर्यं वक्तुं शक्यते, किमु वक्तव्यमेतानि लिङ्गानि यत्र संभूय वर्तन्त इति । वर्तन्ते चैतानि संभूय ब्रह्मणि श्रुतेस्तात्पर्यलिङ्गानि ।

